वृषका शुक्लवर्ण, मिथुनका हरितवर्ण, कर्कका पाटलवर्ण, सिंहका पाण्डुवर्ण, कन्याका विचित्रवर्ण, तुलाका कृष्णवर्ण, वृश्चिकका पिङ्गलवर्ण, धनका पिङ्गलवर्ण, मकरका कर्बुरवर्ण, कुम्भका बभ्रुकवर्ण और मीनका मलिनवर्ण है ॥ २६ ॥

अथ नवग्रहसंज्ञाकथनम् ।

रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः ।
राहुः केतुश्च कथितो मार्कण्डेयादिभिः पुरा ॥ २७ ॥

अर्थ-सूर्य, चन्द्र, मंगल, बुध, बृहस्पति, शुक्र, शनि, राहु और केतु यही नो ग्रह संज्ञक हैं, इस प्रकार मार्कण्डेय प्रभृति मुनिगणने कहा है ॥ २७ ॥

अथ ग्रहाणां विशेषसंज्ञाकथनम् ।

हेलिः सूर्य्यश्चन्द्रमाः शीतरश्मिः
हेम्ना विज्ज्ञो बोधनश्चेन्दुपुत्रः ।
आरो वक्रः क्रूरदृक्चावनेयः
कालो मन्दः सूर्यपुत्रोऽसितश्च ॥ २८ ॥
जीवोऽङ्गिराः सुरगुरुर्वचसांपतिज्यौ
शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च ॥
राहुस्तमोऽगुरसुरश्च शिखी च केतुः
पर्यायमन्यदुपलभ्य वदेच्च लोकात् ॥ २९ ॥ (भ)

अर्थ- अब ग्रहोंकी विशेषसंज्ञा कहते हैं, यथा, सूर्यका दूसरा नाम हेलि है चन्द्रका नाम शीतरश्मि है. बुधके नाम हेमन्, वित्, ज्ञ और इन्दुपुत्र है मंगलका नाम आर, वक्र, क्रूरदृक् और आवनेय है, शनिका नाम काल, मन्द, सूर्यपुत्र, और असित है, बृहस्पतिका नामान्तर जीव, आङ्गिरा, सुरुगुरु, वचसांपति, और इज्य है. शुक्रके नाम भृगु, भृगुसुत, सित और आस्फुजित् है, राहुका

---

—श्चाल्पशुक्लः विचित्रो नानावर्णः सितेतरः कृष्णवर्णः बभ्रुपिङ्गलो पिशङ्गौ । पिङ्गलश्चाग्निवर्णः स्वर्णवर्णश्चेति केचित् कर्बुरः शबलवर्णः बभ्रुकः कपिलवर्णः 'बभ्रुर्ना कपिले त्रिषु' इत्यमरः । मलिनः कृष्णवर्णः प्रयोजनन्तु हृतनष्टद्रव्यस्य वर्णज्ञानादि । इति ॥

(भ) श्लोकद्वयेन ग्रहसंज्ञामाह-हेलिरिति । हेलिः सूर्यस्य संज्ञा हेमन्शब्दो बुधस्य संज्ञा वचसांपतिरिज्यश्च लोकादन्यदपि पर्याय ज्ञात्वा वदेदिति ॥

नामान्तर तमः, अगु और असुर है और केतुका नाम शिखी है, इनके सिवाय और जो ग्रहगणके नाम हैं, उनको लोकपरम्पराके अनुसार जानो ॥२८॥२९॥

अथ ग्रहाणां जातिकथनम् ।

**ब्राह्मणौ शुक्रवागीशौ क्षत्रियौ भौमभास्करौ ।**
**वैश्यश्चन्द्रो बुधः शूद्रो म्लेच्छौ राहुशनैश्चरौ ॥ ३० ॥ ( म )**

अर्थ–अब ग्रहोंकी जाति वर्णन करते हैं । शुक्र और बृहस्पतिकी ब्राह्मण-जाति है, मंगल और रविकी क्षत्रियजाति है, चन्द्रकी वैश्यजाति है, बुधकी शूद्रजाति है और राहु शनैश्चरकी म्लेच्छजाति है ॥ ३० ॥

अथ ग्रहाणां वर्णकथनम् ।

**गौरवर्णो दिनाधीशो गौराश्चन्द्रेज्यभूमिजाः ।**
**श्यामलौ बुधशुक्रौ च कृष्णौ राहुशनैश्चरौ ॥ ३१ ॥**

अर्थ–अब ग्रहोंके वर्ण कीर्तन करते हैं–सूर्यग्रहका गौर वर्ण है, चन्द्र, गुरु और मंगल इनका भी गौर वर्ण है, इसी प्रकार बुध और शुक्रका श्यामल वर्ण है, राहु और शनैश्चरका कृष्ण वर्ण है और केतुका धूम्रवर्ण है ॥ ३१ ॥

अन्यच्च ।

**रक्तश्यामो भास्करो गौर इन्दु-**
**र्नात्युच्चाङ्गो रक्तगौरश्च वक्रः ।**
**दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः**
**श्यामः शुक्रो भास्करिः कृष्णदेहः ॥ ३२ ॥ ( य )**
**कृष्णवर्णो भवेद्राहुः केतुश्च धूम्रवर्णकः ॥**

अर्थ–ग्रन्थान्तरमें लिखा है कि, सूर्यका रक्त श्याम वर्ण है, चन्द्रका वर्ण गौर है, मंगलका अनुच्चाङ्ग और रक्त गौर वर्ण है, बुधका दूर्वाश्याम वर्ण है, बृहस्पतिका गौर वर्ण है, शुक्रका श्याम वर्ण है, राहु और शनैश्चरका कृष्ण वर्ण है ॥ ३२ ॥ और केतुका धूम्रवर्ण है ॥

अथ ग्रहाणां धातुकथनम् ।

**पित्ते प्रभाकरक्ष्माजौ श्लेष्माणौ चन्द्रभार्गवौ ।**

---

( म ) "चन्द्रो वैश्ये बुधः शूद्रे पतिर्मन्दोऽन्त्यजेजने " इतिदीपिकायां परार्द्धस्य पाठः।

( य ) ग्रहाणां वर्णमाह–रक्तश्याम इति । प्रयोजनन्तु दनष्टद्रव्यस्य रूपज्ञानादि इति ।

**ज्ञगुरू समधातू च पवनौ राहुमन्दगौ ॥ ३३ ॥**

अर्थ-रवि और मङ्गलकी पित्तप्रकृति है, चन्द्र और शुक्रकी श्लेष्मा प्रकृति है बुध और बृहस्पतिकी समधातु प्रकृति है, शनि और राहुकी वायु प्रकृति है॥३३॥

**मधुपिङ्गलदृक्चतुरस्रतनुः पित्तप्रकृतिः सवितालपकचः ।**
**तनुभृत्सुतनुर्बहुवातकफः प्राज्ञःशशी मृदुवाक्शुभदृक्॥३४॥**
**भूमिजस्तरुणमूर्त्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः ।**
**श्लिष्टवाक्सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिः ॥ ३५ ॥**
**बृहत्तनुः पिङ्गलमूर्द्धजेक्षणो बृहस्पतिःश्रेष्ठमतिः कफात्मकः**
**भृगुस्सुखीकांततनुःसुलोचनःकफानिलात्मा मितवक्रमूर्द्धजः३६॥**
**मन्दोऽलसः कपिलदृक्कृशदीर्घगात्रः**
**स्थूलद्विजः परुषरोमकचोऽनिलात्मा ॥ ३७ ॥**

अर्थ-सूर्यग्रहके पिङ्गल नेत्र हैं, चतुष्कोण है पित्तप्रकृति है और अल्पकेशों द्वारा युक्त है । चन्द्रग्रह स्त्रीसंज्ञक है, मृदुभाषी, प्राज्ञ है, वातकफाधिक्यप्रकृति है और सुन्दर नेत्र हैं, मंगलग्रहका नवीन अंग है, उदार चित्त है, पित्ताधिक्य शरीर है, चपल है, मध्यक्षीण है, श्लिष्टभाषी है और हास्यरस उनके लिये प्रिय है । बुधकी पित्त वायु और श्लेष्मा प्रकृति है, बृहत् शरीर है, पिंगल वर्ण नेत्र हैं और पिंगलवर्ण केशोंको धारण किये हैं । बृहस्पतिकी कफ प्रकृति है, और सुबुद्धिमान् है । शुक्र सुखी है, मनोरम कान्तिविशिष्ट हैं, उनके सुन्दर नेत्र हैं कफवायुप्रकृति है और ईषत् वक्र केशोंको धारण कियेहुए है । शनैश्चर अलसहै, उनके कपिल वर्णके समान नेत्र हैं, कपिलवर्ण केशोंको धारण किएहैं, कृश है, उनका दीर्घ शरीर है, बडे २ दांत हैं, वायुप्रकृति है, और वह रोम और केशों करके युक्त पुरुष हैं ॥ ३४-३७ ॥

इति धात्वधिपाः ।

अथ ग्रहाणां सत्त्वादिज्ञानम् ।

**चन्द्रार्कजीवा ज्ञसितौ कुजार्कीं**
**यथाक्रमं सत्त्वरजस्तमांसि ॥ ३८ ॥**

अर्थ-चन्द्र, रवि और बृहस्पति यह सत्त्वगुणयुक्त हैं, बुध और शुक्र रजोगुणविशिष्ट हैं मंगल और शनि तमोगुणयुक्त हैं ॥ ३८ ॥

अथ सामादिज्ञानम् ।

**साम्नो जीवः सभृगुतनयो दण्डनाथौ कुजार्कौ**
**दानेशेन्दुः शिखियमबुधाः सासुराभेदनाथाः ।**
**वीर्योपेतैरुपचयकरैर्लग्नगैः केन्द्रगैर्वा**
**तद्वृत्तिसिद्धिर्भवति तदहस्पांशकैर्वापि तेषाम् ॥ ३९ ॥**

अर्थ-कौन ग्रह किस नीतिका मालिक है अब उसको कहते हैं । बृहस्पति और शुक्र सामनीतिके मालिक हैं, मंगल और रवि दण्डनीतिके मालिक हैं, चन्द्र दान-नीतिका मालिक है, केतु, शनि, बुध और राहु भेदनीतिके मालिक हैं । बलवान् यह समस्त ग्रह जिस बालकके लग्नमें स्थित उपचयमें स्थित ( र ) या केन्द्रमें स्थित अथवा नवांशमें स्थित होवें तो उसके शरीरमें यह समस्त गुण अधिक होते हैं अर्थात् बृहस्पति या शुक्र लग्नादिमें रहनेसे जातबालक सामगुणविशिष्ट होता है, मंगल और रवि लग्नादि रहनेसे दण्डगुणविशिष्ट होता है ॥ ३९ ॥

अथ नृपादिज्ञानम् ।

**रविचन्द्रौ च राजानौ कुजो नेता बुधः शिशुः ।**
**सचिवौ गुरुशुक्रौ च प्रेष्यौ शनिभुजङ्गमौ ॥ ४० ॥**

अर्थ-रवि और चन्द्र राजा हैं, मंगल सेनापति है, बुध राजकुमार है, बृहस्पति और शुक्र राजमन्त्री है, शनि राहु और केतु प्रेष्य हैं ॥ ४० ॥

अथ पुरुषाद्यधिपकथनम् ।

**पुंसां सूर्यारवागीशा योषितां चन्द्रभार्गवौ ।**
**क्लीबानां बुधमन्दौ च पतयः परिकीर्त्तिताः ॥ ४१ ॥ ( ल )**

अर्थ-रवि, मंगल और बृहस्पति पुरुषग्रह हैं, चन्द्र और शुक्र स्त्रीग्रह हैं, बुध और शनैश्चर नपुंसकग्रह हैं ॥ ४१ ॥

अथ वेदाधिपकथनम् ।

**ऋग्वेदाधिपतिर्जीवो यजुर्वेदाधिपः सितः ।**
**सामवेदाधिपो भौमः शशिजोऽथर्ववेदराट् ॥ ४२ ॥ ( व )**

अर्थ-अब वेदाधिपतिका कीर्तन करते हैं । बृहस्पति ऋग्वेदका अधिपति है,

( र ) उपचयसंज्ञा और केन्द्रसंज्ञा यथोचित स्थानमें लिखीगई हैं।
( ल ) पुरुषाद्यधिपानाह-पुंसामिति । स्पष्टार्थमिति ।
( व ) वेदाधिपानाह-ऋग्वेदेति । स्पष्टार्थमिति ।

शुक्र यजुर्वेदका, मङ्गल सामवेदका और बुध अथर्ववेदका अधिपति ( मालिक ) है ॥ ४२ ॥

अथ रसाधिपज्ञानम् ।

**कटुलवणतिक्तमिश्रो मधुराम्लौ च कषायकोऽर्कतः ।**
**एते रसाः प्रिया भवन्ति सुखेऽर्काद्या वर्तमानाः सन्तः ॥ ४३ ॥**

अर्थ-रविग्रह कटुरसका आधिपति ( मालिक ) है, इसी प्रकार चन्द्र लवण रसका, मङ्गल तिक्तरसका, बुध मिश्ररसका, बृहस्पति मधुर रसका, शुक्र अम्ल रसका और शनि कषैले रसका मालिक है. इन समस्त ग्रहोंके मध्यमें अङ्ग (श) विभाग करनेसे बालकके जिस स्थानमें जो ग्रह पतित होवै और उस ग्रहको जो रसका प्रिय है, जात बालककेभी वह रस अधिक प्रिय होता है; यथा-रवि सुख स्थानमें रहनेसे कटु वस्तु प्रिय होती है और चन्द्र सुख स्थानमें रहनेसे लवणरस आहारमें अधिक प्रिय होता है ॥ ४३ ॥

अथ दिगधिपतिकथनम् ।

**सूर्यः शुक्रः क्षमापुत्रः सैंहिकेयः शनिः शशी ।**
**सौम्यस्त्रिदशमन्त्री च प्राच्यादिदिगधीश्वराः ॥ ४४ ॥ (प)**

अर्थ-अब दिशाओंके अधिपतियोंका वर्णन करते हैं-रवि पूर्वदिशाका मालिक है, इसी प्रकार शुक्र अग्निकोणका, मङ्गल दक्षिणका, राहु नैर्ऋत कोणका, शनि पश्चिमका, चन्द्र वायुकोणका, बुध उत्तरका और बृहस्पति ईशानकोणका मालिक है ॥ ४४ ॥

अथ ग्रहाणां मित्रादिकथनम् ।

**मित्राणि सूर्याच्छशिभौमजीवाः**
**सूर्येन्दुजौ सूर्यशशाङ्कजीवाः ।**
**आदित्यशुक्रौ रविचन्द्रभौमा**
**बुधार्कजौ चन्द्रजभार्गवौ च ॥ ४५ ॥ (स)**

अर्थ-अब ग्रहोंके मित्रगणको वर्णन करते हैं । यथा-रविके मित्र चन्द्र, मंगल और बृहस्पति है. इसी प्रकार चन्द्रका मित्र रवि और बुध है, मंगलका मित्र

(श) मेषादिद्वारा अङ्गविभाग लग्नप्रकरणमें वर्णित है ।

(प) पूर्वाद्यष्टदिशां पतीनाह-सूर्य इति । स्पष्टार्थमिति ।

(स) ग्रहाणां मित्राण्याह-मित्राणीति । सूर्य्यात्सूर्य्यादितः प्रथमादिभक्तिकथितानि यथाक्रमेण मित्राणि स्युः । यथा शशिभौमजीवाः रवेर्मित्र सूर्यबुधौ चन्द्रस्य सूर्यचन्द्रजीवाः कुजस्य रविशुक्रौ बुधस्य रविचन्द्रकुजाः गुरोः बुधशनी भृगोः बुधशुक्रौ शनेरिति । इति ॥

रवि, चन्द्र और बृहस्पति है. बुधका मित्र रवि और शुक्र है । बृहस्पतिके मित्र रवि,चन्द्र और मंगल हैं, शुक्रके मित्र बुध और शनि हैं । शनिके मित्र बुध और शुक्र हैं ॥ ४५ ॥

सितासितौ चन्द्रमसो न कश्चित्
बुधः शशी सौम्यसितौ रवीन्दू ।
रवीन्दुभौमा रवितस्त्वमित्रा
मित्रारिशेषश्च समः प्रदिष्टः ॥ ४६ ॥ ( ह )

इति शत्रुसमकथनम् ।

अर्थ—अब ग्रहोंके शत्रु और सम कहे जाते हैं—रविके शत्रु शुक्र और शनैश्चर हैं, चन्द्रका शत्रु कोई नहीं, मंगलका शत्रु बुध है, बुधका शत्रु चन्द्रमा है, बृहस्पतिके शत्रु बुध और शुक्र हैं शुक्रके शत्रु रवि और चन्द्र हैं और शनिके शत्रु रवि चन्द्र और मंगल हैं । मित्र और शत्रुके सिवाय और समस्त ग्रह ग्रहगणके सम कहलाते हैं ॥ ४६ ॥

अथ ग्रहाणां समकथनम् ।

सौम्योऽङ्गिराभौमसितासिताश्च
सितासितौ भूसुतसौरिजीवाः ।
सौरिः कुजेज्यौ वचसांपतिश्च
रव्यादितोऽमी समसंज्ञकाः स्युः ॥ ४७ ॥

अर्थ—रविके सम बुध है इसी प्रकार चन्द्रके सम बृहस्पति मंगल, शुक्र और शनि है मंगलके सम शुक्र और शनि हैं, बुधके सम मंगल शनि और बृहस्पति हैं, बृहस्पतिके सम शनि है, शुक्रके सम मङ्गल और बृहस्पति है और शनिके सम बृहस्पति हैं ॥ ४७ ॥

( ह ) शत्रूनाह–सितासितावित । रवितो रव्यादितः प्रथमाविभक्त्युदिता यथासंख्येन अमित्राः शत्रवः स्युः । शत्रुपर्यायोऽमित्रशब्दः पुल्लिङ्ग इति । रवेः शुक्रशनी शत्रू चंद्रस्य न कश्चित् शत्रुः कुजस्य बुधः बुधस्य चन्द्रः गुरोर्बुधशुक्रौ भृगोरवीन्दू शने रवीन्दुभौमा इत्यर्थः । मित्रारीणां शेषः समः प्रादिष्टः कथितः । यथा रवेर्बुधः समः इत्यादि । तथाच लघुजातके "शत्रूमन्दासितौ समश्च शशिजो मित्राणि शेषा रवेस्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषाः समाः शीतगोः । जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिः सितार्कौ समौ मित्रे सूर्यसितौ बुधस्य हिमगुः शत्रुः समाश्चापरे । गुरोः सौम्यसितावरी रविसुतो मध्योऽपरे त्वन्यथा सौम्यार्कौ सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी । शुक्रज्ञौ सुहृदौ समः सुरगुरुर्मन्दस्य चान्येऽरयः तत्काले च दशायबन्धुसहजस्वान्त्येषु मित्रं स्थितः ॥" इति ॥

अथ तात्कालिकमित्रादिकथनम् ।

**चतुर्थदशवित्तान्त्यत्रिलाभस्थाः परस्परम् ।**
**तत्कालमित्राण्युच्चस्थः कैश्चिदुक्तोऽन्यथा रिपुः ॥ ४८ ॥ (क्ष)**

अर्थ–अब ग्रहगणके तात्कालिकमित्र निरूपण करते हैं–यथा रविप्रभृति ग्रहगणके मध्यमें इनके चतुर्थ, दशम, द्वितीय, द्वादश, तृतीय और एकादश जो ग्रह होवें तो परस्पर उनकी तात्कालिक मित्रता होती है। जैसे कर्कराशिमें यदि रवि होवे तो उसके चतुर्थ तुला, दशम मेष, द्वितीय सिंह, द्वादश मिथुन, तृतीय कन्या और एकादश वृष इन सब राशियोंमें स्थित ग्रहगणकी कर्कस्थानमें स्थित रविके साथ तात्कालिक मित्रता होती है और तुंगस्थानमें स्थित ग्रहकीभी तात्कालिक मित्रता होती है इन सब ग्रहोंके सिवाय अपरापर समस्त ग्रह तात्कालिक शत्रु होते हैं ॥ ४८ ॥

अथ तात्कालिकशत्रुकथनम् ।

**जन्मपञ्चाङ्गसप्ताष्टनवमस्थाः परस्परम् ।**
**तत्कालशत्रवो ज्ञेयास्त्विति ज्योतिर्विदां मतम् ॥ ४९ ॥**

अर्थ–अब ग्रहगणके तात्कालिक शत्रु कीर्त्तन करतेहैं,यथा–जो ग्रह जिनके प्रथम (एक घरमें) अथवा पञ्चम, षष्ठ, सप्तम, अष्टम, वा नवम घरमें स्थित हों, उनकी परस्पर तात्कालिक शत्रुता होती है, जैसे कर्कराशिमें स्थित सूर्य प्रथम घर कर्क, पञ्चम घर वृश्चिक, षष्ठ घर धन, सप्तम घर मकर, अष्टम घर कुम्भ और नवम घर मीन इन सब राशियोंमें स्थित ग्रहोंकी कर्कराशिमें स्थित सूर्यके साथ तात्कालिक शत्रुता होती है ज्योतिषशास्त्रके जाननेवाले विद्वानोंने इस प्रकारसे कहाहै४९॥

अथाधिमित्रादिकथनम् ।

**हितसमरिपुसंज्ञा ये निसर्गे विरुक्ता**
**अधिहितहितमध्यास्तेऽपि तत्कालमित्रैः ।**

---

( क्ष ) तत्कालमित्रमाह–चतुर्थेति । चतुर्थदशमस्थौ द्वितीयद्वादशस्थौ तृतीयैकादशस्थौ अन्योऽन्यं तत्कालमित्रे भवतः । कैश्चिदिति बहुवचनेन बहुसम्मतत्वं दर्शितम् । उच्चस्थः स्वतुङ्गस्थो ग्रहः सर्वेषां मित्रमुक्तम् एतद्ग्रन्थकारस्य सम्मतम् । अन्यथा अनिमिषत्यादि श्लोके उच्चस्थस्य भृगोस्तात्कालिकशत्रुगृहस्थत्वेन त्रिभागहानौ सत्यां सम्पूर्णं परमायुर्न स्यादित्यर्थः। अन्यथा चतुर्थदशमादिव्यतिरिक्तस्थानस्थः शत्रुरित्यर्थः । इति ॥

रिपुसमसुहृदाख्या ये निसर्गोपदिष्टा
अधिरिपुरिपुमध्याः शत्रुभिश्चिन्तनीयाः ॥ ५० ॥ ( त्र )

अर्थ–अब आधिमित्रादि कीर्तन करते हैं–ग्रहोंके मध्यमें जो जिसका स्वाभाविक मित्र सम और शत्रु है; वह तात्कालिक मित्र होनेसे क्रमानुसार आधिमित्र, मित्र और सम होजाता है अर्थात् स्वाभाविक मित्र तात्कालिक मित्र होनेसे आधिमित्र स्वाभाविक सम तात्कालिक मित्र होनेसे मित्र, और स्वाभाविक शत्रु तात्कालिक मित्र होनेसे सम होता है और जिनको स्वाभाविक शत्रु सम और मित्र कहा है उनके तात्कालिक शत्रु होनेसे क्रमानुसार अधिशत्रु, शत्रु और सम जाने जाते हैं अर्थात् स्वाभाविक शत्रु तात्कालिक शत्रु होनेसे अधिशत्रु, स्वाभाविक सम तात्कालिक शत्रु होनेसे शत्रु और स्वाभाविक मित्र तात्कालिक शत्रु होनेसे सम होजाते हैं ॥ ५० ॥

अथ राहुकेत्वोर्मित्रादि ।

उच्चं नृयुग्मं घटभं त्रिकोणं कन्यागृहं शुक्रशनी च मित्रे ।
सूर्यः शशाङ्को धरणीसुतश्च राहो रिपुर्विंशतिकः परांशः ॥ ५१ ॥

अर्थ–अब राहु और केतुके मित्रादि वर्णन करते हैं यथा–राहुके उच्चस्थानकी मिथुन राशि है, मूलत्रिकोणकी कुम्भ राशि है, क्षेत्रकी कन्या राशि है, शुक्र और शनैश्चर मित्र हैं, सूर्य, चन्द्र और मंगल शत्रु हैं मिथुनके बीसभागका उच्चांश और कुम्भके बीस भागमें त्रिकोणांश होता है ॥ ५१ ॥

सिंहस्त्रिकोणं धनुरुच्चसंज्ञं मीनो गृहं शुक्रशनी विपक्षौ ॥
सूर्यारचन्द्राः सुहृदः समानौ जीवेन्दुजौ षड्शिखिनःपरांशाः॥५२॥

अर्थ–केतुका मूलत्रिकोण सिंहराशि है, उच्चस्थानकी धनराशि है, क्षेत्रकी मीन राशि है, शुक्र और शनि शत्रु हैं, सूर्य, मंगल और चन्द्र मित्र हैं बृहस्पति और बुध समहैं सिंहका षष्ठभाग त्रिकोणांश और धनुका षष्ठ भाग उच्चांश है ॥ ५२ ॥

( त्र ) आधिमित्रादिव्यवस्थामाह–हितेति । निसर्गे स्वभावे मित्रसमशत्रवो ये उक्तास्ते तत्कालमित्रैर्यथासंख्यम् आधिमित्रमित्रसमाः स्युः । यो निसर्गसुहृत् तत्कालमित्रत्वे सोऽधिमित्र यः समः स मित्रं यः शत्रुः स समः । एवञ्च निसर्गे ये रिपुसमसुहृद उक्तास्ते तत्कालशत्रुभिश्चतुर्थदशाद्रिव्यतिरिक्तस्थानस्थैर्यथासंख्यम् आधिशत्रुशत्रुसमाः स्युः । यो नैसर्गिकः शत्रुः स तत्कालशत्रुत्वे आधिशत्रुः यः समः स शत्रुः यः सुहृत्स सम इत्यर्थः । इति ॥

अथ ग्रहाणां पापसौम्यकथनम्।

**अर्द्धोनेन्द्वर्कसौराराः पापा ज्ञस्तैर्युतोऽपरे।**
**शुभाः पापौ तमःकेतू विष्णुधर्मोत्तरोदितौ ॥ ५३ ॥ (ज्ञ)**

अर्थ-अर्द्धचन्द्र, सूर्य, शनि, मंगल, पापयुक्त बुध, राहु और केतुको पापग्रह कहते हैं, पूर्णचन्द्र,पापरहित बुध,बृहस्पति और शुक्रको शुभग्रह कहतेहैं, विष्णुधर्मोत्तरग्रन्थमें इस प्रकार लिखाहै ॥ ५३ ॥

अथ ग्रहाणामृतुबलमाह।

**शनिशुक्रकुजेन्दुज्ञगुरवः शिशिरादिषु।**
**भवन्ति कालबलिनो ग्रीष्मे सूर्यस्तथैव च ॥ ५४ ॥ (क)**

अर्थ-अब ग्रहोंके ऋतुबल कीर्त्तन करते हैं यथा-शनि, शुक, मंगल, चन्द्र, बुध और बृहस्पति यह ग्रह क्रमानुसार शिशिरादि छहों ऋतुओंमें बलवान् होते हैं, अर्थात् शनि शिशिरमें,शुक्र वसन्तमें, मंगल,ग्रीष्ममें, चन्द्र वर्षामें, बुध शरत्कालमें और बृहस्पति हेमन्तमें बलवान् होते हैं और सूर्यभी ग्रीष्मकालमें बलवान् होताहै किन्तु इन समस्त ग्रहोंका बल पाद ( चौथाई ) मात्र होता है ॥५४॥

अथ चन्द्रबलकथनम्।

**( ख ) मासे तु शुक्ला प्रतिपत्प्रवृत्ते पूर्वे शशी मध्यबलो दशाहे।**
**श्रेष्ठो द्वितीयेऽल्पबलस्तृतीये सौम्यैस्तु दृष्टो बलवान्सदैव॥** यवनेश्वरः॥

इति यवनेश्वरः॥

अर्थ-शुक्लपक्षकी प्रतिपदासे शुक्ला दशमीपर्यन्त चन्द्र मध्यबली होता है, शुक्र पक्षकी एकादशीसे कृष्णपक्षकी पञ्चमीतक चन्द्र पूर्णबली होताहै और कृष्ण पक्षकी षष्ठीसे अमावस्यातक अल्पबली होता है; किन्तु शुभग्रहकी दृष्टि होनेसे सर्वदा बलवान् रहताहै ॥ ५५ ॥ इति चन्द्रबलकथनम्।

( ज्ञ ) ग्रहाणां पापशुभव्यवस्थामाह-अर्द्धोनेन्द्विति। अर्द्धोनश्चन्द्रो रविः शनिः कुजश्च पापाः तैः पापैर्युतो ज्ञो बुधः पाप इत्यर्थः। एतदितरेऽर्द्धाधिकश्चन्द्रो जीवशुक्रौ शुभयुक्तः केवलो वा बुधः शुभः तमःकेतू विष्णुधर्मोत्तरे पापावुक्तौ। अन्येषां मतेन च पापत्वं न च शुभत्वमनयोरित्यर्थः। इति॥

( क ) ऋतुबलमाह-शनीति। शिशिरादिषु षट्सु ऋतुषु यथासंख्यं शन्यादयो बलिनः सूर्यस्तु ग्रीष्मबली एतद्बलं तु एकपादमित्यर्थः। इति॥

( ख ) पक्षबले चन्द्रस्य विशेषमाह-मासे त्विति। शुक्लप्रतिपत्प्रवृत्ते चान्द्रे मासे पूर्वदशाहे शुक्लप्रतिपदादितःशुक्लदशमीपर्यन्त चन्द्रो मध्यबलः। द्वितीये दशाहे शुक्लदशम्याः कृष्णपञ्चमीपर्यन्त सम्पूर्णबलः। तृतीये दशाहे कृष्णपष्ठ्या अमावस्यापर्यन्तमल्पबलः। एतेन शुभवदनुपातविधिः पूर्वोक्तप्रकारेणेति चन्द्रस्य तु पक्षबलं यल्लभ्यते तद्द्विगुणं कार्यम्। तथाच " द्विघ्नं मानोरयनजबलं पक्षवीर्यं तथेन्दोः " इति॥ अत्र च शुभग्रहै दृष्टश्चन्द्रः सर्वदैव बलवानिति॥

अथ ग्रहाणां बलविशेषकथनम् ।

**स्वोच्चे स्थिताः श्रेष्ठबला भवन्ति मूलत्रिकोणे स्वगृहे च मध्याः ।**
**इष्टेक्षिता मित्रगृहाश्रिता वा वीर्यं कनीयः समुपावहन्ति ॥५६॥( ग)**

अर्थ-ग्रहगण उच्चस्थानमें स्थित होनेसे पूर्णबली होते हैं, मूलत्रिकोणमें रहनेसे त्रिपादबली और अपने गृह ( घर ) में रहनेसे अर्द्धबली होता है, और स्वग्रहकी दृष्टिसे वा मित्रगृहमें स्थित होनेसे पादबली होजाता है ॥ ५६ ॥

**स्वक्षेत्रे च बलं पूर्णं पादोनं मित्रमन्दिरे ।**
**अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहे स्थिते ॥ ५७ ॥**

अर्थ-ग्रहगण अपने घरमें रहनेसे पूर्णबली होते हैं, मित्रगृहमें स्थित होनेसे त्रिपादबली, समगृहमें रहनेसे अर्द्धबली और शत्रुके गृहमें स्थित होनेसे पादबली रहजाते हैं ॥ ५७ ॥

**परिपूर्णबलः सूच्चे सुनीचे त्वबलो ग्रहः ।**
**सूच्चसुनीचयोरन्तभागहोरात्फलं वदेत् ॥ ५८ ॥**

अर्थ-ग्रह उच्चस्थानमें रहनेसे पूर्णबली होते हैं और नीचस्थानमें रहनेसे बलहीन होजाते हैं, उच्च और नीचस्थानमें स्थित ग्रहोंका बलभाग होरासे जानाजाताहै ५८

**स्वक्षेत्रतुङ्गांशसुहृद्गृहस्थः स्वोच्चे विलासी सुहृदा समेतः ॥**
**जीवेन्दुजौ शत्रुनिरीक्षितौ वा ग्रहः स्वकाले शुभमातनोति५९॥**

अर्थ-ग्रहगण अपने स्थानमें स्थित होवे, तुंगस्थानमें स्थित हों मित्रके घरमें

---

( ग ) सामान्येनोक्तानां बलानां विशेषविभागमाह-स्वोच्चे स्थिता इति । उच्चस्था ग्रहाः श्रेष्ठबलिनः सम्पूर्णबलिन इत्यर्थः।किन्तु स्वोच्चराशेः सकाशात्सप्तमराशौ दशदशपलैर्हानिः । तथा सुनीचराशेः सकाशात्तु वृद्धिश्चानुपातेन ज्ञातव्या मूलत्रिकोणस्थाः स्वगृह इत्युपलक्षणं स्वगृहादिवर्गस्थाश्च बलिन इत्यर्थः । सामान्येनोक्तं विशेषस्त्वयं मूलत्रिकोणे पादोनं बलं स्वगृहादिवर्गेष्वर्द्धबलम् । तथाच " पादोनश्च बलं त्रिकोणगृहगे स्वर्क्षे बलञ्च त्रयो बलांशा ह्यधिमित्रभे च चरणौ मित्रे समर्क्षेऽष्टमः । शत्रुभे भवति षोडशांशकश्चाधिमित्रभवने द्वात्रिंशकः" इति । इष्टेक्षिताः शुभदृष्टाः मित्रगृहादिवर्गस्थाश्च कनीयोऽल्पबलं वहन्ति । तत्रायं विशेषः । यावती शुभदृष्टिस्तस्याश्चतुर्थांशं बलम् । एवञ्च यावती पापदृष्टिश्चतुर्थांशहानिर्बल कार्या । तथा च " सौम्यैर्दृष्टे दृष्टितुर्यांशयुक्तं वीर्यं पापालोकिते तद्विहीनम् " इति । तथा मित्रगृहादिवर्गे पादमात्रं बलम् एतदुपलक्षणं समगृहे विषमगृहे च पादः स्त्रीनपुंसकगृहेषु मनुष्यान्त्यमध्यस्थितेषु पादमात्रं बलं शुभयोगेऽपि पादमात्रं बलम् । तथाच " युग्मराशिगतौ शशिशुक्रौ पञ्चमो हि बलपादमयुग्मे । भास्करेज्यकुजेन्दुजसौरा-श्चान्यदेव वितरन्ति हि सत्पम् ॥ भानुमध्यमुखगेषु च पादः स्त्रीनपुंसकनरेषु विभेदः । द्रेष्काणप्रागतेषु नियोग्याद्रूपरार्द्धदलं निनर्दीयम् " इति ॥

स्थित हों, या उच्चस्थानमें स्थित हों अथवा मित्रयुक्त होवें तो शुभफल प्रदान करते हैं, बृहस्पति और बुध शत्रुकी दृष्टि होनेसेभी शुभफल प्रदान करते हैं ॥५९॥

**गुरुशुक्रौ पूर्णचन्द्रः सुखदाः परिकीर्त्तिताः।**
**बुधचन्द्रौ समौ साध्यौ शेषाः शत्रव ईरिताः ॥ ६० ॥**

अर्थ-बृहस्पति, शुक्र और चन्द्र अत्यन्त श्रेष्ठ हैं, बुध और चन्द्र सम हैं और सब ग्रह हीनभावापन्न हैं ॥ ६० ॥

**मूलत्रिकोणे बाणाङ्घ्री तदर्द्धमधिमित्रके।**
**स्वगृहे स्याद्दलं त्रिंशत्तदर्द्धं मित्रमन्दिरे ॥ ६१ ॥**
**तदर्द्धं समराशौ स्यात्तदर्द्धं शत्रुमन्दिरे।**
**तदर्द्धमधिशत्रौ स्याद्ग्राह्यं तत्सप्तवर्गजम् ॥ ६२ ॥**

अर्थ-मूलत्रिकोणमें ग्रहोंके स्थित होनेसे त्रिपाद बली होतेहैं, अधिमित्रगृहमें स्थित होनेसे त्रिपादका अर्द्धबल रहताहै। अपने गृहमें रहनेसे अर्द्धबल होताहै और मित्रके गृहमें स्थित होनेसे तदर्द्ध ( पाद ) बल रहताहै समगृहमें रहनेसे पादार्द्ध बल होताहै, शत्रुके घरमें स्थित होनेसे पादपाद बल होताहै और अधिशत्रुके घरमें रहनेसे उसके अर्द्ध बलकी समान बल रहजाताहै इसी प्रकार सप्तवर्गज बलको विचारना चाहिये ॥ ६१ ॥ ६२ ॥

**युग्मभांशगतौ चन्द्रशुक्रौ बाणेन्दुवीर्यदौ।**
**अयुग्मभांशगा अन्ये तावन्त एव वीर्यदाः ॥ ६३ ॥**

अर्थ-सम राशिमें स्थित चन्द्र और शुक्र पाद बली होते हैं और विषमराशिमें स्थित अन्य समस्तग्रह भी पादबली होजाते हैं ॥ ६३ ॥

**आदिमध्यान्तराभांशैः पुंपण्ढस्त्रीग्रहा अपि।**
**केन्द्रादिस्थग्रहस्यौजः पञ्चत्रिंशत्तिथिक्रमात् ॥ ६४ ॥**

अर्थ-राशिको तीन भाग करके प्रथम द्रेक्काणमें पुंग्रह ( सूर्य, मङ्गल और बृहस्पति ) पूर्णबली होतेहैं, मध्यद्रेक्काणमें पण्ढग्रह ( बुध और शनि ) अर्द्धबली और शेष द्रेक्काणमें स्त्रीग्रह ( चन्द्र और शुक्र ) पादबली होतेहैं, केन्द्रादिस्थानमें स्थित ग्रहोंकोभी इसी प्रकारसे जानो ॥ ६४ ॥

अथ मूलत्रिकोणकथनम्।

**सिंहो वृषश्च मेषश्च कन्या धन्वी घटो घटः।**

**अर्कादीनां त्रिकोणानि मूलानि राशयः क्रमात् ॥ ६५ ॥ ( घ )**

अर्थ–अब सूर्यप्रभृतिके मूलत्रिकोणको कहते हैं । सूर्यकी सिंहराशि, चन्द्रकी वृषराशि, मङ्गलकी मेषराशि, बुधकी कन्याराशि, बृहस्पतिकी धनराशि, शुक्रकी तुलाराशि और शनैश्चरकी कुम्भराशिको मूलत्रिकोण कहाहै ॥ ६५ ॥

अन्यच्च ।

**सिंहवृषाजप्रमदाकार्मुकभृत्तौलिकुम्भधराः ।**
**सूर्यादीनां मूलत्रिकोणभवनान्यनुक्रमशः ॥ ६६ ॥**

अर्थ–सिंह, वृष, मेष, कन्या, धन, तुला और कुम्भराशिको क्रमानुसार सूर्यादिसप्तग्रहोंके मूलत्रिकोण कहते हैं ॥ ६६ ॥

अथ मूलत्रिकोणांशकथनम् ।

**रविभौमजीवभार्गवशनैश्चराणां त्रिकोणभागाः स्युः ।**
**नखरविदिक्तिथिनखरा इन्द्वोर्दिग्भांशकाः सूच्चात् ॥ ६७ ॥ ( ङ )**

अर्थ–सूर्यादि सप्तग्रहके सिंहादि सप्तराशि मूलत्रिकोण होनेसेभी सिंहराशिके बीस अंश सूर्यके, मेष राशिके १२ अंश मंगलके, धन राशिके दश अंश बृहस्पतिके, तुलाराशिके पन्द्रह अंश शुक्रके, और कुम्भराशिके बीस अंश शनैश्चरके मूलत्रिकोणांश हैं, बुध और चन्द्रके मूलत्रिकोणांशमें इतनाही विशेष है कि बुधके स्वोच्चांशके बाद दश अंश और चन्द्रके सूच्चांशके बाद सत्ताईस अंश मूलत्रिकोणांश हैं ॥ ६७ ॥

---

( घ ) यथाक्रम सूर्यादीनां मूलत्रिकोणस्थानान्याह–सिंहेति । स्पष्टार्थमिति ।

( ङ ) अंशविभागमाह–रवीति। यथाक्रम रव्यादीनां नखादयो मूलत्रिकोणांशाः स्युः । बुधचन्द्रयोः पुनः सूच्चात् परमोच्चात् यथासंख्य दशांशाः सप्तविंशतिरंशाश्च मूलत्रिकोणभागाः यथा रवेः सिंहे विंशत्यंशाः मूलत्रिकोणभागाः चन्द्रस्य वृषे प्रथमभागत्रयादूर्ध्वं सप्तविंशतिभागपर्यन्तं कुजस्य मेषे द्वादशांशाः बुधस्य कन्यायां पञ्चदशांशादूर्ध्वं पञ्चविंशत्यंश पर्यन्तम् । गुरोर्धनुषि दशांशाःशुक्रस्य तुलायां पञ्चदशांशाः शनेः कुम्भे विंशत्यंशा इति । अत्र च सौमरि' सिंहे विंशत्यंशा मूलत्रिकोण ततः परदशांशा एव स्वगृहाणि एवमन्येषामपि प्रल्पति तद्धेयम् । नहि संज्ञाया संज्ञान्तरं व्यध्यते अन्यथा सिंहे विंशत्यंशाभ्यन्तरे स्थितस्य रवेः परमायुषो द्विगुणत्वं न स्यात् स्वगृहत्वाभावात् यद्वा राश्याधिपत्यमेव ग्रहाणां युक्तं न तु तदंशाधिपत्यं तथा च सर्वत्रैवाभेदेन प्रयोगो दृश्यते । यथा बृहज्जातके राशिशीलनिरूपणे " विक्रान्तः स्थिरधीः सुगर्वितमना मातुर्विधेयोऽर्भकः" इत्यनेनार्भकत्व प्रतिपाद्य समस्तस्यैव सिंहराशेः शीलत्वमुक्तं यथा मूलत्रिकोणांशानां स्वगृहत्वाभावे सति तेषां षड्वर्गा न स्यात् । अभिप्रायेन क्षेत्रगणाभावादिति ॥

अथ तुंगादिकथनम् ।

**सूर्यादुच्चात्क्रियवृषमृगस्त्रीकुलीरान्त्ययूके**
**दिग्वह्नीन्द्रद्वयतिथिशरान्सप्तविंशांश्च विंशान् ।**
**अंशानेतान्वदति यवनश्चान्त्यतुङ्गान्सुतुङ्गान्**
**तानेवांशान्मदनभवनेष्वाह नीचान्सुनीचान् ॥ ६८ ॥ (च)**

अर्थ-सूर्यादिग्रहोंके तुंगस्थान कहते हैं, मेषादि सप्त राशिके दशमादि अंशको सूर्यादि सप्तग्रहोंके उच्च और परमोच्च स्थान यवनमुनिने कहाहै । दशमादिअंशके शेषांशकोही सुतुंग कहते हैं उसको अब क्रमानुसार कहते हैं. यथा; मेषराशिके दशांशको सूर्यका उच्चस्थान ओर दशांशके शेषांश ( दशमांश )को परमोच्चस्थान कहते हैं, वृषराशिके तीन अंशको चन्द्रका उच्चस्थान और तृतीयांश अर्थात् परमांशको परमोच्चस्थान सूच्चस्थान कहते हैं । मकरराशिके अठारह अंशको मंगलका उच्चस्थान और अठारह अंशके शेषांशको परमोच्च स्थान कहतेहैं । कन्याराशिके पन्द्रह अंशको बुधका उच्चस्थान और पन्द्रह अंशके शेषांशको परमोच्चस्थान कहते हैं कर्कराशिके पांच अंशको बृहस्पतिका उच्चस्थान और पांच अंशके शेषांशको सूच्चस्थान कहते हैं । मीनराशिके सत्ताईस अंशको शुक्रका उच्चस्थान और सत्ताईस अंशके शेषांशको परमोच्चस्थान कहते हैं, तुलाराशिके बीस अंशको शनैश्चरका उच्चस्थान और बीस अंशके अपरशेषांशको परमोच्चस्थान कहते हैं । मेषादि सप्त राशियोंकी जो सप्तम राशि है उसके दशमादि अंशको सूर्यादि सप्त ग्रहके नीच और सुनीचस्थान कहते हैं अर्थात् मेषकी सप्तम तुला राशि है उसके दश अंशको सूर्यका नीचस्थान और दश अंशके अपर शेषांशको सुनीच वा परमनीच स्थान कहते हैं वृषराशिके सप्तम वृश्चिक राशि है उसके तीन अंशको चन्द्रका नीचस्थान और तीन अंशके अपर शेषांशको सुनीचस्थान कहते

---

( च ) उच्चनीचानाह-सूर्यादिति । क्रियादिराशिषु यथासंख्यं दिगाद्यंशान् । यवनाचार्यः सूर्यादीनामुच्चान् उच्चसंज्ञकान् वदति अन्त्यतुङ्गांश्च सुतुङ्गान् वदति । तुङ्गांशानां मध्ये योऽन्त्योंऽशः स तुङ्ग इत्यर्थः । एतदुक्तं भवति रवेर्मेषराशौ दशांशा उच्चाः दशमांशः परमोच्चः चन्द्रस्य वृषे त्र्यंशाः उच्चाः तृतीयोंऽशः सूच्चः मङ्गलस्य मकरे इन्द्रद्वयमष्टाविंशतिरंशा उच्चाः अष्टाविंशतिपूर्णोंऽशः सूच्चः । एवं बुधस्य कन्यायां पञ्चदशांशाः गुरोः कर्कटे पञ्चांशाः शुक्रस्य मीने सप्तविंशतिरंशाः शनेस्तुलायां विंशत्यंशाः-सर्वेषामन्त्योंऽशः सुतङ्ग इत्यर्थः । मेषादीनां तुङ्गानां मदनभवने सप्तमस्थाने यथाक्रमं तानेव दिगाद्यंशान् सूर्यादीनां नीचान् सुनीचानाह-यथा तुलायां दशांशा रवेर्नीचा दशमोंऽशः परमनीच इत्यादि । नवांशविभागस्तु त्रिंशांशस्फुटादेव ज्ञातव्य इति ।

हैं मकरराशिके सप्तम कर्क राशि है उसके अट्ठाईस अंशको मंगलका नीचस्थान और अट्ठाईस अंशके अपर शेषांशको परमनीच स्थान कहते हैं कन्याराशिके सप्तम मीन राशि है उसके पन्द्रह अंशको बुधका नीचस्थान और पन्द्रह अंशके अपर शेषांशको सुनीचस्थान कहते हैं. कर्कराशिके सप्तम मकर राशि है उसके पांच अंशको बृहस्पतिका नीचस्थान और पांच अंशके अपर शेषांशको सुनीचस्थान कहते हैं । मीनराशिके सप्तम कन्या राशि है उसके सत्ताईस अंशको शुक्रका नीचस्थान और सत्ताईस अंशके अपर शेषांशको सुनीचस्थान कहते हैं तुलाराशिके सप्तम मेषराशि है उसके बीस अंशको शनैश्चरका नीचस्थान और बीस अंशके अपर शेषांशको परमनीच स्थान कहते हैं इस समस्त अंशभागको त्रिंशांश कहलेना चाहिये ॥ ६८ ॥

अन्यच्च ।

मेषो वृषो मृगः कन्या कर्किमीनतुलाधराः ।
भास्करादेर्भवन्त्युच्चा राशयः क्रमशस्त्विमे ॥ ६९ ॥

अर्थ-ग्रन्थान्तरमें उच्चसंज्ञा इस प्रकारसे वर्णित है । मेष, वृष, मकर, कन्या, कर्क, मीन और तुलाराशिको क्रमानुसार सूर्य, चन्द्र, मंगल, बुध, बृहस्पति, शुक्र और शनैश्चर आदिका उच्चस्थान कहते हैं ॥ ६९ ॥

त्रिंशद्भागे दिशो रामा अष्टाविंशस्तिथिस्तथा ।
पञ्च वै सप्तविंशच्च विंशतिः सूच्चसंज्ञकाः ॥ ७० ॥

अर्थ-राशिके तीस अंश करके दशम अंश, तृतीय अंश, अट्ठाईस अंश, पन्द्रह अंश, पांच अंश, सत्ताईस अंश और बीस अंशको सूर्यादि सप्त ग्रहोंके सूच्च स्थान जानो ॥ ७० ॥

सूच्चाच्च सप्तमं नीचं प्राग्वद्भागैर्विनिर्दिशेत् ।
उच्चान्तः सूच्चसंज्ञः स्यान्नीचान्तस्तु सुनीचकः ॥ ७१ ॥

अर्थ-पूर्वोक्त दशमादि अंशको क्रमानुसार उच्चस्थान और उसके सप्तम राशिको नीच स्थान जानो, और उच्चांशके शेषांशका नाम सूच्चस्थान और नीचांशके शेषांशको सुनीच स्थान कहते हैं ॥ ७१ ॥

अपरञ्च ।

दशांशके रविर्मेषे त्र्यंशे च चन्द्रमा वृषे ।
अष्टाविंशत्यंशके तु मकरे भूमिनन्दनः ॥ ७२ ॥
बुधः स्त्रियां तिथिमाने पञ्चांशे कर्कटे गुरुः ।
सप्तविंशत्यंशके तु भृगुर्मीने उदाहृतः ॥ ७३ ॥

विंशत्यंशे शनिर्यूके सुतुङ्गस्तुङ्गसंज्ञकः।
सप्तमे तु पुनः सर्वे सुनीचनीचसंज्ञकाः॥ ७४॥

अर्थ-ग्रन्थान्तरमें ग्रहोंकी सुतुङ्ग, तुंग, सुनीच और नीचसंज्ञा इस प्रकारसे कही है यथा, सूर्य मेषके दश अंशमें, चन्द्र वृषके तीन अंशमें, मंगल मकरके अट्ठाईस अंशमें, बुध कन्याके पन्द्रह अंशमें, बृहस्पति कर्कके पांच अंशमें, शुक्र मीनके सत्ताईस अंशमें और शनैश्चर तुलाके बीस अंशमें सुतुंग और तुंगसंज्ञक होते हैं और इन समस्त राशियोंके सप्तमस्थानमें कहेहुए अंशोंमें सूर्यादि सब ग्रहोंकी सुनीच और नीचसंज्ञा होती है॥ ७२॥ ७३॥ ७४॥

अथ ग्रहदृष्टिकथनम्।

त्रिदशे च त्रिकोणे च चतुरस्रे च सप्तमे।
पादवृद्ध्या हि सर्वेषां ग्रहाणां दृष्टिरुच्यते॥ ७५॥

इति जातकचन्द्रिकायाम्।

अर्थ-अब ग्रहोंकी दृष्टि कीर्त्तन करते हैं। जिस स्थानमें ग्रह स्थित हों उसके तृतीयस्थानमें, दशमस्थानमें, नवमस्थानमें पञ्चमस्थानमें, चतुर्थ स्थानमें, अष्टम स्थानमें और सप्तम स्थानमें क्रमानुसार एक २ पादवृद्धिसे दृष्टि होती है॥ ७५॥

पाददृष्टिस्त्रिदशके अर्द्धदृष्टिस्त्रिकोणके॥
पादोना चतुरस्रे स्यात्पूर्णदृष्टिश्च सप्तमे॥ ७६॥

इति ज्योतिषसारे।

अर्थ-ज्योतिषसारमें लिखा है कि, तृतीय और दशम स्थानमें ग्रहोंकी पाद (चौथाई) दृष्टि होती है। पञ्चम और नवम स्थानमें अर्द्धदृष्टि, चतुर्थ और अष्टम स्थानमें त्रिपाददृष्टि और सप्तमस्थानमें ग्रहोंकी पूर्ण दृष्टि होती है॥ ७६॥

तृतीये दशमे चैव पाददृष्टिरुदाहृता।
अर्द्धदृष्टिश्च नवमे पञ्चमे परिकीर्त्तिता॥ ७७॥
चतुर्थे चाष्टमे चैव पादोना परिकीर्त्तिता।
सप्तमे परिपूर्णा च फलमेवं प्रकल्पयेत्॥ ७८॥

इति जातकचन्द्रिकायाम्।

अर्थ-साधारणग्रहोंकी तृतीय और दशम स्थानमें एकपाददृष्टि होती है, नवम और पञ्चम स्थानमें अर्द्धदृष्टि होती है, चतुर्थ और अष्टम स्थानमें त्रिपाद दृष्टि होती है और सप्तम स्थानमें ग्रहोंकी पूर्ण दृष्टि होती है, फलाफल इसी प्रकारसे देखना चाहिये ऐसा जातकचन्द्रिकामें लिखा है॥ ७७॥ ७८॥

त्रिदशत्रिकोणचतुरस्रसप्तमा-
नवलोकयन्ति चरणाभिवर्द्धिताः ।
रविजामरेज्यरुधिराः परे च ये
क्रमशो भवन्ति किल वीक्षणेऽधिकाः ॥ ७९ ॥ (छ)

इति दीपिकायाम् ।

अर्थ-तृतीय और दशम स्थानमें नवम और पञ्चम स्थानमें, चतुर्थ और अष्टम स्थानमें और सप्तम स्थानमें एक एक पाद क्रमानुसार वृद्धिमे ग्रहोंकी दृष्टि होती है, किन्तु तृतीय और दशमस्थानमें शनैश्चरकी पूर्ण दृष्टि होती है, नवम और पञ्चमस्थानमें बृहस्पतिकी पूर्ण दृष्टि होती है, चतुर्थ और अष्टमस्थानमें मंगलकी पूर्ण दृष्टि होती है और सप्तमस्थानमें सूर्य, चन्द्र, बुध, शुक्र, शनि, बृहस्पति और मंगलकी भी पूर्ण दृष्टि होती है ॥ ७९ ॥

पादं पश्यति खेचरस्त्रिदशभे पञ्चाङ्कभे तु द्वयं
पादोनं चतुरस्रभे मदगृहे पूर्णं विशेषस्त्वयम् ।
पादे पादचतुष्टयं रविसुतः पादद्वये गीष्पतिः
पादोनेऽवनिजः परन्तु परतस्त्वन्यत्र दृष्टिः क्वचित् ॥८०॥(ज)

इति जातकचन्द्रिकायाम् ।

अर्थ-जातकचन्द्रिकामें लिखा है कि, ग्रहोंकी तृतीय और दशमस्थानमें एक पाद दृष्टि होती है इसी प्रकार पञ्चम और नवमस्थानमें अर्द्धदृष्टि चतुर्थ और अष्टमस्थानमें त्रिपाद दृष्टि और सप्तमस्थानमें पूर्ण दृष्टि होती है, किन्तु इनके मध्यमें विशेष यही है कि, तृतीय और दशमस्थानमें शनिकी पूर्ण दृष्टि होती है, पाददृष्टि नहीं होती, पञ्चम और नवमस्थानमें बृहस्पतिकी पूर्ण दृष्टि होती है, अर्द्धदृष्टि नहीं होती । चतुर्थ और अष्टम स्थानमें मंगलकी पूर्णदृष्टि होती है

( छ ) ग्रहाणां दृष्टिमाह-त्रिदशेति । अधिष्ठितराशितस्त्राशात् त्रिदशौ तृतीयदशमौ सर्वे ग्रहाः पादेन चतुर्थभागेनावलोकयन्ति । त्रिकोणं नवपञ्चमं पादद्वयेन चतुरस्रं चतुर्थाष्टमौ पादत्रयेण सप्तम राशिं चतुर्भिः पादैरवलोकयन्ति सर्वे ग्रहाः नान्यानि स्थानानि । तत्र विशेषमाह-रविजेति । अमरेज्यो देवपूज्यो गुरुरित्यर्थः । किल निश्चितं शनिगुरुभौमाः एतदन्ये ग्रहाश्च यथासंख्यं त्रिदशत्रिकोणचतुरस्रसप्तमेषु दर्शनेऽधिकाः अधिकदर्शिनः सम्पूर्णदर्शिन इत्यर्थः । शनिस्त्रिदशे सम्पूर्णं पश्यति जीवस्त्रिकोणे भौमश्चतुरस्रेऽपरे रवि-चन्द्रबुधशुक्राश्चत्वारः शनिजीवभौमाः सप्तमे सम्पूर्णं पश्यन्तीत्यर्थः । तथाच सारावल्याम्-"पूर्णं पश्यति रविजस्तृतीयदशमे त्रिकोणमपि जीवः । चतुरस्रं भूमिसुतो भृग्वर्क-बुधहिमकराः कलत्रञ्च" इति ॥

( ज ) "नवमं पञ्चमञ्चैव त्रिकोणं परिकीर्तितम् । चतुर्थमष्टमञ्चैव चतुरस्रं विदुर्बुधाः ॥"

त्रिपाद दृष्टि नहीं होती, अन्यान्यस्थानोंमें अपर ग्रहोंकी समान दृष्टि होती है किन्तु उपरोक्त स्थानोंके सिवाय और स्थानोंमें ग्रहोंकी दृष्टि नहीं होनी है॥८०॥

तृतीयदशमावर्किः पश्यन्पूर्णफलप्रदः।
त्रिकोणकान्गुरुश्चैव चतुर्थाष्टमगान्कुजः ॥ ८१ ॥

इति सत्कृत्यमुक्तावल्याम्।

अर्थ-सत्कृत्यमुक्तावलीमें लिखा है कि, शनैश्चरकी तृतीय और दशमस्थानमें दृष्टि होनेसे पूर्ण फल होता है, इसी प्रकार बृहस्पतिकी पञ्चम और नवमस्थानमें दृष्टि होनेसे पूर्ण फल होता है और मंगलकी चतुर्थ और अष्टमस्थानमें दृष्टि होनेसे पूर्णफल होता है ॥ ८१ ॥

अथ ग्रहाणामदृष्टिकथनम्।

स्वस्थानञ्च द्वितीयञ्च षष्ठमेकादशं तथा।
द्वादशञ्च न पश्यन्ति शेषान्पश्यन्ति ते ग्रहाः ॥ ८२ ॥

इति जातकचन्द्रिकायाम्।

अर्थ-जातकचान्द्रिकामें लिखा है कि, जिस २ स्थानमें ग्रहोंकी दृष्टि नहीं होती है उसको कीर्त्तन करते हैं। जिस स्थानमें ग्रह स्थित हों उस स्थानमें और द्वितीय स्थानमें छठे स्थानमें, एकादश स्थानमें और द्वादश स्थानमें ग्रहोंकी कभी भी दृष्टि नहीं होती और अन्य स्थानोंमें पूर्वोक्तके समान दृष्टि होती है ॥८२ ॥

अथ राहोर्दृष्टिकथनम्।

सुतमदननवान्त्ये पूर्णदृष्टिः सुरारे-
र्युगलदशमराशौ दृष्टिमात्रत्रयाहः।
सहजरिपुचतुर्थेष्वष्टमे चार्द्धदृष्टिः
स्थितिभवनमुपान्त्यं नैव दृश्यं हि राहोः ॥ ८३ ॥

इति सत्कृत्यमुक्तावल्याम्।

अर्थ-सत्कृत्यमुक्तावलीमें राहुकी दृष्टि इस प्रकारसे कही है कि; राहु जिस स्थानमें स्थित हो उसके वामादिक्रमसे पञ्चम, सप्तम, नवम और द्वादश स्थानमें पूर्णदृष्टि होती है, द्वितीय और दशम स्थानमें त्रिपाददृष्टि होती है और तृतीय, षष्ठ चतुर्थ और अष्टम स्थानमें अर्द्धदृष्टि होती है, किन्तु यह जिस स्थानमें होवे उस स्थानमें और एकादशस्थानमें राहुकी दृष्टि नहीं होती है ॥ ८३ ॥

अथ नक्षत्रकथनम्।

अश्विनी भरणी चैव कृत्तिका रोहिणी तथा।
मृगशिरास्तथा चार्द्रा पुनर्वसुकपुष्यकौ ॥ ८४ ॥

आश्लेषा च मघा चैव पूर्वाफाल्गुन्युत्तरफाल्गुनी ।
हस्ता चित्रा तथा स्वाती विशाखा चानुराधिका ॥ ८५ ॥
ज्येष्ठा मूला पूर्वाषाढोत्तरा च श्रवणा तथा ।
धनिष्ठा शतभिषा चैव पूर्वाभाद्रपदा तथा ॥ ८६ ॥
उत्तरादिभाद्रपदा रेवती भानि च क्रमात् ॥ ८७ ॥

अर्थ–अब सत्ताईस नक्षत्रोंको कीर्तन करते हैं यथा-अश्विनी, भरणी, कृत्तिका, रोहिणी, मृगशिरा, आर्द्रा, पुनर्वसु, पुष्य, आश्लेषा, मघा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, हस्त, चित्रा, स्वाती, विशाखा, अनुराधा, ज्येष्ठा, मूल, पूर्वाषाढा, उत्तराषाढा, (ज्ञ) श्रवण, धनिष्ठा, शतभिषा, पूर्वाभाद्रपदा, उत्तराभाद्रपदा और रेवती इन्हींको सत्ताईस नक्षत्र कहते हैं ॥ ८४-८७ ॥

अथ नक्षत्राधिपकथनम् ।

अश्वियमदहनकमलजशशिशूलभृददितिजीवफणिपितरः ।
योन्यर्यमदिनकृत्त्वष्टृपवनशक्राग्निमित्राश्च ॥ ८८ ॥
शक्रो निर्ऋतिस्तोयंविश्वविरिञ्ची हरिर्वसुर्वरुणः ।
अजपादोऽहिर्बुध्न्यः पूषा चेतीश्वरा भानाम् ॥ ८९ ॥ (ञ)

अर्थ–अब नक्षत्रोंके अधिष्ठातृदेवताओंको वर्णन करते हैं यथा–अश्विनीनक्षत्रके स्वामी अश्वि हैं. इसी प्रकार भरणीके यम, कृत्तिकाके अग्नि, रोहिणीके ब्रह्मा, मृगशिरके चन्द्र, आर्द्राके शिव, पुनर्वसुके अदिति, पुष्यके बृहस्पति, आश्लेषाके सर्प, मघाके पितृगण, पूर्वाफाल्गुनीके योनि, उत्तराफाल्गुनीके अर्यमा-हस्तके सूर्य, चित्राके त्वष्टा, स्वातिके पवन, विशाखाके शक्राग्नि, अनुराधाके मित्र,

---

(ज्ञ) उत्तराषाढाका चतुर्थ चरण और श्रवणके पूर्व चरणकोही अभिजित् कहते हैं

(ञ) यथाक्रममष्टाविंशतिनक्षत्राणां देवता आह–अश्वीति । अत्र या या यस्य यस्य नक्षत्रस्य देवता उक्ता तस्य तस्य नक्षत्रस्य तत्पर्यायशब्दो वाचक इत्यर्थः । अश्विन्य अश्विनीकुमारो देवता अश्विनीकुमारपर्यायोऽश्वपर्यायश्च बोद्धव्यः योनिर्भगसंज्ञकदेवत पूर्वाफाल्गुन्या उत्तरफाल्गुन्याः अर्यमेति स्वरूपमात्रं न तु पर्यायःहस्तायास्तु दिनकृत्देवता रविपर्याय, त्वष्टा चित्रायाः, स्वात्याः पवनो देवता, शक्राग्निसंज्ञकदेवता विशाखायाः जलदेवता, पूर्वाषाढायाःउत्तराषाढाभिजितोर्विश्वविरञ्ची देवते उत्तराषाढाया विश्वदेवसंज्ञक-देवता, अभिजिन्नक्षत्रस्य विरञ्चिर्देवता विरञ्चिरिति स्वरूपमात्रं न तु पर्यायः। अजपादोऽ-जैकपाद इत्यर्थः । पूषादेवता रेवत्याः पूषेति स्वरूपमात्रं पूषा देवता अस्योति पौष्णशब्दो रेवतीवाचकः । एतच्चार्याद्वयं पितर इत्यन्तमर्द्धं मित्राश्चेत्यन्तमेकार्य्या अन्यस्याश्च वरुण इत्यन्तमर्द्धमिति ॥

ज्येष्ठाके इन्द्र, मूलके निर्ऋति, पूर्वाषाढके जल, उत्तराषाढके विष्णु, श्रवणके हरि, धनिष्ठाके वसु, शतभिषाके वरुण, पूर्वाभाद्रपदाके अजपाद, उत्तराभाद्रपदाके अहिर्बुध्न्य और रेवतीके पूषा हैं ॥ ८८ ॥ ८९ ॥

अथ गणकथनम्।

उग्रः पूर्वमघान्तका ध्रुवगणस्त्रीण्युत्तराणि स्वभू-
र्वातादित्यहरित्रयं चरगणः पुष्याश्विहस्ता लघुः।
चित्रामित्रमृगान्त्यभं मृदुगणस्तीक्ष्णोऽहिरुद्रेन्द्रयुक्
मिश्रोऽग्निःसविशाखभःशुभकराःसर्वे स्वकृत्ये गणाः ॥९०॥ *

अर्थ-पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, मघा और भरणी इन कईएक नक्षत्रोंकी उग्रगणसंज्ञा है। उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा और रोहिणी इन नक्षत्रोंकी ध्रुवगणसंज्ञा है। स्वाती, पुनर्वसु, श्रवण, धनिष्ठा और शतभिषा इन समस्त नक्षत्रोंकी चरगण संज्ञा है, पुष्य आश्विनी और हस्त इन नक्षत्रोंकी लघुगण संज्ञा है,। चित्रा, अनुराधा, मृगशिर और रेवती इन नक्षत्रोंकी मृदुगण संज्ञा है। आश्लेषा, आर्द्रा, ज्येष्ठा और मूल इन नक्षत्रोंकी तीक्ष्ण गणसंज्ञा है कृत्तिका और विशाखा नक्षत्रकी मिश्रगणसंज्ञा है। उक्त समस्त नक्षत्र अपने २ कार्यमें शुभकारक होते हैं ॥ ९० ॥

अथ उग्रनक्षत्रगणकथनम्।

उग्राणि पूर्वभरणीपित्र्याण्युत्सादनादिसाध्येषु योज्यानि।
बन्धनविषदहनशस्त्रसंघाताादिषु च संसिद्धौ ॥ ९१ ॥ ( अ )

अर्थ-अब उग्रगण कीर्तन करते हैं-पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, भरणी और मघा यह कईएक उग्रगण नक्षत्र हैं, इनमें शत्रुउचाटन, बन्धन, विष प्रयोग दहन और अस्त्रघातादि कार्य करनेसे सिद्ध होते हैं ॥ ९१ ॥

अथ ध्रुवनक्षत्रगणकथनम्।

त्रीण्युत्तरातेभ्यो रोहिण्यश्च ध्रुवाणिभैः कुर्यात्।
अभिषेकशान्तितरुनगरबीजवापध्रुवारम्भान् ॥ ९२ ॥ (आ)

अर्थ-उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा और रोहिणी इन ध्रुवगण

* सक्षेपादौ सप्तान् गणान् कथयति-उग्र इति। इन्द्रयुगिति इन्द्रद्वयं ज्येष्ठा मूलं चेत्यर्थः। एते सर्वे गणाः वक्ष्यमाणोक्तस्वकीयकर्मणि शुभा इत्यर्थः।

( अ ) उग्रनक्षत्राण्याह-उग्राणीति। पूर्वं पूर्वात्रयम् उत्सादनं शत्रूणामुच्चाटनमिति।

( आ ) ध्रुवनक्षत्राण्याह-त्रीणीति। त्रीण्युत्तराणि रोहिणी च ध्रुवसंज्ञकानि तेभ्यः वक्ष्य-

नक्षत्रोंमें अभिषेक, शान्ति, तरु, ध्रुव और बीजवपन कर्म करना चाहिये।कोई २ मनुष्य कहते हैं कि, अधोमुखनक्षत्रविहित विद्यारम्भ, अर्घ्यदान और भूमिखननादिकर्मभी इसमें करना चाहिये ॥ ९२ ॥

अथ चरनक्षत्रगणकथनम् ।

**श्रवणात्रयमादित्यानिलौ च चरकर्मणि हितानि ।**
**आरामोद्यानानि कर्माणि भवन्ति चरवर्गे ॥ ९३ ॥ (इ)**

अर्थ-श्रवण, धनिष्ठा, शतभिषा, पुनर्वसु और स्वाति इन चरगण नक्षत्रोंमें चरकर्म, आराम ( उपवन ) उद्यान ( फलान्वित वन ) का आरम्भ करना शुभ है ॥ ९३ ॥

अथ लघुगणकथनम् ।

**लघुहस्ताश्विनीपुष्याःपुण्यरतिज्ञानभूषणकलासु ।**
**शिल्पौषधिपण्येषु च सिद्धिकराणि प्रदिष्टानि ॥ ९४ ॥ (ई)**

अर्थ-हस्त अश्विनी और पुष्य इन लघुगण नक्षत्रोंमें पुण्यकर्म, रतिज्ञान, भूषण कला, शिल्पकर्म औषधिक्रिया और पुण्यकर्म, करनेसे शुभफल प्राप्त होता है ॥ ९४ ॥

अथ मृदुगणकथनम् ।

**मृदुवर्गस्त्वनुराधाचित्रापौष्णैन्दवानि मित्रार्थे ।**
**सुरतविधिवस्त्रभूषणमङ्गलगीतेषु च हितानि ॥ ९५ ॥ (उ)**

अर्थ-अनुराधा, चित्रा, रेवती और मृगशिर इन मृदुगण नक्षत्रोंमें मित्र, अर्थ सुरतविधि, वस्त्र भूषण और गीतादिकर्म प्रशस्त हैं ॥ ९५ ॥

अथ तीक्ष्णगणकथनम् ।

**मूलशत्रुशिवभुजगाधिपानि तीक्ष्णानि तेषु सिध्यन्ति ।**

---

-माणश्लोकोक्तविद्यार्घ्यभूमिखननकर्मभ्यः शस्तानीत्यर्थः । तेश्वाभिषेकादीनि कुर्यादिति केचित् ।केचित्तु तेभ्यः सप्तविंशतिनक्षत्रेभ्यः सकाशात् त्रीण्युत्तराणि रोहिणी च नक्षत्राणि ध्रुवसंज्ञकानीति रोहिण्य इति बहुवचनं ताराबाहुल्यादिति ॥

( इ ) चरनक्षत्राण्याह-श्रवणेति । श्रवणादीनि चराणि एतानि चरकर्मण्यस्थिरकर्मणि विहितानि अत्र चरवर्गे आरामोद्यानानां कर्माणि शुभानि भवन्तीत्यर्थः । आरामः पुष्पप्रधानं वनम् उद्यानन्तु फलप्रधानमिति ॥

( ई ) लघुनक्षत्राण्याह-लघ्विति । लघुसंज्ञकहस्ताश्विपुष्याः पुण्यादिषु विहिताः तानि च नक्षत्राणि शिल्पौषधिपण्येष्वपि सिद्धिकराणीत्यर्थः । अश्विनीति क्वचिद्दीर्घस्यापि ह्रस्वः ।

( उ ) मृदुनक्षत्राण्याह-मृद्विति । सुगममिति ।

अभिघातमन्त्रवेतालभेदवधबन्धनादिकार्याणि ॥ ९६ ॥(ऊ)

अर्थ-मूल, ज्येष्ठा, आर्द्रा और आश्लेषा इन तीक्ष्णगण नक्षत्रोंमें अभिघात, मन्त्रकर्म, भूतदानवादिसाधन और वधबन्धनादि कार्यका अनुष्ठान करनेसे सिद्ध होते हैं ॥ ९६ ॥

अथ मृदुतीक्ष्ण ( मिश्र ) गणकथनम् ।

हौतभुजं सविशाखं मृदुतीक्ष्णं तद्धि मिश्रफलकारि ।
हयवृषभकुञ्जराणां वाहनदमनानि सेतुश्च ॥ ९७ ॥ ( ऋ )

अर्थ-कृत्तिका और विशाखा इन मृदुतीक्ष्ण ( मिश्र ) गण नक्षत्रोंमें विहित कर्मका मिश्र फल होता है और अश्व, वृष और हस्त्यादिक वाहन दमन और सेतुकर्म प्रशस्त हैं ॥ ९७ ॥

अथाधोमुखगणकथनम् ।

आश्लेषवह्नियमपित्र्यविशाखयुक्तं
पूर्वात्रयं शतभिषा च नवाप्युडूनि ।
एतान्यधोमुखगणानि शिवानि नित्यं
विद्यार्घ्यभूमिखननेषु च भूषितानि ॥ ९८ ॥ ( ॠ )

अर्थ-आश्लेषा, कृत्तिका, भरणी, मघा, विशाखा, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा और शतभिषा इन कई एक नक्षत्रोंको अधोमुखगण कहते हैं। विद्यारम्भमें, अर्घ्यदानमें और भूमिखननादि कार्यमें शुभकारक हैं ॥ ९८ )

अथोर्द्धमुखगणकथनम् ।

रोहिण्यार्द्रसातिष्यमूलवसवो विष्णुत्रयोऽप्युत्तरा
एतान्यूर्द्धमुखानि तानि च नव ज्योतिर्विदो मेनिरे ।
एभिश्चित्रसितातपत्रभवनप्रासादहर्म्याङ्घ्रिप-

---

( ऊ ) तीक्ष्णगणमाह-मूलेति । वेतालो भूतदानवादिसाधनमिति ।

( ऋ ) मृदुतीक्ष्णनक्षत्राण्याह-हौतभुजमिति । मृदुतीक्ष्णगणः तत्र मृदुगणविहित-कर्माणि तीक्ष्णगणविहितकर्माणि च मिश्रफलं मध्यफलं करोति तत्र च हयादीनां वाहनदमनानि कार्याणि सेतुश्च कार्यइत्यर्थः ।

( ॠ ) अधोमुखनक्षत्राण्याह-आश्लेषेति । अधोमुखगणानिति अधोमुखो गणः समुदायो येषां नक्षत्राणाम् इत्यर्थः ।

प्राकाराट्टविहारतोरणपुरःप्रारम्भणं शस्यते ॥ ९९ ॥ (ल)

अर्थ-रोहिणी आर्द्रा, पुष्य, मूल, धनिष्ठा, श्रवण, उत्तराफाल्गुनी, उत्तराषाढा और उत्तराभाद्रपदा इन समस्त नक्षत्रोंको ऊर्ध्वमुखगण ज्योतिर्विद् कहते हैं. चित्रकर्ममें, श्वेतच्छत्रधारणमें, गृहारम्भमें, राजपुरगमनमें और अट्टालिकारम्भमें यह समस्तग्रह प्रशस्त हैं और वृक्षारोपणमें, प्राचीरगठनमें, वणिक् गृहारम्भमें, विहारकर्ममें और विदेशयात्रामें और पुरीगठनमेंभी उक्त नक्षत्रगण प्रशस्त हैं ॥ ९९ ॥

अथ पार्श्वमुखगणकथनम् ।

मत्राखण्डलचन्द्रपाणितुरगाश्चित्रास्तथा स्वातयो
रेवत्योऽथ पुनर्वसुश्च कथितः पार्श्वास्यनामा गणः ॥
एभिर्यन्त्ररथादिपोतकरणं वेश्मप्रवेशोऽपि वा
शस्तोऽयं गजवाजिगर्दभगवां दामे तथा यन्त्रणे॥१००॥(ळ)

अर्थ-अनुराधा, ज्येष्ठा, मृगशिर, हस्त, आश्विनी, चित्रा, स्वाति, रेवती और पुनर्वसु इन समस्त नक्षत्रोंको पार्श्वमुखगण कहते हैं, उक्त नक्षत्रोंमें यन्त्रादिकरण, रथनिर्माण; नौकागठन और गृहप्रवेश प्रशस्त है और हस्ती, अश्व, गर्दभ, गोदमन और हलशकटादि योजनकर्म प्रशस्त हैं ॥ १०० ॥

अथ ताराशुद्धिकथनम् ।

तारास्तु जन्मसम्पद्विपत्क्षेमपापशुभकप्रष्ठाः ।
मित्रातिमित्रसंज्ञाश्चैताः संज्ञानुरूपफलाः ॥ १०१ ॥ (ए)

अर्थ-अब ताराशुद्धि कीर्त्तन करते हैं । जन्म, सम्पत्, विपत्, क्षेम, पाप,

---

(ल) ऊर्ध्वमुखनक्षत्राण्याह-रोहिणीति । तिष्यः पुष्यः प्रसादो राजगृह हर्म्यं सौधगृहम् अट्टं वणिक्पण्यगृहामिति ।

(ळ) पार्श्वमुखनक्षत्राण्याह-मैत्रेति । एभिर्नक्षत्रैर्यन्त्ररथादिनौकाकरणं स्यात्सद्मप्रवेशः स्यात् अयं पार्श्वमुखगणः गजादीनां दामे प्रथमदमने यन्त्रणे प्रथमशकटादियोजने च शस्त इत्यर्थः ।

(ए) ताराशुद्धिमाह-तारास्त्विति । जन्मनक्षत्रतस्त्रिरावृत्तिशश्चमाज्जन्मादयस्ताराःस्युः । एतास्तारा नामरूपफलदा इत्यर्थः । अतिमित्रः अत्यन्तमित्रमित्यर्थः । तथाच स्वरोदये ॥ जन्मसम्पद्विपत्क्षेमः प्रत्यरिः साधको वधः । मित्रं परमामित्रश्च जन्मादीनि पुनः पुनः ॥ अत्र च केचिदतिमित्रतारा न शुभेति प्रलपन्ति तदशुद्धं दृश्यमाणप्रतीकारकथनाभावात् । तथाच । यात्राप्रकरणे । " यात्रायां शोभनास्ताश्चः समाः कर्मान्यसंयुताः" इति लिखितस्वरोदयवचनात् । तथाच राजमार्त्तण्डे । " परमे मैत्रे शुभा मतिदा विज्ञा पश्चरागेगर्विपक्षः" इति । तथाच तत्रैव ताराफलकथनम् " रोगो जन्मसु तारकासु कथितः कार्यप्रणाशोऽचि-

शुभ, कष्ट, मित्र और अतिमित्र इन नौ ( ९ ) की तारासंज्ञा है. जन्मनक्षत्रसे गणना करके तीनवार सत्ताईस नक्षत्रोंको देखना चाहिये । प्रत्येक मनुष्यकेही जन्म ३ सम्पत् ३ विपत् ३ क्षेम ३ पाप ३ शुभ ३ कष्ट ३ मित्र ३ और अति-मित्र ३ तारा होता है और यह समस्त तारा नामानुरूप फल प्रदान करते हैं अर्थात् जन्म, विपत्, पाप और कष्ट तारा अशुभ फलके देनेवाले हैं और सम्प-दादि तारा शुभ फलके देनेवाले हैं ॥ १०१ ॥

जन्मसम्पद्विपत्क्षेमप्रत्यरिः साधको वधः ।
मित्रं परमामित्रश्च नवताराः प्रकीर्तिताः ॥ १०२ ॥

ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमेंभी कहाहै कि जन्म, सम्पत्, विपत्, क्षेम, प्रत्यरि, साधक वध, मित्र और परममित्र यह नौ तारासंज्ञक हैं ॥ १०२ ॥

अथ पञ्चमादितारानिर्णयः ।

पापाख्यास्त्रिविधाः पञ्च चतुर्दशविंशतित्रियुताः ।
सिद्धिफला वृद्धिकरी विनाशसंज्ञा क्रमात्कथिताः॥ १०३॥ ( ऐ )

अर्थ-पापतारा तीन हैं अर्थात् जन्मनक्षत्रसे पांचों नक्षत्रतक प्रथम, चौदहवाँ नक्षत्र दूसरा और तेईसवें नक्षत्रको तीसरा जानो, इन तीनों ताराके मध्यमें प्रथम पापतारा जन्मनक्षत्रसे पञ्चमतारा सिद्धिफलप्रदान करता है द्वितीय पापतारा वृद्धिप्रदान करता है और तृतीय पापतारा विनाशसाधन करता है ॥ १०३ ॥

अथ जन्मताराफलम् ।

यात्रायां पथि बन्धनं कृषिविधौ सर्वार्थनाशो भवे-
द्वैपज्ये मरणं तथा सुनियतं दाहो गृहारम्भणे ।
क्षौरे रोगसमागमो बहुविधः श्राद्धेऽर्थनाशस्तथा
वादे बुद्धिविनाशनं त्वरिभयं प्राप्नोत्यसौ जन्मभे ॥ १०४ ॥

अर्थ-अब जन्मताराका फल कहते हैं जन्मतारामें यात्रा करनेसे मार्गमें बन्धन

---

-रादारोग्यं द्रविणञ्च वाञ्छितफलावाप्तिः सदा सम्पदि । तारायां विपदो भवन्ति विपदि प्रारब्धकार्यक्षयः क्षेमारोग्यधनप्रमोदमुदितं क्षेमाभिधानेष्वपि । पञ्चम्यामचिरान्मनोऽति-तरलं कार्यप्रसिद्धिं प्रति सद्यस्द्रविणप्रमोदमतुलं प्राप्नोति षष्ठ्यामिति । सप्तम्यामपि कोश नाशमशुभं नानागदव्याहतिश्चाष्टम्यां धनमानसौख्यविजयान्येवं नवम्यामपि ॥ ” इति ।

( ऐ ) पापतारायां विशेषमाह-पापाख्या इति । त्रियुता विंशतिस्त्रयोविंशतिरित्यर्थः । तथा च “ सिद्धिदा ऋद्धिदा चैव मृत्युदा च विशेषतः । प्रत्यरिर्नामतस्तारास्त्रिप्रकाराः प्रकीर्तिताः ॥ ” इति ॥

होता है इसी प्रकार कृपिकार्य करनेसे शस्यादिका विनाश होता है, औषधिके सेवन करनेसे मृत्यु होती है, गृहारम्भके करनेसे गृहमें दाह होता है, क्षौरकर्म करनेसे रोग होताहै श्राद्ध करनेसे अर्थनाश होता है, विवाद करनेसे बुद्धिका नाश होता है और शत्रुद्वारा भय उपस्थित होता है ॥ १०४ ॥

**सर्वमङ्गलकार्याणि त्रिषु जन्मसु कारयेत् ।**
**विवादश्राद्धभैषज्ययात्राक्षौराणि वर्जयेत् ॥ १०५ ॥**

अर्थ-त्रिजन्मतारामें समस्त शुभ कर्मका अनुष्ठान करना चाहिये केवल विवाद श्राद्ध, औषधसेवन, यात्रा और क्षौरकर्मको वर्जितकरै ॥ १०५ ॥

अथ ताराप्रतीकारः ।

**विपत्तारे गुडं दद्यान्निधने तिलकाञ्चनम् ।**
**प्रत्यरौ लवणं दद्याच्छाकं दद्यात्रिजन्मनि ॥ १०६ ॥ (ओ)**

अर्थ-अब तारादोषके प्रतीकारको कहते हैं। विपत्तारामें गुड दान करना चाहिये. इसी प्रकार वधतारामें तिलोंके साथ काञ्चनदान करै, प्रत्यरि ( पाप ) तारामें लवणदान करै और जन्मतारामें शाकदान करनेसे अशुभतारा शुभ फल प्रदान करते हैं ॥ १०६ ॥

अथ दिवसस्य पञ्चदशनक्षत्रमुहूर्त्तकथनम् ।

**शिवभुजगमित्रपितृवसुजलविश्वविरिञ्चिपङ्कजप्रभवाः ।**
**इन्द्राग्नीन्द्रनिशाचरवरुणार्यमयोनयश्चाह्नि ॥ १०७ ॥ (औ)**

अर्थ-अब दिनके पन्द्रह मुहूर्त्तोंके स्वामी नक्षत्र कीर्त्तन करते हैं, दिनमानको पञ्चदश भागमें विभक्तकरै उसके एक २ भागका नाम मुहूर्त्त है। प्रथम मुहूर्त्तका स्वामी आर्द्रा नक्षत्र है, इसी प्रकार द्वितीय मुहूर्त्तका स्वामी आश्लेषा नक्षत्र है, तीसरे मुहूर्तका अनुराधा, चौथेका मघा, पांचवेंका धनिष्ठा, छठेका पूर्वाषाढा, सातवेंका उत्तराषाढा, आठवेंका अभिजित्, नववेंका रोहिणी, दशवेंका विशाखा, ग्यारहवेंका ज्येष्ठा, बारहवेंका मूल, तेरहवेंका शतभिषा, चौदहवेंका उत्तराफाल्गुनी और पन्द्रहवें मुहूर्तका स्वामी पूर्वाफाल्गुनी नक्षत्र है ॥ १०७ ॥

---

( ओ ) तारादोषप्रतीकारमाह-विपदिति । प्रत्यरिः पापतारा निधन कष्टा तारा तिलकाञ्चनं तिलसहितकाञ्चनमित्यर्थः ।

( औ ) दिवसस्य पञ्चदशमुहूर्त्ताधिपनक्षत्राण्याह-शिवेति । पञ्चदशभागीकृतस्य दिवामानस्य यथाक्रमं शिवादीनि नक्षत्राणि अधिपानि विरिञ्चिः अभिजिदिति ।

अथ रात्रेः पञ्चदशनक्षत्रमुहूर्त्तकथनम् ।

**रुद्राजाहिर्बुध्न्यपूषाश्विसौरिवह्निब्रह्मब्जसुराम्बाश्च विष्णुः । (अं)**
**पुष्या हस्ता त्वष्ट्रवायू तथैते रात्रेरुक्ता वै मुहूर्ताधिनाथाः॥१०८(अः)**

अर्थ-अब रात्रिके पन्द्रह मुहूर्त्तोंके स्वामी नक्षत्र कहे जाते हैं । रात्रिमानको पन्द्रह भागमें विभक्त करनेसे एक २ भागका नाम मुहूर्त्त होता है । रात्रिके प्रथम ( पहिले ) मुहूर्तका स्वामी आर्द्रा नक्षत्र है इसी प्रकार दूसरे मुहूर्तका स्वामी पूर्वाभाद्रपद है, तीसरे मुहूर्त्तका स्वामी उत्तराभाद्रपद, चौथेका रेवती, पाचवेंका आश्विनी, छठेका सौरि कहिये यमदेवताका भरणी, सातवेंका कृत्तिका, आठवेंका रोहिणी, नववेंका मृगशिर, दशवेंका सुराम्बा कहिये अदिति देवताका पुनर्वसु नक्षत्र, ग्यारहवेंका श्रवण, बारहवेंका पुष्य, तेरहवेंका हस्त, चौदहवेंका चित्रा और पन्द्रहवें मुहूर्त्तका स्वामी स्वातिनक्षत्र है ॥ १०८ ॥

अथ नक्षत्रमुहूर्त्तफलम् ।

**अह्नः पञ्चदशांशो रात्रेश्चैवं मुहूर्त्त इति संज्ञा ।**
**नक्षत्रे यद्विहितं तत्कार्यं तन्मुहूर्त्तेऽपि ॥ १०९ ॥ (१)**

अर्थ-दिनमानको पन्द्रह भागमें विभक्त करनेसे एक २ भागका नाम मुहूर्त्त है रात्रिमानकोभी पन्द्रह भागमें विभक्त करनेसे एक २ भागका नाम मुहूर्त्त होता है । जिस नक्षत्रमें जो कार्य विहित है उस नक्षत्रमें उसी कार्यको करै ॥ १०९ ॥

अथ नाडीनक्षत्राणि ।

**जन्माद्यं कर्म ततोपि दशमं सांघातिकं पोडशभम् ।**
**समुदयमष्टादशभं विना संज्ञं त्रयोविंशम् ॥ ११० ॥**
**आद्यात्तु पञ्चविंशं मानसमेवं नरः पडृक्षः स्यात् ।**

---

( अं ) गुरुहरीति पुस्तकान्तरे पाठः । (अः ) रात्रेः पञ्चदशमुहूर्त्ताधिपनक्षत्राण्याह-रुद्र इति । पञ्चदशभागीकृतस्य रात्रिमानस्य रुद्रादिनक्षत्रसंज्ञकाः क्षणा मुहूर्त्ताः स्युस्त-दधिपत्वेन तन्नक्षत्रसंज्ञाभाजः क्षणाः ॥ इति ।

( १ ) मुहूर्त्तसंज्ञाफलमाह-अह्न इति । रात्रिमानं दिवामानं यावद् भवति तावदेव पञ्चदशांशो मुहूर्त्तसंज्ञक इत्यर्थः । अत्र च दण्डद्वयं मुहूर्त्त इति निगदतः सौभरेरिन्द्रा-शनाभ्यसनमेव कारणमिति । अत्र च यन्नक्षत्रे यत्कर्म विहितं तन्नक्षत्रमुहूर्त्तेऽपि तत्कर्म कर्त्तव्यमित्यर्थः । इति ॥

**नवनक्षत्रो नृपतिः स्वजातिदेशाभिषेकर्क्षैः ॥ १११ ॥ ( २ )**

अर्थ–अब नाडीनक्षत्र कहते हैं । जिस नक्षत्रमें मनुष्यका जन्म हो उस नक्षत्रको उसकी जन्मनाडी कहते हैं, जन्मनाडीसे गिनकर दशवें नक्षत्रको कर्मनाडी कहते हैं, इसी प्रकार सोलहवें नक्षत्रको सांघातिकनाडी, अठारहवें नक्षत्रको समुदयनाडी, तेईसवें नक्षत्रको विनाशनाडी और पचीसवें नक्षत्रको मानसनाडी कहते हैं, इन्हीं छः नक्षत्रोंको मनुष्यके षण्नाडी नक्षत्र कहते हैं । राजाओंकी तीन नाडी और होती हैं यथा–स्वजातनाडी देशनाडी और अभिषेकनाडी–उपरोक्त छः नाडियोंको और इन तीन नाडियोंको मिलाकर राजाओंकी नौ नाडी होती हैं । स्वीयजातिनिरूपित नक्षत्रका नाम स्वजातिनाडी, देशनामानुसार जो नक्षत्र उसका नाम देशनाडी और जिस नक्षत्रमें राजा अभिषिक्त हो उसका नाम अभिषेकनाडी है ॥ ११० ॥ १११ ॥

अथ नाडीनक्षत्रफलम् ।

**ईहादेहार्थहानिः स्याज्जन्मर्क्षे चोपतापिते ।**
**कर्मर्क्षकर्मणां हानिः पीडा मनसि मानसे ॥ ११२ ॥**
**मूर्त्तिद्रविणबन्धूनां हानिः सांघातिके तथा ॥ ११३ ॥**
**सन्तते सामुदायिके मित्रभृत्यार्थसंक्षयः ।**
**वैनाशिके विनाशः स्याद्देहद्रविणसम्पदाम् ॥ ११४ ॥**

अर्थ–अब नाडीनक्षत्रका फल वर्णन करते हैं । मनुष्यकी जन्मनाडी ( जन्म-

---

( २ ) ताराणां सञ्ज्ञान्तरेण फलमार्याद्वयेनाह–जन्माद्यामिति । आद्यं यत्र पुमाञ्जातः तज्जन्मसञ्ज्ञं नक्षत्रमित्यर्थः । तस्माद्दशमं कर्मनाडी षोडशं सांघातिकम् अष्टादशं सामुदायिकं त्रयोविंशं वैनाशिकं तथा आद्याज्जन्मनक्षत्रात् पञ्चविंशनक्षत्रं मानससंज्ञमित्यर्थः । एवम्प्रकारेण नरः षडृक्षः स्यात् षडृक्षनक्षत्राणि यस्येति विग्रहः । नृपतिर्नवनक्षत्रः पूर्वप्रोक्तानि षट्स्वजातिदेशाभिषेकर्क्षैः सह नवनक्षत्राणीत्यर्थः । जातिदेशनक्षत्राणि च योगयात्रायामुक्तानि यथा–“ पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि । सपौष्णमैत्रं पितृदैवतञ्च प्रजापतेर्भञ्च कृषीवलानाम् ॥ आदित्यहस्ताभिजिदाश्विनानि वणिग्जनानां प्रवदन्ति भानि । मूलत्रिनेत्रानिलवारुणानि भान्यन्त्यजातेः प्रभविष्णुतायाः ॥ सौम्येन्द्रचित्रावसुदैवतानि सेवाजनैः साम्यमुपागतानि । सार्पं विशाखाश्रवणाभरण्यश्चाण्डालजातेरपि निर्दिशन्ति । नक्षत्रत्रयवर्गैराग्नेयाद्यैर्व्यवस्थितैर्नवधा । भारतवर्षमध्ये प्रागादिविभाजिता देशाः ॥ ” तथा “ त्रिभिस्त्रिभिरपि कृत्तिकाद्यैर्नपीडिते भूपतयोऽभियोज्याः । पाञ्चालनाथो मगधाधिपश्च कलिङ्गराडुज्जयिनीपतिश्च । आनर्त्तराट्सिन्धुपहारहौरी मद्रेश्वरोऽन्यश्च कुरुत्तनाथः । एते हि कूर्माङ्गसमाश्रितानां भानां भजन्ति क्षितिपास्तु नाथाः ” । तथा–‘ कूर्मोपदिष्टानि हि देशभानि राज्ञोऽभिषेकाह्वनि चाभिषेकः ॥ ” इति ॥

उपतापित होनेसे चेष्टा, देह और अर्थकी हानि होती है इसी प्रकार कर्मनाडी अर्थात् जन्मनक्षत्रसे दशवाँ नक्षत्र उपतापित होनेसे कर्मकी हानि होती है, मानसनाडी उपतापित होनेसे मानसिकपीडा होती है, सांघातिक नाडीके उपतापित होनेसे देह, धन और बान्धवोंकी हानि होती है, सामुदयिक नाडी उपतापित होनेसे मित्र, भृत्य और अर्थका नाश होता है और वैनाशिक नाडी उपतापित होनेसे शरीर, धन और सम्पत्का नाश होजाता है ॥ ११-१४ ॥

अथ नाडीनक्षत्रपीडाशान्तिकथनम्।

**सर्वेषामेव पीडायां दिनमेकमुपोषितोऽनलं जुहुयात्। ( ३ )**
**सावित्र्या क्षीरतरोः समिद्भिरमराद्विजानुरतः ॥ ११५ ॥**

अर्थ-अब नाडीके नक्षत्रोंका प्रतीकार कहते हैं। जन्मप्रभृति छः नाडियोंके मध्यमें मनुष्यकी कोई एक नाडी अथवा समस्त नाडियें यदि दूषित हों तो उन दोषोंके शान्तिके अर्थ देवब्राह्मणानुरक्त मनुष्य एक दिन उपवास करके गायत्रीपाठपूर्वक अग्निमें क्षीरवृक्षकी समिधद्वारा अष्टोत्तरसहस्र होम करै॥११५॥

अथाशुभनक्षत्रनिर्णयः।

**नक्षत्रपटुकिरणं पश्चात्सन्ध्यागतं ग्रहैर्भिन्नम्।**
**क्रूरनिपीडितमुत्पातदूषितञ्चाशुभं सर्वम् ॥ ११६ ॥ ॥ ( ४ )**

अर्थ-अब अशुभ नक्षत्रोंका निर्णय करते हैं। अश्विन्यादि सत्ताईस नक्षत्रोंके

( ३ ) नाडीनक्षत्रदोषप्रतीकारमाह-सर्वेषामिति। सर्वेषां नाडीनक्षत्राणां क्रमेण समुदायेन वा पीडायां गायत्र्या होमं कुर्यादित्यर्थः। देवद्विजानुरक्तपुरुषः देवब्राह्मणपूजापि कर्त्तव्येति तात्पर्यम्। अनुक्तसंख्यकहोमेऽष्टोत्तरसहस्रसंख्याभिधानादत्राप्यष्टोत्तरसहस्रहोम इति। यथा पुरश्चरणचन्द्रिकायाम्-"येषां जपे च होमे च संख्या नोक्ता मनीषिभिः। तेषामष्टसहस्रन्तु संख्या स्याज्जपहोमयोः ॥" अत्र च नाडीदोषशान्तिस्नानमुक्तं योगयात्रायाम्। यथा- "गोक्षीरसितवृषभशकृन्मूत्रैः पत्रैश्च पूर्णकोपायाः। स्नानं जन्मदिने दुष्टे स्वाचान्तता हरति पापम् ॥ कर्मणि घृतमधुहोमो दशाहमक्षारमद्यमांसादः। दूर्वाप्रियंगुलाजशतपुष्पशतावरीस्नानम्। सांघातिके तु दुष्टे मांसमधुक्षीरमन्मथांस्त्यक्त्वा। स्नानञ्च तत्र कुर्यात्प्रियंगुसिद्धार्थविल्वदलैः। संमिश्रितेन पयसा सुगह्वरचन्दनद्वितीयमुस्तैः। दान्तो दूर्वां जुहुयाद्दानं दद्याद्यथाशक्ति। सामुदायिके तु दद्यात्काञ्चनरजताक्षत हतेर्धीष्टे। वैनाशिकेऽन्नपान समुधाञ्च गुणान्विते दद्यात्। मानसतापे होमः सरोरुहैः पायसैर्द्विजा भोज्याः। गजमदशिरीषचन्दनवल्लातिबलावारिणा स्नानम्। सितसिद्धार्थकमिश्रैर्दूर्वादधिचन्दनोशीरैः। स्नायात्तदीशमन्त्रैस्तागदोषप्रशमनाय ॥" इति॥

( ४ ) अशुभनक्षत्रमाह-नक्षत्रमिति। अपटुकिरणम् अस्फुटरश्मिरश्विभोगनक्षत्रस्य पूर्वापरस्थं नक्षत्रद्वयम् अल्परश्मीत्यर्थः। पश्चात्सन्ध्यागतम् अस्तगतं सूर्यभोग्यनक्षत्र-

मध्यम पट्टकिरण ( सूर्यभोग्य ) नक्षत्रोंके पूर्व और परनक्षत्र, पश्चात् सन्ध्यागत ( सूर्यभोग्य ) नक्षत्र और शुभाशुभ ग्रहयोगद्वारा भिन्न नक्षत्र,अशुभ नक्षत्र, पापग्रह भोग्य नक्षत्र और उल्कापातादि त्रिविधोत्पातदूषित नक्षत्रोंको अशुभ नक्षत्र कहते हैं उक्त समस्त शुभ नक्षत्रोंमें कोई कार्य न करना चाहिये ॥११६॥

अथ पुंनक्षत्रकथनम् ।

हस्तो मूलः श्रवणः पुनर्वसुर्मृगशिरास्तथा पुष्यः ।
पुंसंज्ञिते च कार्ये पुंनामाऽयं गणः स्मृतः ॥ ११७ ॥ (९)

अर्थ-हस्त, मूल, श्रवण, पुनर्वसु, मृगशिर और पुष्य इन समस्त नक्षत्रोंको पुंनक्षत्र कहते हैं, पुंकार्यमें उक्त नक्षत्र प्रशस्त हैं ॥ ११७ ॥

अथ राशिनक्षत्रविभागः ।

अश्विनीमृगमूलादौ मेषसिंहहयादयः ।
विषमर्क्षान्निवर्तन्ते पादवृद्धया यथोत्तरम् ॥ ११८ ॥ (६)

अर्थ-अब राशियोंके नक्षत्रोंका विभाग वर्णन करते हैं । अश्विनी मघा और मूल नक्षत्रसे विषम ( अयुग्म ) नक्षत्रके एक एक पाद वृद्धिसे क्रमानुसार यथा संख्य करके सिंहादि और धनुरादि राशिको जानो ॥ ११८ ॥

अथ स्पष्टमाह ।

आश्विन्या सह भरणी कृत्तिका पादश्च कथितो मेषः ।
वृषभः कृत्तिकाशेषं रोहिण्यर्द्धंञ्च मृगशिरसः ॥ ११९ ॥

---

—मित्यर्थः । ग्रहैः शुभाशुभग्रहैः सग्रहैर्योगतारायोगेन शकटभेदेन वा भिन्नमित्यर्थः । क्रूराभिपीडित पापग्रहभोग्यनक्षत्रमित्यर्थः । उत्पातदूषितम् उल्कादित्रिविधोत्पातदूषितमित्यर्थः । एतत्सर्वं नक्षत्र सर्वकर्मण्यशुभमित्यर्थः । इति ॥

( ९ ) पुन्नामगणमाह-हस्त इति । पुंसंज्ञिते पुंसवनादौ तु कार्ये इत्यर्थः ॥

( ६ ) राशिनक्षत्रविभागमाह-अश्विनीति । अश्विन्याद्याश्लेषान्त मघादिज्येष्ठान्त यथासंख्य मेषादयश्चत्वारः सिंहादयश्चत्वारो धनुरादयश्चत्वारो राशयः स्युः । ते च मेषादयः सिंहादयो हयादयश्चत्वारो राशयः विषमनक्षत्राद्यथोत्तर पादैक वृद्धया निवर्त्तन्ते। एतदुक्त भवति प्रथमराशिर्मेषः तृतीयकृत्तिकानक्षत्रस्यैकपादाद्द्वितीयराशिर्वृषः पञ्चम मृगशिरोनक्षत्रस्य पादद्वयात्, तृतीयराशिर्मिथुनः सप्तमपुनर्वसुनक्षत्रस्य पादत्रयात्, चतुर्थराशिः कर्कटःनवमाऽऽश्लेषानक्षत्रस्य पादचतुष्टयात् । एव सिंहादयो हयादयश्च मघादितो मूलादितश्च बोद्धव्याः । सीमग्नित्तु विषमगृक्षोदित्यस्य सम्बन्ध मरणाति ॥

मृगाशिरोऽर्द्धमार्द्रा पुनर्वसोस्त्रिपादं मिथुनः ।
पादः पुनर्वसोरम्भः पुष्याश्लेषा च कर्कटः ॥ १२० ॥
सिंहोऽथ मघापूर्वाफाल्गुनीपाद उत्तरायाः ।
तच्छेषं हस्तचित्रार्द्धञ्चकन्याख्या ॥ १२१ ॥
तौलिनि चित्रार्द्धञ्चस्वातिविशाखायाः पादत्रयम् ।
आलिनि विशाखापादस्तथानुराधान्विता ज्येष्ठा ॥ १२२ ॥
मूलं पूर्वाषाढा प्रथमश्चाप्युत्तरांशको धन्वी ।
मकरस्तत्परिशेषं श्रवणार्द्धं धनिष्ठायाः ॥ १२३ ॥
धनिष्ठार्द्धं शतभिषा पूर्वभाद्रपदत्रयं कुम्भः ।
भाद्रपदा शेषस्तथोत्तरारेवती मीनः ॥ १२४ ॥

अर्थ–अश्विनीप्रभृति सत्ताईस नक्षत्रोंके द्वारा द्वादश राशिका विभाग स्पष्ट-रूपसे कीर्त्तन करते हैं यथा–अश्विनी, भरणी और कृत्तिकाके प्रथमपादतक मेष राशि होती है इसी प्रकार कृत्तिकाके शेष तीनपाद, रोहिणी और मृगशिरके प्रथमार्द्धतक वृषराशि, मृगशिरका शेषार्द्ध आर्द्रा और पुनर्वसुके तीन पादतक मिथुन राशि, पुनर्वसुका शेष पाद, पुष्य और आश्लेषा नक्षत्रतक कर्क राशि। मघा, पूर्वाफाल्गुनी और उत्तराफाल्गुनीके प्रथमपादतक सिंहराशि, उत्तराफाल्गुनीके शेष तीन पाद हस्त और चित्राके पूर्वार्द्धतक कन्या राशि। चित्राका उत्तरार्द्ध, स्वाति और विशाखाके तीन पादतक तुला राशि विशाखाका शेष पाद, अनुराधा और ज्येष्ठा नक्षत्रतक वृश्चिकराशि। मूल, पूर्वाषाढा और उत्तराषाढाके प्रथमपादतक धनराशि। उत्तराषाढाके शेष तीन पाद, श्रवण और धनिष्ठाके दो पादतक मकर राशि। धनिष्ठाका शेषार्द्ध, शतभिषा और पूर्वाभाद्रपदके तीनपादतक कुम्भ राशि। पूर्वाभाद्रपदका शेष पाद, उत्तराभाद्रपद और रेवतीनक्षत्रतक मीन राशि होती है ॥ ११९–१२४ ॥

अथ तिथिनिरूपणम् ।

अर्काद्विनिःसृतः प्राचीं यद्यात्यहरहः शशी ।
भागैर्द्वादशभिस्तत्स्यात्तिथिश्चान्द्रमसं दिनम् ॥ १२५ ॥

इति सूर्यसिद्धान्तः ।

अर्थ–अब तिथिनिरूपण करते हैं–सूर्यमण्डलसे विनिर्गत होकर पूर्व दिशामें चन्द्रके द्वादशभागगमनका नाम तिथि वा चान्द्रदिन है ॥ १२५ ॥

त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते ।

आदित्याद्विप्रकृष्टस्तु भागं द्वादशकं यदा ।
चन्द्रमाः स्यात्तदा राम तिथिरित्यभिधीयते ॥ १२६ ॥

इति विष्णुधर्मोत्तरे ।

अर्थ–रात्रिको त्रिंशांश करनेसे उसके एक एक अंशका नाम भाग है चन्द्र सूर्यमण्डलसे विनिर्गत होकर इसी प्रकार द्वादशभाग गमन करनेसे उसका नाम एक तिथि होताहै ॥ १२६ ॥

तत्र पक्षावुभौ मासे शुक्लकृष्णौ क्रमेण हि ।
चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ १२७ ॥

इति षट्त्रिंशन्मतम् ।

अर्थ–चान्द्रके तीस तिथियोंका एक चान्द्रमास होताहै, उस चान्द्रमासके मध्यमें शुक्ल और कृष्णनामक दो पक्ष होते हैं । शुक्लपक्षमें चन्द्रकी कला क्रमानुसार बढती है और कृष्णपक्षमें चन्द्रकी कला क्रमसे घटती है ॥ १२७ ॥

पक्षत्याद्यास्तु तिथयः क्रमात्पञ्चदश स्मृताः ।
दर्शान्ताः कृष्णपक्षे ताः पूर्णिमान्ताश्च शुक्लके ॥ १२८॥

अर्थ–प्रतिपदासे आदि लेकर अमावस्यातक १५ पन्द्रह तिथि कृष्णपक्षमें और इसी प्रकार प्रतिपदासे पूर्णमासीतक पन्द्रह तिथि शुक्लपक्षमें होती हैं॥१२८॥

अथ तिथिसंज्ञाकथनम् ।

प्रतिपद्द्वितीया तृतीया चतुर्थी पञ्चमी षष्ठी सप्तम्यष्टमी । नवमी दशम्येकादशी द्वादशी त्रयोदशी चतुर्दशी पूर्णिमामावस्या इति तिथयः ॥ १२९ ॥ (७)

अर्थ–अब तिथियोंके नाम कहते हैं । यथा–प्रतिपदा, द्वितीया, तृतीया चतुर्थी, पञ्चमी, षष्ठी, सप्तमी, अष्टमी, नवमी, दशमी, एकादशी, द्वादशी, त्रयोदशी, चतुर्दशी और पूर्णिमा यह पन्द्रह तिथि शुक्लपक्षमें और प्रतिपदासे अमावस्यातक पन्द्रह तिथि कृष्णपक्षमें होती हैं ॥ १२९ ॥

अथ तिथीनां विशेषसंज्ञाकथनम् ।

नन्दा भद्रा जया रिक्ता पूर्णाः प्रतिपदः क्रमात् ॥ १३० ॥

अर्थ–प्रतिपदादितिथिके क्रमानुसार नन्दा, भद्रा, जया, रिक्ता और पूर्णा यह पांच प्रकारके नाम हैं ॥ १३० ॥

(७) अथ तिथ्यधिदेवतामाह–"अग्निः प्रजापतिर्गौरी गणेशोऽहिर्गुहो रविः । शिवो दुर्गान्तको विश्वो हरिः कामो हरः शशी । पितरः प्रतिपद्दादीनां तिथीनामधिपाः क्रमात् ॥ " इति ॥

अन्यच्च ।

प्रतिपदेकादशी षष्ठी नन्दा ज्ञेया मनीषिभिः ।
द्वितीया द्वादशी चैव भद्रा प्रोक्ता च सप्तमी ॥ १३१ ॥
त्रयोदश्यष्टमी चैव तृतीया च तथा जया ।
चतुर्थी नवमी चैव रिक्ता चतुर्दशी तथा ॥ १३२ ॥
पञ्चमी दशमी चैव ह्यमावस्या च पूर्णिमा ।
पूर्णेति तिथयो ज्ञेयाः सर्वदा च मनीषिभिः ॥ १३३ ॥ (८)

अर्थ-प्रतिपदादि तिथियोंकी नन्दादिसंज्ञा विस्तारसहित वर्णन करते हैं । प्रतिपदा, एकादशी और षष्ठी तिथिकी नन्दासंज्ञा है। इसी प्रकार द्वितीया द्वादशी और सप्तमीकी भद्रासंज्ञा है। त्रयोदशी, अष्टमी और तृतीयाकी जयासंज्ञा है। चतुर्थी, नवमी और चतुर्दशीकी रिक्तासंज्ञा है और पञ्चमी अमावस्या और पूर्णिमाकी पूर्णासंज्ञा है ॥ १३१-१३३ ॥

अथ नित्ययोगकथनम् ।

विष्कम्भः प्रीतिरायुष्मान्सौभाग्यः शोभनस्तथा ।
अतिगण्डः सुकर्म्मा च धृतिः शूलस्तथैव च ॥ १३४ ॥
गण्डो वृद्धिर्ध्रुवश्चैव व्याघातो हर्षणस्तथा ।
वज्रसिद्धिर्व्यतीपातो वरीयान्परिघः शिवः ।
साध्यः सिद्धःशुभः शुक्लो ब्रह्मेन्द्रौ वैधृतिस्तथा ॥१३५(९)

अर्थ-विष्कंभ, प्रीति, आयुष्मान्, सौभाग्य, शोभन, अतिगण्ड, सुकर्मा, धृति, शूल, गण्ड, वृद्धि, ध्रुव, व्याघात, हर्षण, वज्र, सिद्धि, व्यतीपात, वरीयान्, परिघ, शिव, साध्य, सिद्ध, शुभ, शुक्ल, ब्रह्म, इन्द्र और वैधृति इन सत्ताईसको नित्ययोग कहते हैं ॥ १३४ ॥ १३५ ॥

---

(८) अथ तिथिविशेषे कर्मविशेषादिः । " नन्दासु चित्रोत्सववास्तुयज्ञक्षेत्रादि कुर्वीत तथैव नित्यम् । विवाहभूषाशकटाध्वयान भद्रासु कार्याण्यपि पौष्टिकानि । जयासु संग्रामबलोपयोगी कार्याणि सिध्यन्ति हि निर्मितानि । रिक्तासु विद्विड्वधबन्धनादि विषाग्निशस्त्रादि च याति सिद्धिम् । पूर्णासु मांगल्यविवाहयात्रासपौष्टिकं शान्तिककर्म कार्यम् । सदैव दर्शे पितृकर्म युक्तं नान्यद्विदध्याच्छुभमङ्गलादि "। इति ज्योतिःसारे ।

(९) नित्ययोगानाह-विष्कम्भेति । सुगममिति ।

अथ योगानां त्याज्यकालकथनम्।

परिघस्य त्यजेदर्द्धं शुभकर्म ततः परम्।
त्यजादौ पञ्च विष्कम्भे सप्त शूले च नाडिकाः ॥ १३६ ॥
गण्डव्याघातयोः षट्कं नव हर्षणवज्रयोः।
वैधृतिं च व्यतीपातं समस्तं परिवर्जयेत्।
शेषा यथार्थनामानः शुभकार्येषु शोभनाः॥ १३७॥ (१०)

अर्थ—अब विष्कम्भादियोगका त्याज्यकाल कहते हैं। यथा—परिघ योगका अर्द्ध परित्याग करके शुभ कर्म करै। इसी प्रकार विष्कम्भयोगके प्रथम पांच दण्ड, शूलयोगके प्रथम सात दण्ड, गण्ड और व्याघातयोगके छः दण्ड, हर्षण और वज्र योगके नौ दण्ड, और वैधृति और व्यतीपात योगके समस्त परित्याग करके शुभ कार्य करना चाहिये। उक्त समस्त योग भिन्न जो योग हैं उनमें शुभकर्मका अनुष्ठान करनेसे शुभ फल प्राप्त होता है॥ १३६ ॥ १३७ ॥

अन्यच्च।

विरुद्धसंज्ञा इह ये च योगास्तेषामनिष्टः खलु पाद आद्यः।
सवैधृतिस्तु व्यतिपातनामा सर्वेऽप्यनिष्टः परिघस्य चार्द्धम्॥ १३८॥
तिस्रस्तु योगे प्रथमे सवज्रे व्याघातसंज्ञे नवपञ्च शूले।
गण्डेऽतिगण्डे च षडेव नाड्यः शुभेषु कार्येषु विवर्जनीयाः॥ १३९॥

अर्थ—वचनान्तरमें योगका त्याज्यकाल इस प्रकारसे कहाहै। यथा—विरुद्ध जो समस्त योग हैं उनके आद्यपाद दूषणीय होते हैं, वैधृति और व्यतीपात योग समस्त दूषित हैं, परिघ योगका अर्द्ध दूषित होता है। किन्तु विष्कम्भ योगके प्रथम तीन दण्ड, वज्र और व्याघात योगके नौ दण्ड, शूल योगके पांच दण्ड, गण्ड और अतिगण्ड योगके छः दण्ड परित्याग करके शुभ कर्मका अनुष्ठान करना चाहिये॥ १३८ ॥ १३९ ॥

अपरञ्च।

विष्कम्भे घटिकास्तिस्रः शूले पञ्च तथैव च।
गण्डातिगण्डयोः सप्त नव व्याघातवज्रयोः॥ १४०॥

इति भीमपराक्रमे।

अर्थ—ग्रन्थान्तरमें लिखा है कि, विष्कम्भके तीन दण्ड, शूलके पांच दण्ड,

( १० ) एतेषां शुभाशुभत्वमाह—परिघस्येत्यादि। विष्कम्भयोगे आदौ पञ्चनाडिका दंडांस्त्यक्त्वा तत्परं शुभकर्म कुर्यादित्यन्वयः। अतिगण्डे गण्डे च षट्त्यन्वयः। एतच्छेषा नामानुरूपफलाः सर्वकार्येषु शुभा इत्यर्थः।

गण्ड और अतिगण्डके सात दण्ड, व्याघात और वज्रयोगके नौ दण्ड परित्याग करके शुभकर्मको करे ॥ १४० ॥

प्रकारान्तरञ्च ।

दण्डमेकं त्यजेत्साध्ये व्याघाते घटिकाद्वयम् ।
सप्तशूले षट् च वज्रे नव गण्डातिगण्डयोः ॥ १४१ ॥
वैधृतौ परिघे चार्द्धं विष्कंभे घटिकाद्वयम् ।
व्यतीपाते च निःशेषं दण्डात्मकञ्च हर्षणे ॥ १४२ ॥

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिन्तामणि ग्रंथमें लिखाहै कि, शुभकर्ममें साध्य योगका एक दण्ड, व्याघातयोगके दो दण्ड, शूलयोगके सात दण्ड, वज्रयोगके छः दण्ड, गण्ड और अतिगण्ड योगके नौ दण्डोंको परित्याग करे। इसी प्रकार वैधृतियोगका अर्द्धभाग, विष्कम्भके दो दण्ड, व्यतीपातके समस्त और हर्षणयोगका एक दण्ड परित्याग करके शुभकर्म करे ॥ १४१ ॥ १४२

सर्वेषु देशेष्वविशेषतोऽमी
विष्कम्भकाद्या मुनिभिस्तु योगाः ।
वारर्क्षयोगास्तिथिवारयोगा
वङ्गेषु योज्या न तु तेऽन्यदेशे ॥ १४३ ॥ (क)

अर्थ-विष्कम्भादि सत्ताईस नित्य योगोंका शुभाशुभ फल सब देशोंमेंही समान होताहे, किन्तु वक्ष्यमाण अमृत और पाप योगादि, वार नक्षत्रनिमित्तक योग सिद्धियोग और दग्धादि और तिथिवारनिमित्तक योगोंका शुभाशुभ फल वङ्ग देशमेंही होताहे। और देशोंमें इन समस्त योगोंका व्यवहार और फल नहीं देखाजाताहै, मुनिगणकाभी इसी प्रकार मत है ॥ १४३ ॥

अथ करणकथनम् ।

ववबालवकौलवतौतिलगरवणिजाविष्टयः सप्त ।
शकुनिचतुष्पदनागकिंस्तुघ्नानिध्रुवाणि करणानि ॥ १४४ ॥

अर्थ-बव, बालव, कौलव, तैतिल, गर, वणिज, विष्टि, शकुनि, चतुष्पाद, नाग और किंस्तुघ्न यही ग्यारह करण हैं ॥ १४४ ॥

---

(क) सर्वेषा शुभाशुभयोगाना देशविशेष एव फलमाह-सर्वेष्विति । वारर्क्षयोगा वक्ष्यमाणा अमृतपापादयः तिथिवारयोगाः सिद्धिदग्धादयः वङ्गेषु योज्याश्चान्यदेशे गुणदोषा न सन्तीत्यर्थः ।

अथ साधिपववादिकथनम् ।

ववबालवकौलवतैतिलगरवणिजविष्टिसंज्ञानाम् ।
पतयःस्युरिन्द्रकमलजमित्रार्यमभूश्रियः सयमाः ॥ १४५ ॥ (×)

अर्थ–अब साधिप करण कहते हैं । बव, बालव, कौलव, तैतिल, गर, वणिज, और विष्टि इन सात करणोंके क्रमानुसार इन्द्र, ब्रह्मा, मित्र, अर्यमा, पृथ्वी, लक्ष्मी और यमको स्वामी जानो ॥ १४५ ॥

अथ साधिपशकुन्यादिकथनम् ।

कृष्णचतुर्दश्यन्तार्द्धाद्ध्रुवाणि शकुनिचतुष्पदनागाः ।
किंस्तुघ्नमथ च तेषां कलिवृषफणिमारुताःपतयः॥१४६॥ (१)

अर्थ–अब शकुन्यादि करणचतुष्टय कहते हैं । कृष्णाचतुर्दशीके शेषार्द्धसे आरम्भ होकर शुक्लप्रतिपदाके पूर्वार्द्धपर्यन्त तिथ्यर्द्धभोगक्रमसे शकुनि चतुष्पद नाग,और किंस्तुघ्न यह चार करण होते हैं इनको ध्रुव( निश्चल ) कहते हैं उक्त चारों करणोंके स्वामी कलि, वृष, फणी और मारुतको यथासंख्यक क्रमसे जानो ॥१४६॥

शुक्लादितिथिशेषार्द्धे पञ्चमे तत्तुरीयके ।
आद्यान्तर्द्धात्क्रमेण स्युरष्टावृत्त्या ववादयः ॥ १४७ ॥

अर्थ–किस तिथिमें कौन करण होताहै,अब उसको वर्णन करतेहैं । शुक्लप्रतिपदाके शेषार्द्धमें शुक्लपञ्चमीके पूर्वार्द्धमें, शुक्लाष्टमीके शेषार्द्धमें,शुक्लाद्वादशीके पूर्वार्द्धमें, पूर्णिमाके शेषार्द्धमें; कृष्णाचतुर्थीके पूर्वार्द्धमें, कृष्णासप्तमीके शेषार्द्धमें, और कृष्णा एकादशीके पूर्वार्द्धमें ववकरण होताहै । शुक्लाद्वितीयाके पूर्वार्द्धमें, शुक्लापञ्चमीके शेषार्द्धमें, शुक्ला नवमीके पूर्वार्द्धमें, शुक्ला द्वादशीके शेषार्द्धमें, कृष्णा प्रतिपदाके पूर्वार्द्धमें, कृष्णा चतुर्थीके शेषार्द्धमें कृष्णाष्टमीके पूर्वार्द्धमें, और कृष्णा एकादशीके शेषार्द्धमें बालव करण होताहै शुक्ला द्वितीयाके शेषार्द्धमें, शुक्ला षष्ठीके पूर्वार्द्धमें, शुक्ला नवमीके शेषार्द्धमें, शुक्ला त्रयोदशीके पूर्वार्द्धमें कृष्णा प्रतिपदाके शेषार्द्धमें, कृष्णापञ्चमीके पूर्वार्द्धमें कृष्णाषष्ठीके शेषार्द्धमें, और कृष्णाद्वादशीके पूर्वार्द्धमें कौलवकरण होताहै । शुक्लतृतीयाके पूर्वार्द्धमें, शुक्ला षष्ठीके शेषार्द्धमें, शुक्ला दशमीके पूर्वार्द्धमें, शुक्ला त्रयोदशीके शेषार्द्धमें कृष्णाद्वितीयाके पूर्वार्द्धमें, कृष्णापञ्चमीके शेषार्द्धमें, कृष्णानवमीके पूर्वार्द्धमें और कृष्णा

( × ) करणानि तदधिपान्याह–बवेति । सुगममिति ।

( १ ) शकुन्यादिकरणचतुष्टयमाह–कृष्णेति ।कृष्णचतुर्दश्या अन्तादन्तार्द्धे शुक्लप्रतिपदापूर्वार्द्धपर्यन्तं तिथ्यर्द्धभोगक्रमेण यथाक्रमं शकुन्यादयः स्युः । एतानि ध्रुवाणि निश्चलानि एकतिथावेव स्थितत्वात् बवादीनि अध्रुवाणि चलनानि अष्टावृत्त्या अनेकतिथिभ्रमणात् शेषं सुगममिति ।

द्वादशीके शेषार्द्धमें तैतिलकरण होताहै । शुक्ला तृतीयाके शेषार्द्धमें, शुक्ला सप्तमीके पूर्वार्द्धमें, शुक्ला दशमीके शेषार्द्धमें, शुक्ला चतुर्दशीके पूर्वार्द्धमें, कृष्णा द्वितीयाके शेषार्द्धमें, कृष्णा षष्ठीके पूर्वार्द्धमें, कृष्णानवमीके शेषार्द्धमें, और कृष्णा त्रयोदशीके पूर्वार्द्धमें गरकरण होताहै । शुक्ला चतुर्थीके पूर्वार्द्धमें, शुक्ला सप्तमीके शेषार्द्धमें, शुक्ला एकादशीके पूर्वार्द्धमें, शुक्ला चतुर्दशीके शेषार्द्धमें, कृष्णा तृतीयाके पूर्वार्द्धमें, कृष्णा षष्ठीके शेषार्द्धमें कृष्णा दशमीके पूर्वार्द्धमें और कृष्णा त्रयोदशीके शेषार्द्धमें, वणिज करण होताहै । शुक्ला चतुर्थीके शेषार्द्धमें, शुक्लाअष्टमीके पूर्वार्द्धमें, शुक्ला एकादशीके शेषार्द्धमें पूर्णिमाके पूर्वार्द्धमें कृष्णा तृतीयाके शेषार्द्धमें, कृष्णा सप्तमीके पूर्वार्द्धमें, कृष्णा दशमीके शेषार्द्धमें और कृष्णा चतुर्दशीके पूर्वार्द्धमें विष्टि करण होताहै ॥ १४७ ॥

कृष्णपक्षे चतुर्दश्याः शेषार्द्धे शकुनिर्भवेत् ।
चतुष्पादश्च पूर्वार्द्धे नागः शेषार्द्धसंस्थितः ।
शुक्लप्रतिपदाद्यर्द्धे किंस्तुघ्नः शेषतो ववः ॥ १४८ ॥

अर्थ-कृष्णाचतुर्दशीके शेषार्द्धमें शकुनि करण होताहै, अमावास्याके पूर्वार्द्धमें चतुष्पादकरण, शेषार्द्धमें नागकरण, शुक्लप्रतिपदाके पूर्वार्द्धमें किंस्तुघ्न करण और शेषार्द्धमें ववकरण होताहै । शकुनि, चतुष्पाद, नाग और किंस्तुघ्न करणका अङ्क व्यवहारमें नहीं आता; शकुनिका " श " चतुष्पादका " च " नागका " ना " किंस्तुघ्नका " किं " अङ्कके परिवर्तनमें लिखा जाताहै॥१४८॥

इति करणनिरूपणम् ।

अथ विष्टिभद्राकथनम् ।

तृतीयादशमीशेषे तत्पञ्चम्योस्तु पूर्वतः ।
कृष्णे विष्टिः सिते तद्वत्तासां परतिथिष्वपि ॥ १४९ ॥ ❀

अर्थ-विष्टि भद्रा ( विष्टिकरण) विशेष प्रकारसे वर्णन कहते हैं । कृष्णपक्षमें तृतीया और दशमीके शेषार्द्धमें विष्टिकरण होताहै इस प्रकार उक्त दोनों तिथियोंके पञ्चम कृष्णा सप्तमी और कृष्णा चतुर्दशी तिथिके पूर्वार्द्धमें विष्टिकरण होताहै । शुक्ल पक्षमें तृतीया और दशमीके परतिथि चतुर्थी और एकादशीके परार्द्धमें और अष्टमी और पौर्णमासीके पूर्वार्द्धमें विष्टिभद्रा होती है ॥ १४९ ॥

( ❀ ) सुखबोधार्थं विष्टिनिर्णयमाह-तृतीयेति । कृष्णपक्षे तृतीयादशम्योः शेषार्द्धे विष्टिः स्यात्तत्पञ्चम्योः तृतीयादशमीपञ्चमतिथ्योः सप्तमीचतुर्दश्योः पूर्वतः पूर्वार्द्धे विष्टिरित्यर्थः । सिते शुक्लपक्षे तासां तृतीयादीनां परतिथिषु चतुर्थ्येकादश्योस्तद्वच्छेषार्द्धे अष्टमीपौर्णमास्योः तद्वत्पूर्वार्द्धे विष्टिरित्यर्थः ।

अन्यच्च ।

एकादश्याश्चतुर्थ्याश्च शेषार्द्धे शुक्लपक्षके ।
अष्टमीपौर्णमास्योस्तु पूर्वार्द्धे विष्टिसम्भवः ॥ १५० ॥

अर्थ-शुक्लपक्षमें एकादशी और चतुर्थीके शेपार्द्धमें और अष्टमी और पूर्णिमाके पूर्वार्द्धमें विष्टि भद्रा होती है ॥ १५० ॥

कृष्णपक्षे तृतीयाया दशम्यास्तु परार्द्धतः ।
सप्तम्याश्च चतुर्दश्याः पूर्वार्द्धे विष्टिरीरिता ॥ १५१ ॥

अर्थ-कृष्णपक्षमें तृतीया और दशमीके शेपार्द्धमें और सप्तमी और चतुर्दशीके पूर्वार्द्धमें विष्टि भद्रा होती है ॥ १५१ ॥

अपरश्च।

कृष्णे तृतीयादशमीपरार्द्धे पूर्वार्द्धभागे मुनिभूततिथ्योः ।
सिते चतुर्थीशिवयोः परस्तात्पूर्वेऽष्टमीपूर्णिमयोश्च विष्टिः॥१५२

इति सारसंग्रहे ।

अर्थ-सारसंग्रहनामक ग्रन्थमें लिखा है कि, कृष्णपक्षमें तृतीया और दशमी तिथिके परार्द्धमें, सप्तमी और चतुर्दशीतिथिके पूर्वार्द्धमें विष्टिभद्रा होती है, और शुक्लपक्षमें चतुर्थी और एकादशीतिथिके परार्द्धमें अष्टमी और पूर्णिमा तिथिके पूर्वार्द्धमें विष्टिभद्रा होती है ॥ १५२ ॥

प्रकारान्तरञ्च ।

तृतीयादशमीशेषे पूर्वं सप्त चतुर्दशी ।
पूर्वं पूर्णाष्टमी शुक्ले चतुर्थ्येकादशी परे ॥ १५३ ॥

इति सारसंग्रहे ।

अर्थ-प्रकारान्तरसे सारसंग्रह नामकग्रन्थमें लिखा है कि, तृतीया और दशमीके शेपार्द्धमें भद्रा होती है, शुक्लपक्षमें पूर्णिमा और अष्टमीके पूर्वार्द्धमें, चतुर्थी और एकादशीके परार्द्धमें भद्रा होती है ॥ १५३ ॥

अथ विष्टिभद्रोत्पत्तिः ।

दैत्येन्द्रैः समरेऽमरेषु विजितेष्वीशः क्रुधा दृष्टवां-
स्तत्कायात्किल निर्गता खरमुखी लांगूलिनी च त्रिपात् ।
विष्टिः सप्तभुजा मृगेन्द्रगलका स्थूलोदरी प्रेतगा
दैत्यघ्नी मुदिता सुरैस्तु करणप्रान्ते नियुक्ता सदा ॥ १५४॥

अर्थ-अब विष्टिभद्राकी उत्पत्ति वर्णन करते हैं। पूर्व समय देवासुरसंग्राममें जब

देवगण असुरोंसे पराजित होकर शिवके निकट आकर समस्त वृत्तान्त सुनाया तब महादेवजी अत्यन्त क्रोधयुक्त हुए उसी समय महादेवजीके शरीरसे गर्दभके समान मुखवाली पुच्छधारिणी ( पूँछको धारण कियेहुए ) त्रिपादविशिष्टा ( तीन पाओंवाली ) सप्तभुजा ( सात भुजाओंको धारणकिये ) सिंहके समान जिसका गलदेश है, स्थूलोदरी, ( बडे पेटवाली ) प्रेतके समान शरीरको धारणाकिये विष्टि भद्रा नाम्नी एक मूर्त्तिने निकलकर असुरगणको विनाशकरके देवताओंसे स्थानकी प्रार्थना करी, तो देवतागण प्रसन्न होकर विष्टिभद्राको करणके प्रान्तभागमे सदैक लिये नियुक्त करदेतेहुए ॥ १५४ ॥

अथ विष्टिभद्राया अङ्गविभागः।

नाड्यस्तु पञ्च वदनं गलकस्तथैका।
वक्षो दशैकसहिता तियतं चतस्रः॥
नाभिः कटिः षडथ पुच्छतलं च तिस्रो।
विष्टेर्ध्रुवं निगदितोऽङ्गविभाग एषः॥ १५५॥

अर्थ-अब विष्टिभद्राका अंगविभाग वर्णन करते हैं। जिस २ तिथिके पूर्वार्द्ध वा परार्द्ध विष्टिसंज्ञामें कहेगये हैं उनको त्रिंशांश करनेसे प्रथमके पांच अंशोंका विष्टिभद्राका मुख है. इसी प्रकार एक अंशका गलदेश ( गला ) है. ग्यारह अंशक वक्षःस्थान है, चार अंशकी नाभि है, छः अंशकी कटि है और तीन अंशकी पूँछ है। इन समस्त स्थानोंका फलाफल नीचे लिखा है॥ १५५॥

अथांगविभागफलम्।

मुखे कार्यध्वस्तिर्भवति मरणञ्चाथ गलके
धनग्लानिर्वक्षस्यथ कटितटे बुद्धिविलयः॥
कलिर्नाभिर्देशे विजयमथ पुच्छे च जगदुः।
शरीरे भद्रायाः पृथगिति फलं सर्वमुनयः॥ १५६॥

अर्थ-अब विष्टि भद्राके अंगविभागका फल कहा जाताहै। विष्टिभद्राके मुखमें अर्थात् ( प्रथम पांच दण्डके मध्यमें ) कार्यकी हानि होती है, इसी प्रकार गलदेशमें मृत्यु, वक्षदेशमें धनकी हानि, कटिदेशमें बुद्धिनाश, नाभिदेशमें कलह और पुच्छदेशमें ( शेष तीन दण्डके बीचमें ) कार्य करनेसे विजय अर्थात् वह सिद्ध होताहै॥ १५६॥

अथ भद्रास्थितिनिर्णयः।

मेषोक्षकर्कमिथुने घटसिंहमीन-

कर्केषु चापमृगतौलिसुतासु सूर्ये ।
स्वर्मर्त्यनागनगरीः क्रमशः प्रयाति ॥
विष्टिः फलान्यपि ददाति हि तत्र देशे ॥ १५७ ॥

अर्थ- अब विष्टिभद्राकी स्थिति निर्णय कहतेहैं । सौर वैशाख, ज्येष्ठ, मार्गशीर्ष और आषाढमें विष्टिभद्राका स्वर्गलोकमें वास होताहै, फाल्गुन भाद्रपद चैत्र और श्रावण मासमें भद्राकावास मृत्युलोकमें होताहै और पौष,माघ,कार्तिक आश्विनमासमें भद्राका नागलोकमें वास होताहै । विष्टिभद्राके किस स्थानमें वास करनेसे क्या फल होताहै उसको लिखते हैं ॥ १५७ ॥

अथ विष्टिभद्राफलम् ।

स्वर्गे भद्रा शुभं कुर्यात्पाताले च धनागमम् ।
मर्त्यलोके यदा भद्रा सर्वकार्यविनाशिनी ॥ १५८ ॥

अर्थ-भद्रा स्वर्गमें रहनेसे शुभफल प्रदान करती है, पाताल ( नागलोक ) में रहनेसे धनका सञ्चय होता है और मृत्युलोकमें रहनेसे समस्त कार्यका विनाश होता है ॥ १५८ ॥

केषु केष्वपि कार्येषु सर्वाण्येव तु योजयेत् ।
विहाय विपरौद्राणि विष्टिं सर्वत्र वर्जयेत् ॥ १५९ ॥ ( ख )

अथ-अब करणका फल कहतेहैं, किस २ कार्यविशेषमें बवादि समस्त करण प्रशस्त हैं अब उनको कीर्त्तन करते हैं, यात्रादिकार्यमें गर,वणिज और विष्टिकरण (विष्टिभद्रा) विषप्रदान और युद्धादि कार्यमें प्रशस्त हैं, किन्तु और किसी कार्यमें शुभकारक नहीं, केवल पुच्छके तीन दण्ड समस्त शुभकार्यमें शुभ होते हैं ॥१५९॥

( ख ) करणानां फलमाह–काप्याति । केषु केषु कर्मसु सर्वाण्येव करणानि योजयेत् । केष्वित्यनेन यात्रादिषु गरवणिजविष्टयस्त्याज्या इत्यर्थः । तथाच वक्ष्यति " गरवणिजविष्टिपरिवर्जितानि करणानि यातारीगानि" इति विपरौद्रकर्माणि त्यक्त्वा विष्टिं सर्वत्र वर्जयेत् विषप्रदाने तु युद्धादिरौद्रकर्मणि च विष्टिर्विहितेत्यर्थः । तथाच व्यतीपातविष्टिवैधृतिपापग्रहलग्नदिवसेषु चौर्यावस्कन्दानृतसंग्रामाः सिद्धिमायान्ति तत्र च विष्टेः शेषदण्डत्रये पुच्छभागे शुभकर्म कर्त्तव्यम्।तथाच राजमार्त्तण्डे "विष्टिं भुजङ्गमाकारां केचिदिच्छन्ति दारुणाम् । भुजङ्गस्य मुखे ज्योतिर्न तु पुच्छे कदाचन । आद्यं तस्या भवति घटिकाः पञ्च कण्ठस्तथैका वक्षश्चैकादश निगदिता नाभिदेशश्चतस्रः । पुच्छास्तिस्रः कटिरपि तथा षट् च पूर्वं मुनीन्द्रैरगरया तेषां न शुभफलदा वर्जयेदुत्तमस्ताम् ॥" पुच्छस्य पूर्वं षट् घटिका कटिः तत्परं दण्डत्रयं पुच्छमित्यर्थः । तथाच तत्रैव–"कार्यं न सिध्यति मुखे मरणं गलस्यादर्थक्षयो हृदि कटावपि बुद्धिनाशः । नाभौ भयं विजयलब्धिरतीव पुच्छे विष्टिप्रमाणफलमेतदुशन्ति सन्तः ॥"

अन्यच्च ।

**विहाय विपरोद्वाणि विष्टिं सर्वत्र वर्जयेत् ।**
**विष्टिशेषे त्रिदण्डेऽपि पुच्छे कार्यं शुभावहम्॥१६०॥ ( ख )**

अर्थ-वचनान्तरमें लिखा है कि, विपदानादि और युद्धादिकार्यके सिवाय और समस्त कार्यमेंही विष्टिभद्रा परित्याग करनी चाहिये, विष्टिपुच्छ ( शेषके तीन दण्ड ) में कार्य करनेसे सिद्ध होता है ॥ १६० ॥

प्रतिप्रसवो यथा ।

**दिवा परार्द्धजा विष्टिः पूर्वार्द्धा स्यात्तथा निशि ।**
**तदा भद्रा न दोषाय सा भद्रा भद्रदायिका ॥ १६१ ॥**

अर्थ-जिस तिथिके शेषार्द्धमें विष्टिभद्रा दिनमें हो अथवा जिस तिथिके पूर्वार्द्धमें विष्टिभद्रा रात्रिमें हो तो विष्टिभद्राजन्य दोष नहीं होता है ॥ १६१ ॥

अथ नवग्रहसंज्ञा ।

**सूर्यश्चन्द्रो मङ्गलश्च बुधश्चापि बृहस्पतिः ।**
**शुक्रः शनैश्चरो राहुः केतुश्चेति नव ग्रहाः ॥ १६२ ॥**

अर्थ-अब नवग्रहोंके नाम कहते हैं । रवि, चन्द्र, मङ्गल, बुध, बृहस्पति, शुक्र, शनि, राहु और केतु इन्हींको नवग्रह कहते हैं ॥ १६२ ॥

अथ वारकथनम् ।

**रविः सोमो मङ्गलश्च बुधो जीवः सितः शनिः ।**
**एतेषां नामतो वाराः सप्तैव परिकीर्तिताः ॥ १६३ ॥**

अर्थ-अब सात ग्रहोंके नामानुसार वार कहते हैं-रवि, सोम, मङ्गल, बुध, बृहस्पति, शुक्र और शनैश्चर इन्हींको सात वार कहते हैं ॥ १६३ ॥

अथ वारगुणकथनम् ।

**सितेन्दुबुधजीवानां वाराः सर्वत्र शोभनाः ।**

---

( ख ) घुजाटिनी सिते पक्षे देफिने वा सिते परे । अक्षरेण तिथिः प्रोक्ता स्वरे दण्डाः प्रकीर्त्तिताः । तद्यथा । " चतुर्थ्यां पञ्चदण्डाश्च एकादश्यां त्रिदण्डकाः । दण्डद्वयं तथाष्टम्यां पौर्णमास्यां चतुष्टयम् । तृतीयायां दशम्यान्तु दण्डैकादशकं तथा । सप्तम्याञ्च चतुर्द्दश्यां दण्डानाञ्च चतुष्टयम् । विष्टिपुच्छं तु विज्ञेयं तत्र स्याद्विजयो नृणाम् " ॥ इति हृदयानन्दकृतसारसंग्रहधृतवचनम् ॥

भानुभूसुतमन्दानां शुभकर्मसु केष्वपि ॥ १६४ ॥ ( ग )

अर्थ–शुक्र, सोम, बुध और बृहस्पतिवार समस्त शुभकार्यमें प्रशस्त हैं. रवि, मङ्गल और शनिवार यह किसी किसी कार्यविशेषमें शुभदायक होते हैं ॥१६४॥

नृपाभिषेको नृपतिप्रयाणं नृपस्य कार्यं नृपदर्शनञ्च ।
पञ्चाग्निकार्यं भुवि बीजपातं सर्वं तदादित्यदिने प्रशस्तम् ॥ १६५॥

अर्थ–राजाके अभिषेकमें, राजाके गमन ( जाने ) में, राजकार्यमें, राजदर्शनमें, अग्निकार्यमें और बीजवपनमें रविवार प्रशस्त है ॥ १६५ ॥

भेदाभिघातं नगरे पुरे वा सेनापतित्वञ्च तथैव राज्ञाम् ।
व्यायामशस्त्रव्यसनानि चौर्यं कुर्याद्दिने भूमिसुतस्य सर्वम् ॥ १६६॥

अर्थ–नगरमें अथवा पुरमें भेदाभिघात, राजाकी सेनापतित्वमें व्रती होना, व्यायाम, शस्त्र, व्यसन क्रिया और चौर्यक्रिया इन समस्त कार्योंमें मङ्गलवार प्रशस्त है ॥ १६६ ॥

स्थाप्यं समाप्यं क्रतुयूपकाष्ठं गृहप्रवेशं गजवाजिवाहम् ।
ग्रामे प्रवेशं नगरे पुरे वा कुर्याद्दिने सूर्यसुतस्य सर्वम् ॥ १६७ ॥

अर्थ–यूप ( यज्ञियकाष्ठ ) का स्थापन वा विसर्जन, गृहप्रवेश, हाथी और घोडेपर चढना, ग्रामप्रवेश अथवा पुरप्रवेश इन सब कार्योंमें शनिवार प्रशस्त है ॥ १६७ ॥

इतिवंशावरेलीनिवासिकान्यकुब्जकुलभूषणभारद्वाजगोत्रत्रिपाठ्युपनामकेनपण्डित बाँकेलालात्मजेन श्यामसुन्दरशर्मणा सम्पादिते भाषाटीकया विभूषिते च ज्योतिषतत्त्वसुधार्णवे संज्ञाख्यः प्रथमस्तरंगः ॥ १ ॥

---

( ग ) वारशुद्धिमाह–सितेति । सर्वत्र सर्वकर्मस्वित्यर्थः । रविभौमशनीनां वाराः केष्वपि शुभकर्मसु शोभनाः न तु सर्वकर्मसु । तथाच राजमार्त्तण्डे–" जीवार्कभौमवाराश्च शस्ताः पुसवने विधौ " तथा पशुपतिदीपिकायाम्–" स्थाप्यं समाप्यं क्रतुयूपकाष्ठम्" इत्यादि । एतेन केष्वपि शुभकर्मसु शुभाः अर्थादशुभकर्मसु सर्वेप्यपि पापग्रहवाराः शुभा इति तात्पर्यम् । तथाच–" व्यतीपातविष्टिघृतिपापग्रहलग्नादिवसेषु । चौर्याधस्कन्दानृतसग्रामाः सिद्धिमायान्ति ॥ " इति ।

# द्वितीयस्तरङ्गः २.

अथ विवाहः।

तत्रादौ कन्यापरीक्षामाह।

**धर्मार्थकाममोक्षाणां दाराः संप्राप्तिहेतवः।**
**परीक्ष्यन्ते प्रयत्नेन पूर्वमेव करग्रहात् ॥ १ ॥**

अर्थ-धर्म, अर्थ, काम और मोक्ष इन चारों पदार्थोंके देनेवाली पत्नी है, अतएव विवाहके पूर्वमें भाविपत्नीके लक्षणालक्षणको अवश्य विचारना चाहिये॥१

अथ कन्यालक्षणम्।

**अव्यङ्गाङ्गीं सौम्यनाम्नीं हंसवारणगामिनीम्।**
**तनुलोमकेशदशनां मृद्वङ्गीमुद्वहेत्स्त्रियम् ॥ २ ॥ (अ)**

इति मनुः।

अर्थ-अब कन्याके लक्षण कहते हैं। अविकलाङ्गी, शुभनामवाली, हंस और हाथीके समान चलनेवाली; रोम, केश और दाँत जिसके अतिसूक्ष्म हों इस प्रकारकी कोमलाङ्गी कन्या विवाहके उपयुक्त होतीहै,इस प्रकार मनुजीने कहाहै।२

**हंसस्वनां मेघवर्णां मधुपिंगललोचनाम्।**
**तादृशीं वरयेत्कन्यां गृहस्थः सुखमेधते ॥ ३ ॥**

अर्थ-हंसके कण्ठध्वनिके समान जिसके कण्ठकी ध्वनि हो, मेघके समान वर्णवाली, जिसके मधुपिंगल नेत्र हों इस प्रकारकी कन्याको विवाहनेसे गृहस्थीगणको सुख प्राप्त होता है ॥ ३ ॥

**प्रतिष्ठिततलाः सम्यग्रक्ताम्भोजसमत्विपः।**
**तादृशाश्चरणा धन्या योषितां भोगवर्द्धनाः ॥ ४ ॥**

इति भविष्यपुराणे।

---

(अ) कन्यालक्षणमाह-अव्यङ्गाङ्गीमिति।अव्यङ्गाङ्गीम् अविकलाङ्गी सम्पूर्णाङ्गीमित्यर्थः। सौम्यनाम्नी मनोहरनाम्नी यशोदा, सुभद्रा, गौरीत्यादि । उग्रनाम्नीस्तु वर्जयेच्चामुण्डाभैरवीत्यादि। हंसहस्तिगामिनी मन्दगामिनीमित्यर्थः। तनुलोम्नी सूक्ष्मलोम्नीम् अकर्कशलोम्नीमित्यर्थः। अकर्कशकेशा तनुदन्ताम् आयामे दैर्घ्ये दन्तस्य सूक्ष्मत्वे ज्ञेयम्। मृद्वङ्गीं कोमलाङ्गीम् ईदृशीं स्त्रिय विवहेदित्यर्थः ॥

अर्थ-जिस कन्याके पदतल (पैरोंका तलवा) रक्तपद्मके समान अथ च भूमिलग्न हो इस प्रकारकी चरणयुक्त कन्या प्रशंसाके योग्य है ॥ ४ ॥

नोद्वहेत्कपिलां कन्यां नाधिकाङ्गीं न रोगिणीम् ।
नालोमिकां नातिलोम्नीं न वाचालां न पिंगलाम् ॥ ५ ॥
नर्क्षवृक्षनदीनाम्नीं नान्त्यपर्वतनामिकाम् ।
न पक्ष्यहिप्रेष्यनाम्नीं नच भीषणनामिकाम् ॥ ६ ॥

इति मनुः ।

अर्थ-जो कन्या कपिलवर्णा, अधिकाङ्गी, रोगिणी, लोमहीना, अधिकलोमयुक्ता, वाचाला, पिङ्गलवर्णा और नक्षत्र, वृक्ष, नदी अन्त्यज, पर्वत, पक्षी, सर्प, दूती और भीषणनामिका हो उसका विवाह न करना चाहिये ॥ ५ ॥ ६ ॥

अथ प्रतिप्रसवमाह ।

गङ्गा च यमुना चैव गोमती च सरस्वती ।
नदीष्वासां नाम वृक्षे मालतीतुलसी अपि ।
रेवती चाश्विनी भेषु रोहिणी शुभदा भवेत् ॥ ७ ॥

इति मत्स्यसूक्ते ।

अर्थ-पूर्व वचनमें जो नक्षत्र, वृक्ष और नदीनामिका कन्याको वर्जित किया है, अब उसके प्रतिप्रसव कहते हैं यथा,-नदीके मध्यमें गङ्गा, यमुना, गोमती और सरस्वती, वृक्षके मध्यमें मालती और तुलसी और नक्षत्रके मध्यमें रेवती आश्विनी और रोहिणी नामकी कन्या विवाहमें शुभदायिका होती हैं ॥ ७ ॥

नेत्रे यस्याः केकरे पिंगले वा
स्याद्दुःशीला श्यावलोलेक्षणा च ।
कूपौ यस्या गण्डयोः सस्मितायां
निःसन्दिग्धां बन्धकीं तां वदन्ति ॥ ८ ॥

इति कृत्यचिन्तामणौ ।

अर्थ-जिस कन्याके दोनों नेत्र केकर वा पिङ्गलवर्ण अथवा चञ्चल हों जिसके हँसते समय दोनों गालोंमें कूप (कुआँ) के समान आकारका चिह्न दिखाई देवे, वह कन्या निश्चयही बन्धकी अर्थात् व्यभिचारिणी इसप्रकार शास्त्रवित्पण्डितगणोंने कहाहै ॥ ८ ॥

श्यामा सुकेशी तनुलोमराजी सुभ्रूः सुशीला सुगतिः सुदन्ता ।
वेदीविमध्या यदि पङ्कजाक्षी कुलेन हीनापि विवाहनीया ॥ ९ ॥
इति नन्दिकेश्वरपुराणम् ।

अर्थ–श्यामा (१) सुकेशधारिणी, जिसके सूक्ष्म लोम हों, दोनों भ्रुकुटीमें शोभनीय हो, जो कन्या सुशीलवती हो, जिसकी चाल हंसके समान हो. दाँत जिसके अत्यंत सुन्दर हों, कटिदेश जिसका अतिक्षीण हो, पङ्कजके समान जिसके दोनों नेत्र हों इस प्रकारकी कन्या यदि हीनकुलमें भी उत्पन्न हुई हो तोभी बुद्धिमान् मनुष्यको उसका विवाह करना चाहिये ॥ ९ ॥

धृष्टा कुदन्ता यदि पिङ्गलाक्षी लोम्ना समाकीर्णसमाङ्गयष्टिः ॥
मध्ये च पुष्टा यदि राजकन्या कुलेऽपि योग्या न विवाहनीया ॥ १० ॥

अर्थ–जो कन्या लज्जाहीन हो, कुत्सित जिसके दाँत हों, पिङ्गलवर्ण दोनों नेत्र हों अत्यन्त लोम जिसके शरीरमें हों, अङ्गयष्टि जिसकी समान हो और जिसकी मध्यदेश स्थूल हो इस प्रकारकी कन्या यदि उत्तम कुलमेंभी उत्पन्न हुईहो तोभी उसका विवाह न करना चाहिये ॥ १० ॥

रोमहीने समे स्निग्धे जङ्घे च क्रमवर्तुले ।
सा राजपत्नी भवति विशिरे सुमनोहरे ॥ ११ ॥

अर्थ–जिस कन्याकी दोनों जाँघें लोमशून्य समान स्निग्ध, गोलाकार और सुन्दर हों तो वह अवश्यही राजभार्या ( रानी ) होती है ॥ ११ ॥

गम्भीरा दक्षिणावर्त्ता नाभिः स्यात्सुखम्पदे ।
वामावर्त्ता समुत्ताना व्यक्तग्रन्थी न शोभना ॥ १२ ॥

अर्थ–जिस स्त्रीकी नाभि गम्भीर और दक्षिणावर्त्त हो तो वह सम्पत्तिकी मालिक होकर सुखभोग करतीहै और जिसकी नाभि वामावर्त्त, उन्नत, ( उठी हुई ) अथवा ग्रन्थी स्पष्ट दिखाईदे वह चिरकाल दुःखसे जीवन व्यतीत करती है ॥ १२ ॥

स्निग्धाः समुन्नतास्ताम्रा वृत्ताः पादनखाः शुभाः ।
राज्ञीत्वसूचकं स्त्रीणां पादपृष्ठं समुन्नतम् ॥ १३ ॥

अर्थ–जिस स्त्रीके पैरोके नाखून स्निग्ध, उन्नत, ताम्रवर्ण, वर्त्तुलाकार और

---

( १ ) " स्तनौ च कठिनौ यस्या नितम्बे च विशालता । मध्यक्षीणा च या नारी सा श्यामा परिकीर्त्तिता ॥ "

सुन्दर हों और जिसके पैरोंके ऊपरका भाग उठा हो वह स्त्री राजभार्या ( रानी ) होती है ॥ १३ ॥

यस्याः पादतले रेखा सा भवेत्क्षितिपाङ्गना ।
भवेदखण्डभोगा च या मध्याङ्गुलिसङ्गता ॥ १४ ॥

अर्थ-जिस कन्याके चरणतलमें शुभचिह्न हो तो वह रानी होती है । और जिसकी मध्यमाङ्गुली दूसरी अङ्गुलीसे मिलीहुईहो , तो वह चिरकालपर्यन्त सुख भोगती है ॥ १४ ॥

उन्नतो मांसलोऽङ्गुष्ठो वर्त्तुलोऽतुलभोगदः ।
वक्रो ह्रस्वश्च चिपिटः सुखसौभाग्यभञ्जकः ॥ १५ ॥

अर्थ-जिस वराङ्गनाका अँगूठा मांसल, वर्तुलाकार और उठा हो तो वह अत्यंत सौभाग्यशालिनी होती है, जिसका अँगूठा वक्र, ह्रस्व और चपटा हो तो उसको सुख नहीं होता है ॥ १५ ॥

दीर्घाङ्गुलीभिः कुलटा कृशाभिरतिनिर्द्धना ।
ह्रस्वाभिः स्याच्च ह्रस्वायुर्भग्नाभिर्भग्नवर्त्तिनी ।
चिपिटाभिर्भवेद्दासी विरलाभिर्दरिद्रिणी ॥ १६ ॥

अर्थ-जिस स्त्रीकी अङ्गुली दीर्घाकार हो, वह कुलटा होतीहै । अङ्गुली कृश होनेसे निर्द्धनी होतीहै और जो ह्रस्व हो तो उस स्त्रीकी आयु ( उमर ) कम होती है । अङ्गुली भग्नके समान होनेसे वह स्त्री भग्नदशामें अविवाहित रहकर जीवन व्यतीत करतीहै, चपटी अँगुली होनेसे वह दासी होती है और परस्पर जिसकी सब अंगुली विरल हों तो वह दरिद्रा होती है ॥ १६ ॥

परस्परं पदांगुल्यः समारूढा भवन्ति हि ।
हत्वा बहूनपि पतीन्परप्रेष्या तदा भवेत् ॥ १७ ॥

अर्थ-जिस स्त्रीकी समस्त अंगुली परस्पर संयुक्त हों वह अनेकपति नष्ट करके दूसरेकी दासी होती है ॥ १७ ॥

समपार्ष्णी शुभा नारी मृदुपार्ष्णी सुदुर्भगा ।
कुलटोन्नतपार्ष्णी स्याद्दीर्घपार्ष्णी च दुःखभाक् ॥ १८ ॥

अर्थ-जिस वराङ्गनाकी पीठ समान हो तो उसके शुभ लक्षण होते हैं, जिसकी

पीठ स्थूल हो वह दुर्भगा होती है, जिसकी पीठ उठी हो वह कुलटा होती है और जिसकी पीठ दीर्घ हो वह स्त्री दुःखभागिनी होती है ॥ १८ ॥

वृत्तं पिशितसंलग्नं जानुयुग्मं प्रशस्यते ।
निर्मांसं स्वैरचारिण्या दरिद्रायाश्च विश्लथम् ॥ १९ ॥

अर्थ-जिस स्त्रीकी दोनों जांघे गोलाकार और मांसल हों वह सौभाग्यवती होती है जिसकी दोनों जांघोंमें मांस न हो और जिसकी दोनों जांघें श्लथ हों वह दरिद्रा और दुश्चारिणी होती है ॥ १९ ॥

विशिरैः करभाकारैरूरुभिर्मसृणैर्घनैः ।
सुवृत्तै रोमरहितैर्भवेयुर्भूपवल्लभाः ॥ २० ॥

अर्थ-जिस वराङ्गनाकी दोनों जाँघें शिराशून्य, करिशावकके शुण्डकी समान सुगठित, घन, मसृण, गोलाकार और रोमशून्य हो तो वह स्त्री राजाको प्रिय ( प्यारी ) लगती है ॥ २० ॥

चतुर्भिरंगुलैः शस्ता कटिर्विंशतिसंयुतैः ।
समुन्नतनितंबाढ्या चतुरस्रा मृगीदृशाम् ॥ २१ ॥

अर्थ-जिस स्त्रीके चूतर उठे हुए हों, मोटे और स्थूल हों अत्यन्त विभवशालिनी होती है, किन्तु इसके विपरीत होनेसे दुःखभागिनी होती है ॥ २१ ॥

उदरेणातितुच्छेन विशिरेण मृदुत्वचा ।
योषिद्भवति भोगाढ्या नित्यमिष्टान्नसेविनी ॥ २२ ॥

अर्थ-जिस स्त्रीके जठर ( पेट ) का चर्म मुलायम हो, उदर कृश और रोमशून्य हो तो वह अत्यन्त सुख भोगती है और सर्वदा मिष्टान्नभोजन करती है॥२२

कुम्भाकारं दरिद्राया जठरञ्च मृदङ्गवत् ।
कूष्माण्डाभं यवाभञ्च दुष्पूरं जायते स्त्रियाः ॥ २३ ॥

अर्थ-जिस स्त्रीका जठर ( पेट ) कुम्भाकार वा मृदङ्गके समान हो तो वह दरिद्रा होती है, जिसका जठर कूष्माण्ड ( कुँभडे ) के तुल्य हो वा यवके समान हो तो उसके उदरको कोई भी परिपूर्ण नहीं करसकता है ॥ २३ ॥

निर्लोम हृदयं यस्याः समं निम्नत्ववर्जितम् ।
ऐश्वर्यं चाप्यवैधव्यं प्रियप्रेमा च सा भवेत् ॥ २४ ॥

अर्थ-जिस वराङ्गनाका हृदय निर्लोम हो और वक्षस्थल जिसका निम्न नहीं है वह ऐश्वर्यशालिनी और चिरकाल सौभाग्यवती रहती है और पतिकी अत्यन्त प्यारी होकर सर्वदा सुखभोग करती है ॥ २४ ॥

घनौ वृत्तौ पृथुदृढौ पीनौ शस्तौ पयोधरौ ।
स्थूलाग्रौ विरलौ सूक्ष्मौ वामोरूणां न शर्मदौ ॥ २५ ॥

अर्थ-जिस स्त्रीके दोनों स्तन वर्त्तुल, उच्च, कठिन और स्थूल हों तो वह स्त्री प्रशंसा करनेके योग्य है और दोनों स्तन सूक्ष्म और विरल हों तो अमङ्गलदायक होती है ॥ २५ ॥

दक्षिणोन्नतवक्षोजा पुत्रिणीष्वग्रणीर्मता ।
वामोन्नतकुचा सूते कन्यां सौभाग्यसुन्दरीम् ॥ २६ ॥

अर्थ-जिस स्त्रीका दहना स्तन उठा हो तो वह पुत्रवती और गृह ( घर ) की कर्त्री होकर सुखसे जीवन व्यतीत करती है और जिसका बायाँ स्तन उठा हो तो वह सौभाग्यशालिनी होकर सुन्दरी कन्याको उत्पन्न करती है ॥ २६ ॥

मूले स्थूलौ क्रमकृशावग्रेतीक्ष्णौ पयोधरौ ।
सुखदौ बाल्यकाले तु पश्चादत्यन्तदुःखदौ ॥ २७ ॥

अर्थ-स्त्रीके स्तनोंका मूलभाग स्थूल होवे ऊपरका भाग क्रमसे कृश होकर और अग्रभाग अत्यन्त सूक्ष्म हो तो वह स्त्री प्रथम अवस्थामें सुखभोगकर अनन्तर बहुत कष्ट भोगती है ॥ २७ ॥

अम्भोजमुकुलाकारमंगुष्ठांगुलिसम्मुखम् ।
हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥ २८ ॥

अर्थ-जिस स्त्रीके दोनों अँगुठोंका अग्रभाग पद्मके समान हो तो वह सुखोंको भोगती है ॥ २८ ॥

मृदुमध्योन्नतं रक्तं तलं पाण्योररन्ध्रकम् ।
प्रशस्तं शस्तरेखाढ्यमल्परेखं शुभप्रदम् ॥ २९ ॥

अर्थ-स्त्रीगणके करतल यदि शोणितवर्ण हों, छिद्रशून्य हों कोमल हों, अल्प रेखायुक्त हों और शुभरेखाविशिष्ट हों और मध्यस्थल उठाहो तब वह सौभाग्य-शालिनी होती है ॥ २९ ॥

विधवा बहुरेखेण विरेखेण दरिद्रिणी ।
भिक्षुकी सुशिराढ्येन नारी करतलेन वै ॥ ३० ॥

अर्थ-स्त्रियोंके करतलमें बहुत रेखा होनेसे वह विधवा होजाती हैं नियमित रेखा न रहनेसे वे दरिद्रा होती हैं और यदि करतलमें शिरा हों तो वे स्त्रीगण भिक्षाद्वारा अपने जीवनका निर्वाह करती हैं ॥ ३० ॥

मत्स्येन सुभगा नारी स्वस्तिकेन तु सुप्रजाः ।
पद्मेन भूपतेः पत्नी जनयेद्भूपतिं सुतम् ॥ ३१ ॥

अर्थ-स्त्रियोंके करतलमें मत्स्यरेखा होनेसे वे सौभाग्यशालिनी होती हैं, स्वस्तिकाकार चिह्न होनेसे वे उत्तम पुत्रको प्रसव ( उत्पन्न ) करती हैं और पद्मका चिह्न होनेसे राजपत्नी ( रानी ) होती हैं और उनके पुत्रभी राजा होते हैं ॥ ३१ ॥

अथ वैवाहिकनक्षत्रादिकथनम् ।

रेवत्युत्तररोहिणीमृगशिरोमूलानुराधामघा-
हस्तास्वातिषु तौलिषष्ठमिथुनेपूद्यत्सु पाणिग्रहः ।
सप्ताष्टान्त्यबहिःशुभैरुडुपतावेकादशे द्वित्रिगे ( आ )
क्रूरैस्त्र्यायषडष्टगैर्न तु भृगौ षष्ठे कुजे चाष्टमे ॥ ३२ ॥ ( इ )

अर्थ-अब विवाहके विहित नक्षत्रादि कीर्त्तन करतेहैं यथा-रेवती, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, मृगशिरा, मूल, अनुराधा, मघा, हस्त और स्वातिनक्षत्रमें, तुला, कन्या और मिथुन लग्नमें विवाह प्रशस्त है । यदि लग्नके सप्तम, अष्टम और द्वादश स्थानमें शुभग्रह न हों और लग्नसे चन्द्र यदि एकादश द्वितीय अथवा तृतीय स्थानमें स्थित हो और पापग्रहगण तृतीय, एकादश, षष्ठ और अष्टम स्थानमें हों तब शुभदायक होताहै, किन्तु लग्नके षष्ठस्थानमें शुक्र और अष्टम स्थानमें मङ्गल रहनेसे निषिद्ध होताहै ॥ ३२ ॥

( आ ) लग्नादित्यनेन सप्तादिना सम्बन्ध इत्यर्थः ।

( इ ) वैवाहिकनक्षत्रादीन्याह-रेवतीत्यादि । रेवत्युत्तरादिनक्षत्रेषु कन्यातुलामिथुनेषु उद्यत्सु लग्नेषु पाणिग्रहो विवाहः कार्यः । तथा लग्नात्सप्ताष्टान्त्यबहिःस्थितैः सप्ताष्टद्वादशस्थानानि वर्जयित्वा अन्यत्र स्थितैः शुभग्रहैः तथा लग्नादेकादशद्वितीयतृतीयगते चन्द्रे तथा लग्नात् त्र्यायषडष्टगैः पापैः पाणिग्रहः कार्य इत्यन्वयः । अत्र च शुक्रस्य षष्ठस्थाने शुभफलदत्वे प्राप्ते कुजस्य चाष्टमे शुभफलदत्वे प्राप्ते निषेधमाह-न तु भृगौ षष्ठे कुजे चाष्टम इति ॥

दंपत्योर्द्विनवाष्टराशिरहिते दारानुकूले रवौ
चन्द्रे चार्ककुजार्किशुक्रवियुते मध्येऽथवा पापयोः ।
हित्वा च व्यतिपातवैधृतिदिनं विष्टिश्च रिक्तां तिथिं
क्राहायनचैत्रपौषरहिते ऽग्नांशके मानुषे ॥ २२ ॥ ( ई )

अर्थ–दम्पतीके अर्थात् वर और कन्याके द्विद्वादश, नवमपञ्चम और षडष्टकादि

( ई ) सङ्क्षेपेण दम्पत्योर्योटकादीन्याह–दम्पत्योरिति । दम्पत्योरन्योऽन्ये द्विनवाष्टराशिराहितं रहितामिति भावे क्तः । द्विद्वादशनवपञ्चकषडष्टकराशियोटकत्यागे सति पाणिग्रहः कार्यः इति पूर्वश्लोकेनान्वयः । रवौ दारस्य वरस्य अनुकूले सति तथातिग्मकिरणश्च पुस इत्युक्तमेव । तथा चाभिधानं स्याद्दारको माणवक इति । चन्द्रे च शनिकुजरविशुक्रयोगरहिते सति केचित्तु सर्वग्रहायुक्त इत्याहुः । यथा राजमार्त्तण्डे–" दारिद्र्यं रविणा कुजे च मरणं सौम्येन नष्टप्रजा दौर्भाग्यं गुरुणा सितेन सहिते चन्द्रे च सापत्न्यकम् । प्रव्रज्यार्कसुतेन सेन्दुजगुरौ वाञ्छन्ति केचिच्छुभं द्व्याद्यैर्मृत्युरसद्ग्रहैः शुभयुतैर्दीर्घप्रवासोऽपि वा " । तथा राहुयुक्तश्चन्द्रोऽपि न शुभः । यथा राजमार्त्तण्डे–" राहुसमेते चन्द्रे प्राप्ता पाणिग्रहन्तु या कन्या।परपुरुषासक्तहृदया नीचैरपि प्रयाति संसर्गम्" इति । अथवा शब्दसमुच्चये । चन्द्रे च पापयोर्मध्ये स्थिते सति विवाहो न कार्य इत्यर्थः । यथा, तत्रैव"सक्रूरे वा शशिनि क्रूरद्वयमध्यगे विलग्ने वा । शुभकर्माणि स्तम्भेच्छुर्नंशोषादिशेन्नरेन्द्राणाम्"तथा व्यतीपातवैधृतियोगयुक्तादिनं त्यक्त्वा विष्टिकरणं रिक्ता तिथिश्च त्यक्त्वा पाणिग्रहः कार्य इत्यन्वयः।अत्र च"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि।तत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात्"इति सानकाशश्राद्धनिषेधात् नन्दातिथौ त्रयोदश्याश्च श्राद्धसम्भवे विवाहो निषिद्ध इत्यर्थः।क्राहायनचैत्रपौषरहित इति। क्राहायनचैत्रपौषाणां रहिते त्यागे सतीत्यर्थः ।क्रूराहाःपापग्रहवाराःएतेन सोमबुधगुरुशुक्रवाराःप्रशस्ता इत्यर्थः ।अत्र च नन्दायां भार्गवदिने इत्यादिना सानकाशश्राद्धनिषेधेऽपि शुक्रवारे विवाहः कार्यः शुक्रवारस्य शब्दोपात्तत्वे तत्तद्विधिवैयर्थ्यापत्तेः । यथा पशुपतिदीपिकायां "पौष्णानुराधमघरोहिणिमूलहस्ताः स्वात्युत्तरामृगशिरश्च शुभा विवाहे । वारास्तथा बुधबृहस्पतिशुक्रचन्द्रा रिक्तेतराश्च तिथयः खलु विष्टिहीनाः "॥ एतेन यत्र सामान्यविधिस्तत्र सानकाशश्राद्धनिषेधः । यत्र शब्दो विशेषविधिस्तत्र कर्तव्यमेवेति निर्गलितोऽर्थः । तथा क्रूरग्रहस्थापन सञ्चारदिनम् केचित्तु क्रूरायनं दक्षिणायनमित्याहुः । तन्न । पौषनिषेधस्य व्यर्थत्वादिति तथा पौषचैत्रमासयोस्त्यागे सतीत्यर्थः । राजमार्त्तण्डे–"माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च । दशमासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः "॥ केचित्तु याम्यायने निषेधमाहुः । यथा तत्रैव "ऊढा दक्षिणमार्गगे दिनपतौ नैव प्रतिष्ठां व्रजेत्कन्येत्याह समस्तशास्त्रकुशलो वेद्यो मुनीनां मतम् । साध्वीत्युत्तरमार्गगे सुतधनोपेता विहायापरे चैत्रं पौषयुतं हरेश्च शयनं शेषं जगुः शोभनम्॥"इति।अत्रच मुनिमतद्वैधे वैकल्पिक एव शास्त्रार्थः षोडशिग्रहणाग्रहणवदिति । अत्र च कन्याया वत्सरशुद्धिमाह । राजमार्त्तण्डे "मासत्रयादूर्ध्वमयुग्मवर्षे" इत्यादि । "अष्टवर्षा भवेद्गौरी नववर्षा तु रोहिणी।दशवर्षा भवेत्कन्या

न रहनेसे वरके सूर्य और कन्याके चन्द्र शुद्ध रहनेसे और सूर्य, मङ्गल, शनि और शुक्रके साथ अथवा पापद्वयके मध्यमें चन्द्रकी स्थिति न होनेसे और व्यतीपात, वैधृति, विष्टिकरण, रिक्ता तिथि, पापग्रहके वार दक्षिणायन चैत्र और पौषमास त्यागकरके द्विपद लग्नके नवांशमें विवाह प्रशस्त है ॥ ३३ ॥

अथ निषिद्धमासकथनम् ।

आषाढे धनधान्यभोगरहिता नष्टप्रजा श्रावणे
वेश्या भाद्रपदे इषे च मरणं रोगान्विता कार्त्तिके ।
पौषे प्रेतवती वियोगबहुला चैत्रे मदोन्मादिनी
अन्येष्वेव विवाहिता पतिरता नारी समृद्धा भवेत् ॥ ३४ ॥

अर्थ-अब विवाहके निषिद्ध मास कहतेहैं यथा-आषाढमासमें कन्याका विवाह होनेसे धनधान्यभोगसे रहित होतीहै, श्रावणमासमें विवाह होनेसे सन्तानका नाश होजताहै। इसी प्रकार भाद्रपदमें वेश्या, आश्विनमें मृत्यु, कार्तिकमें रोगवती, पौषमें प्रेतगा और वियोगान्विता और चैत्रमासमें विवाह होनेसे वह कन्या मदोन्मत्ता होती है । वैशाख, ज्येष्ठ, मार्गशिर, माघ और फाल्गुन मासमें कन्याका विवाह होनेसे पतिपरायण और समृद्धिशालिनी होतीहै ॥ ३४ ॥

अथ प्रशस्तमासाः ।

माघफाल्गुनवैशाखज्येष्ठमार्गाःशुभावहाः ।
उक्तस्तथैव चाषाढः कथितः शुभदो बुधैः ॥३५॥

अर्थ-मतान्तरमें कहाहै कि, माघ, फाल्गुन, वैशाख, ज्येष्ठ, अगहन और आषाढ मास विवाहमें शुभदायक हैं ॥ ३५ ॥

माङ्गल्येषु विवाहेषु कन्यासंवरणेषु च ।
दश मासाः प्रशस्यन्ते चैत्रपौषविवर्जिताः ॥ ३६ ॥ राजमार्त्तण्डे ।

अर्थ-राजमार्त्तण्डमें लिखा है कि, कन्याके शुभ विवाहमें चैत्र और पौषमासको छोडकर और दशमासही प्रशस्त हैं ॥ ३६ ॥

—परतस्तु रजस्वला ॥" ( नवत्वर्षातुकन्यका । सम्प्राप्ते द्वादशे वर्षे इति तु पाठः ) "माता चैव पिता चैव ज्येष्ठभ्राता तथैव च । त्रयस्ते नरकं यान्ति दृष्ट्वा कन्यां रजस्वलाम् । यस्तां विवाहयेत्कन्यां ब्राम्हणो मदमोहितः । असम्भाष्यो ह्यपाङ्क्तेयो स विप्रो वृषलीपतिः ।" अतिप्रौढापान्तु कालनियममाह-" अतिप्रौढा तु या कन्या नानुकूलं प्रतीक्षते" इति । लग्नांशके मानुष इति कन्यातुलामिथुनलग्ने तन्नवांशे च पाणिग्रहः कार्य इत्यर्थः । सौभारिणा तु कुम्भधनुषोरप्युक्त तदग्राह्यम् " कन्यातुलाभृन्मिथुनेषु साध्वी शेषेष्वसाध्वी धनवर्जिता च " इति वक्ष्यमाणत्वात् । उक्तञ्च तौलिषष्ठामिथुनेष्वपूर्यास्विति ॥

अथ प्रशस्ताप्रशस्तवारकथनम् ।

**गुरुशुक्रबुधेन्दूनां दिनेषु सुभगा भवेत् । ***
**सूर्यार्किभूमिपुत्राणां दिनेषु कुलटा मता ॥ ३७ ॥**

अर्थ–अब विवाहके शुभाशुभ वार कहते हैं । बृहस्पति, शुक्र, बुध और सोमवारमें विवाह होनेसे कन्या सौभाग्यशालिनी होतीहै और रवि, शनि और मङ्गलवारमें विवाहिता कन्या कुलटा होजातीहै ॥ ३७ ॥

अपरञ्च ।

**अङ्गारकदिने चैव या कन्या परिणीयते ।**
**न तृप्तिं पुरुषैर्याति काष्ठैरिव हुताशनः ॥ ३८ ॥**

अर्थ–वचनान्तरमें कहाहै कि, मङ्गलवारमें यदि कन्याका विवाह हो तो काष्ठदाहसे अग्निकी जिस प्रकार तृप्ति नहीं होतीहै, उसी प्रकार विवाहिता कन्याभी पुरुष द्वारा तृप्तिलाभ नहीं करसक्ती है ॥ ३८ ॥

अन्यच्च ।

**अर्कार्किभूमिपुत्राणां दिनेषु कलहप्रिया ।**
**सापत्न्यं समवाप्नोति तुषारकरवासरे ॥ ३९ ॥ ( उ )**

अर्थ–ग्रन्थान्तरमें कहाहै कि, रवि, शनि और मङ्गल वारमें विवाह होनेसे कन्या कलहकारिणी होती है और सोमवारमें विवाहिता कन्या सपत्नीके साथ कलहकारिणी होतीहै ॥ ३९ ॥

अथ तिथिकथनम् ।

**अमावस्यायां रिक्तासु करणे विष्टिसंज्ञके ।**
**यः करोति विवाहं स शीघ्रं याति यमालयम् ॥ ४० ॥ (ऊ)**

अर्थ–अमावस्या रिक्ता ( चतुर्थी नवमी और चतुर्दशी ) और विष्टि भद्रातिथिमें जो मनुष्य विवाह करै, वह अवश्यही यमभवनमें गमन करताहै ॥ ४० ॥

* " गुरुशुक्रबुधाहेषु विवाहः शुभदः सदा " इति ।

( उ ) " अङ्गारकदिने नारी कान्तं दृष्ट्वा पलायते । सूर्यपुत्रदिने चैव धनपुत्रविनाशिनी ॥ ऊढा चार्कदिने कन्या धृष्टा भवति निश्चितम् " इति च ।

( ऊ ) तिथयः प्रतिपद्दर्शाष्टमीरिक्ता विना शुभाः इति । "प्रतिपद्दुःखजननी द्वितीया प्रीतिवर्द्धिनी । सौभाग्यदा तृतीया च चतुर्थी चार्थनाशिनी । पञ्चम्या सुखवित्तानि षष्ठी वित्तप्रदायिनी । विद्याशीलसुखाप्तिः स्यात्सप्तम्यामफलाष्टमी । नवमी शोकफलदा आनन्दो दशमीदिने । सुखदैकादशी चैव सफला द्वादशी स्मृता ॥ मानपुत्रौ त्रयोदश्यां चतुर्दश्यां तु दोषदे । फलं बहुविधं नित्यं पञ्चदश्यां विशेषतः ॥ " इति च ।

रिक्तासु विधवा कन्या दर्शेऽपि स्याद्विवाहिता ।
शनैश्चरदिने चैव यदि रिक्ता तिथिर्भवेत् ।
तस्यां विवाहिता कन्या पतिसन्तानवर्द्धिनी ॥ ४१ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ-रिक्ता और अमावस्या तिथिमें विवाहिता कन्या विधवा होतीहै. किन्तु शनिवारमें यदि रिक्ता तिथि हो तब उसमें कन्याका विवाह होनेसे वह कन्या पतिके संसर्गसे बहु संतान प्रसव ( उत्पन्न ) करती है ॥ ४१ ॥ ( ऋ )

तिथिश्चतुर्थी नवमी चतुर्दशी तथाष्टमी देवकुहूदिनश्च ।
विष्टिव्यतीपातदिवाविवाहे वैधव्यमाप्नोत्यपि देवकन्या॥४२॥

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिन्तामणिमें लिखाहै कि, चतुर्थी, नवमी, चतुर्दशी, अष्टमी, अमावस्या, विष्टि भद्रा तिथिमें, व्यतीपातयोगमें और दिनमें विवाह होनेसे नारी देवकन्या होनेसेभी उसको वैधव्य प्राप्त होताहै ॥ ४२ ॥

अथ नक्षत्रकथनम् । ( ऋ )

पूर्वात्रये विशाखायां शिवाद्यभचतुष्टये ।
ऊढा चाण्डे भवेत्कन्या विधवातो विवर्जयेत् ॥ ४३ ॥

इति भीमपराक्रमे ।

अर्थ-पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, विशाखा, आर्द्रा, पुनर्वसु, पुष्य और आश्लेषा नक्षत्रमें विवाहिता कन्या शीघ्रही विधवा होतीहै अतएव यह सब नक्षत्रोंमें विवाह निषिद्ध है ॥ ४३ ॥

विष्णुभाद्ये त्रिके चित्रे ज्येष्ठायां ज्वलने त्रिके । *
एभिर्विवाहिता कन्या भवत्येव सुदुःखिता ॥ ४४ ॥

अर्थ-श्रवण, धनिष्ठा, शतभिषा, चित्रा, ज्येष्ठा, अश्विनी, भरणी और कृत्तिका नक्षत्रमें विवाहिता कन्या अत्यन्त दुःखभागिनी होतीहै ॥ ४४ ॥

---

( ऋ ) मङ्गलवारमें जया ( त्रयोदशी, अष्टमी और तृतीया तिथि ) होनेसे अष्टमीतिथिका दोष ग्राह्य नहीं होताहै ॥

( ऋ ) " मूला मघानुराधा च रोहिण्युत्तररेवती । हस्ता मृगशिराः स्वातिर्विवाहे च सुशोभनाः " । इति प्रशस्तनक्षत्रम् ।

* ज्वलने त्रिके ज्वलनान्तात्रिके इत्यर्थः इति माधवाचार्यः । ज्वलने यमे इत्यपि क्वचित्पाठः ।

**कन्यायाः पाणिं गृहीयात्रिषु त्रिषूत्तरादिषु**
**स्वातौ मृगशिरोरोहिण्यां वा ॥ ४५ ॥ ( ल )**

इति पारस्करः ।

अर्थ-पारस्करने कहाहै कि, उत्तराफाल्गुनी, हस्त, चित्रा, उत्तराषाढा, श्रवण, धनिष्ठा, उत्तराभाद्रपदा, रेवती, अश्विनी, स्वाति मृगशिर औ रोहिणी इन नक्षत्रोंमें कन्याका विवाह करे । चित्रा, श्रवण, धनिष्ठा और अश्विनी नक्षत्रमें यजुर्वेदियोंका विवाह होताहै । कोई २ यजुर्वेदी आपत्कालमें इन चार नक्षत्रोंका व्यवहार कहते हैं ॥ ४५ ॥

**आद्ये मघाचतुर्भागे नैर्ऋतस्याद्य एव च ।**
**रेवत्यन्तचतुर्भागे विवाहः प्राणनाशकः ॥ ४६ ॥ ( ल )**

इति गण्डपादवर्जनम् । *

अर्थ-विवाहमें विहित नक्षत्र मघा, मूल और रेवतीको विशेष कहते हैं यथा मघा और मूलनक्षत्रके प्रथम पादमें और रेवती नक्षत्रके शेष पादमें विवाह होनेसे प्राणनाश होताहै अतएव मघा और मूलनक्षत्रके प्रथमपाद और रेवती नक्षत्रका शेष पाद इनको त्याग करके विवाह करे ॥ ४६ ॥

अथ त्याज्ययोगकथनम् ।

**व्याघातशूले परिघातिगण्डे गण्डे व्यतीपातपुरन्दरान्ते ॥**
**पाणिग्रहं यो विदधाति शीघ्रं यमालयं याति सवैधृतौ च ॥४७॥ (ए)**

इति ज्योतिषतत्त्वे ।

अर्थ-विवाहमें नित्य योगोंमेंसे कौन योग त्याज्य होता है अब उसको कहते हैं । व्याघात, शूल, परिघ, अतिगण्ड, गण्ड, व्यतीपात, इंद्र और वैधृतियोंगमें विवाह होनेसे शीघ्रही यमालयको जाता है, अतएव उक्त समस्त योगमें विवाह न करना चाहिये ॥ ४७ ॥

( ल ) चित्राश्रवणधनिष्ठाश्विनिनक्षत्र यजुर्वेदिविषयमापद्विषय वेति । सत्कृत्यमुक्तावल्याम् ।

( ल ) गण्डपादवर्जनमाह-आद्यइति । मघाया आद्ये चतुर्थभागे प्रथमपादे नैर्ऋतस्य मूलायाश्च प्रथमे पादे रेवत्या अन्तपादे विवाहः प्राणनाशकः अन्येषान्तु गण्डानामवैवाहिकनक्षत्रत्वेन स्वत एव निषेध इति ।

* " मासान्ते म्रियते कन्या तिथ्यन्ते स्यादपुत्रिणी । नक्षत्रान्ते च वैधव्यं वर्षान्ते धननाशनम् " इति ॥

( ए ) " वैधृतिकैः परिणीता विकलेन्द्रिया व्यतीपाते । विष्ट्यां मरणं नित्यं सुभगा षट्स्वपि करणेषु । ध्रुवगणैः शकुनाद्यैः परिगृहाद्ध्रुवं मृत्युम् ॥ "

अन्यच्च ।

कुलच्छेदो व्यतीपाते परिघे स्वामिघातिनी ।
वैधृतौ विधवा नारी विपदाहोऽतिगण्डके ॥ ४८ ॥
व्याघाते व्याधिसंघातः शोकार्त्ता हर्षणे तथा ।
शूले च व्रणशूलं स्याद्गण्डे रोगभयं तथा ॥ ४९ ॥
विष्कुम्भेऽप्यहिदंशः स्याद्वज्रके मरणं भवेत् ।
एते वै दारुणाः सर्वे दश योगाः प्रकीर्तिताः ॥ ५० ॥

इति रत्नमालायाम् ।

अर्थ-रत्नमालानामक ग्रन्थमें लिखा है कि, व्यतिपातयोगमें विवाह होनेसे कुलच्छेद होता है, इसी प्रकार परिघयोगमें स्वामीका नाश, वैधृतिमें विधवा, अतिगण्डमें विपदाह, व्याघातमें समस्त रोग, हर्षणमें शोक, शूलमें व्रण और शूलरोग, गण्डमें रोगभय, विष्कम्भमें सर्पदंशन और वज्रयोगमें विवाह होनेसे मृत्यु होती है, यह दशयोग अतिभयानक हैं अतएव इनमें कदापि विवाह न करे ॥ ४८-५० ॥

अथ लग्नकथनम् ॥

कन्यातुलाभृन्मिथुनेषु साध्वी शेषेष्वसाध्वी धनवर्जिता च ।
निन्द्येऽपि लग्ने द्विपदांशइष्टःकन्यादिलग्नेष्वपि नान्यभागः॥५१॥(ऐ)

अर्थ-कन्या तुला और मिथुन लग्नमें विवाहिता कन्या साध्वी होती है, वृश्चिक, धन, मकर, कुम्भ, मीन, मेष, वृष, कर्क और सिंह लग्नमें विवाहिता नारी असाध्वी होती है, किन्तु इनके बीचमें विशेष यही है कि, कन्या, तुला और मिथुन लग्नके द्विपदांश ( १ ) इष्टफलदायक होकर साध्वीत्व प्रदान करती है और अन्यभागमें केवल साध्वीत्व प्रदान करती है। और निंद्य लग्नके मध्यमेंभी द्विपदांश इष्ट फल दान करती है; किन्तु कन्यादि लग्नके सद्भाव होनेसे और लग्नके द्विपदांश शुभ नहीं होता है ॥ ५१ ॥

अपरश्च ।

व्यूढा धनुषि कुलटा तत्पूर्वार्द्धे सतीत्यपरे जगुः ॥ ५२ ॥

( ऐ ) विहितलग्ननवांशानाह-कन्येति । निन्द्ये लग्नेः कन्यादिव्यतिरिक्तलग्ने द्विपदानां कन्यादीनां नवांश इष्टःकन्यादिलग्नादिमाने तन्नवांशे वा कर्त्तव्यमित्यर्थः । तथा कन्यादिलग्नेष्वपि अन्यनवांशे न कार्यः किन्तु तेषां नवांश एव इति ।

( १ ) मिथुन, तुला, कुम्भ, कन्या और धनके पूर्वार्द्धका नाम द्विपद है और इनके नवांशोंको द्विपदांश कहते हैं ॥

अर्थ-धन लग्नके परार्द्धमें विवाहिता कन्या कुलटा होती है, किन्तु पूर्वार्द्धमें विवाह होनेसे सती होती है ॥ ५२ ॥

अन्यच ।

**कन्यातुलामन्मथांशे भवेत्पाणिग्रहो यदि ।**
**तद्द्रेक्काणे च कन्याया वैधव्यं मरणं भवेत् ॥ ५३ ॥**

अर्थ-ग्रन्थान्तरमें लिखा है कि, कन्या, तुला और मिथुनके अपने २ नवांशमें और अपने २ द्रेक्काणमें कन्या परिणीता होनेसे उसको वैधव्य और मृत्यु प्राप्त होताहै, अतएव कन्यादि लग्नके अपने २ नवांशमें और द्रेक्काणमें विवाह निषिद्ध है ॥ ५३ ॥

अथ युतयामित्रवेधादिवर्जनकथनम् ।

**पञ्चपाणिग्रहे दोषा वर्जनीयाः प्रयत्नतः ।**
**वैधव्यं कुलटामृत्युर्दारिद्र्यमनपत्यता ॥ ५४ ॥**
**युतयामित्रवेधौ च तथा सप्तशलाकजः ।**
**इन्दुष्टमगतः पापः खर्जुरश्चापि पञ्चमः ॥ ५५ ॥**

अर्थ-विवाहमें युतवेध,यामित्रवेध,सप्तशलाका, इन्दुष्टमगतपाप और खर्जुरवेध यह पांच योग अवश्यही वर्जनीय हैं• क्योंकि युतवेधसे वैधव्य प्राप्त होताहै• इसी प्रकार यामित्रवेधसे कुलटादोष, सप्तशलाकासे मृत्यु, इन्दुष्टमगतपापसे दरिद्रता और खर्जुरवेधसे वंध्यत्व प्राप्त होताहै ॥ ५४ ॥ ५५ ॥

अथ यामित्रवेध ।

**रविमन्दकुजाक्रान्तं मृगाङ्कात्सप्तमं त्यजेत् ।**
**चूडाविवाहयात्रासु गृहकर्मप्रवेशने ॥ ५६ ॥ (ओ)**

अर्थ-चन्द्रमा जिस राशिमें हो उस स्थानसे सप्तमराशिमें यदि रवि, शनि अथवा मङ्गलका वास हो तब यामित्रवेध होताहै, इसमें चूडा, विवाह, गृहारम्भ और गृह-प्रवेश न करना चाहिये ॥ ५६ ॥

---

( ओ ) सप्तमस्थे पापे चन्द्रवेधमाह-रवीति । यस्य चन्द्रस्य सप्तमे रविः शनिः कुजो वा तिष्ठति त चन्द्र विवाहादिषु वर्जयेदिति तात्पर्यम् । तथाच राजमार्त्तण्डे 'पापात्सप्तमगः शशी' इत्यादि । मित्रगृहादौ दोषाभावमाह-राजमार्त्तण्डः । "मित्राश्रमे मित्रसमीक्षितो वा मित्रांशके मित्रसमाश्रितो वा । क्रूरग्रहाद्सप्तगोऽपि सोमः समीहितार्थं वितरेन्नराणाम् " तथा । "यातः स्वमित्रभवने सुहृद्वीक्षितो वा भास्वन्मयूखविमलीकृत-दिङ्मुखो वा । यामित्रदोषमपहृत्य पर करोति सोमः समीहितफल खलु मानवानाम् " इति ।

यामित्रसंस्थे म्रियते महीजे प्रजाविहीना कुलटा च सूर्ये ॥
सुरारिपूज्ये रजनीकरे वा कन्यान्यरक्ता पतिघातिनी च ॥५७॥

इति सारसंग्रहधृतवचनम् (औ)

अर्थ-यामित्र स्थानमें (चन्द्रके सप्तम) मङ्गल होनेसे मृत्यु होती है, इसी प्रकार सूर्य रहनेसे सन्तानहीना और व्यभिचारिणी होती है और चन्द्र शुक्रके साथ युक्त होनेसे नारी पर पुरुषके वशमें होकर अपने पतिका वध करती है। यह वचन दीपिकामें विवाहप्रश्नसम्बन्धमें लिखा है ॥ ५७ ॥

अथ यामित्रवेधप्रतिप्रसवमाह।

यस्मिन्नृक्षे वसेच्चन्द्रस्तस्मादृक्षे चतुर्दशे
पापग्रहे स्थिते चैव यामित्रवेध इष्यते ॥ ५८ ॥

इति सारसंग्रहे।

अर्थ-अब यामित्रवेधके प्रतिप्रसव कहते हैं। जिस नक्षत्रमें चन्द्र स्थित हो उस नक्षत्रसे चौदहवें नक्षत्रमें यदि पापग्रह हो तोभी यामित्रवेध होता है ॥ ५८ ॥

मूलत्रिकोणनिजमन्दिरगोऽथ पूर्णो
मित्रर्क्षसौम्यगृहगोऽथ तदीक्षितो वा।
यामित्रवेधविहितानपहृत्य दोषान्
दोषाकरः सुखमनेकविधं विधत्ते ॥ ५९ ॥

अर्थ-चन्द्रमा यदि मूलत्रिकोण (*) में वा अपने घरमें (कर्कमें) स्थित हो, पूर्ण अवस्थाको प्राप्त हो मित्र (सूर्य वा बुध) के घरमें हो, अथवा शुभग्रहके क्षेत्रमें स्थित हो वा शुभग्रहकी दृष्टि हो तब यामित्रवेधका दोष नष्ट होकर शुभफल होता है ॥ ५९ ॥

अथ यामित्रयुतवेधः।

पापात्सप्तमगः शशी यदि भवेत्पापेन युक्तोऽथवा

---

(औ) योगान्तरमाह-यामित्रेति। सप्तमस्थे मङ्गले कन्या म्रियते सूर्ये सप्तमस्थे पुत्रविहीना कुलटा च स्यात् कुलटात्वञ्च लग्ने सूर्ये चेति बोद्धव्यम्। तथाच " दिवसमणि सप्तमगो लग्नात्कन्यां मृतप्रजां कुर्यात्। कुलटामुदयोपेतः कुरुते नैवात्र सन्देहः" ॥ रजनीकरे वेति वाशब्दः समुच्चये शुक्रे चन्द्रे मिलित्वा सप्तमस्थे परपुरुषगामिनी पतिघातिनी च स्यात्तथा च दैवज्ञवल्लभायाम्। "सक्रूरौ कुरुतोऽमृतांशुशशिजौ षष्ठे स्त्रियं दुर्भगां कुर्वाते शशिभार्गवौ च कुलटामाये च जायास्थितौ" इति ॥

* चन्द्रकी मूलत्रिकोण वृषराशि है।

यत्नेनाशुविवर्जयेन्मुनिमतो दोषोऽप्ययं कथ्यते ।
यात्रायां विपदो गृहे सुतवधः क्षौरे च रोगोद्भव-
श्चोद्वाहे विधवा व्रते च मरणं शूलञ्च पुंकर्मणि ॥ ६० ॥

इति सारसंग्रहे ।

अर्थ–अब यामित्रयुतवेध कहते हैं । पापग्रहसे सप्तम स्थानमें यदि चन्द्र स्थित हो तब यामित्रवेध होता है और पापग्रहके साथ युक्त होनेसे युत वेध होता है । युतवेधमें यात्रा करनेसे अनिष्ट होता है. इसी प्रकार गृहारम्भमें पुत्र-नाश, चूडाकर्ममें रोग, विवाहमें वैधव्य, उपनयन ( यज्ञोपवीत ) में मरण और पुंसवन करनेसे शूलरोग उत्पन्न होता है । अतएव उक्त सब कार्य युतवेधमें न करना चाहिये ॥ ६० ॥

अन्यच्च ।

यत्र राशौ भवेच्चन्द्रोऽशुभग्रहो यदा भवेत् ।
युतिदोषस्तदा ज्ञेयो विना शुक्रं शुभे शुभम् ॥ ६१ ॥

इति ज्योतिषसारे।

अर्थ–ज्योतिःसारनामक ग्रन्थमें लिखा है कि, जिस राशिमें चन्द्र स्थित हो उसी स्थानमें अशुभ ग्रहके स्थित होनेसे युतिवेध होता है और शुक्रभिन्न शुभ ग्रह चन्द्रके साथ होनेसे शुभप्रद होता है ॥ ६१ ॥

फलम् ।

रविणा संयुते हानिर्भौमेन निधनं शशी ।
करोति मूलनाशं च राहुकेतुशनैश्चरैः ॥ ६२ ॥

इति ज्योतिषसारे ।

अर्थ–अब युतिवेधका फल कहते हैं । चन्द्र रवियुक्त होनेसे हानि होती है । इसी प्रकार मङ्गलयुक्त होनेसे मृत्यु और राहु, केतु वा शनैश्चर युक्त होनेसे मूलनाश होजाता है ॥ ६२ ॥

अथ युतियामित्रादीनां अतिप्रसवः ।

वृषाजालिधनुःकर्किसिंहहीने च चन्द्रमाः ।
न दोषः पापयोर्मध्ये युतियामित्रयोरपि ॥ ६३ ॥ ( अं )

अर्थ–वृष, मेष, वृश्चिक, धन, कर्क, सिंह वा मीन राशिमें चन्द्रमा होनेसे

( अ ) " स्वक्षेत्रगः स्वोच्चगो वा मित्रक्षेत्रगतो यदि । युतिर्दोषाय न भवेद्दम्पत्योः श्रेयसे सदा ॥ " इति ग्रन्थान्तरे युतिवेधप्रतिप्रसवः ।

होकर गमन करनेसे अकाल नहीं होता है अर्थात् विवाहादि कर्म होसक्ता है इसी प्रकार पण्डितोंने कहा है ॥ ६४ ॥

त्रिकोणजायाधनलाभराशौ वक्रातिचारेण गुरुः प्रयातः॥यदा
तदा प्राह शुभे विलग्ने हिताय पाणिग्रहणं वसिष्ठः॥६५॥ (*)

इति दीपिकायाम् ।

अर्थ-बृहस्पति वक्री वा अतिचारी होकर यदि कर्म करनेवालेके नवम, पञ्चम, सप्तम, द्वितीय वा एकादश राशिमें स्थित होय तो शुभलग्नमें विवाह होसक्ता है, और वह विवाह मङ्गलदायक होता है इस प्रकार वसिष्ठने कहा है ॥ ६५ ॥

मकरस्थो यदा जीवो वर्जयेत्पञ्चमांशकम् ।
शेषेष्वपि च भागेषु विवाहः शोभनो मतः ॥ ६६ ॥

इति देवीपुराणम् ।

अर्थ-देवीपुराणमें लिखा है कि, पहले मकर राशिमें स्थित होनेसे बृहस्पतिमें विवाहका निषेध कियाहै उसको पञ्चमांशमें जानना चाहिये. अन्य भागमें विवाह शुभदायक होताहै ॥ ६६ ॥

गण्डक्या उत्तरे तीरे गिरिराजस्य दक्षिणे ।
सिंहस्थं मकरस्थञ्च गुरुं यत्नेन वर्जयेत् ॥ ६७ ॥

अर्थ-गण्डकी नदीके उत्तरमें और हिमालयके दक्षिणमें स्थित जो देश है उनमेंही सिंहराशिमें और मकरराशिमें स्थित बृहस्पतिको यत्नसे परित्याग करै॥६७॥

अथ प्रसङ्गादनादिदेवदर्शनादिनिषेधकथनम् ।

अनादिदेवतां दृष्ट्वा शुक्रः स्युर्नष्टभार्गवे ।
मलमासेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत् ॥ ६८ ॥ (ध)

इति भृगुकौशिकादयः ।

अर्थ-नष्ट शुक्रमें और मलमास( अधिमास )में अनावृत्त अनादि देवताओंका

---

(*) वक्रातिचारे विवाहे विशेषमाह-त्रिकोणेति । जन्मराशेः सकाशात् नवमपञ्चमसप्तमद्वितीयैकादशराशौ वक्रातिचारेण यदि गुरुः प्रयातो गतः तदा शुभे लग्ने पाणिग्रहणं हिताय वसिष्ठः प्राह अन्यथा न कुर्यादित्यर्थः ।

(ध) " आवृत्ते तीर्थगमने प्रतिज्ञाते च कर्मणि । कालात्यये च कन्यायाः कालदोषो न विद्यते ॥ " इत्यङ्गिराः । शुचः शोकाः नष्टभार्गवे इति अशुद्धकालमात्रोपलक्षणम् एवं मलमासेपीत्यपि । शुचः शोका दुःखानीति यावत् । नष्टभार्गवे इति अशुद्धकालान्तरोपलक्षणम् इदञ्च सकामपरं मुमुक्षुणा अकालेऽप्यनादिदेवतादर्शनं कर्तुमर्हतीति शान्तिकर्मणादिरिति दिन्यम् । अनावृत्तञ्च प्रायश्चित्तरूपमिति ।

दर्शन करनेसे शोक प्राप्त होता है और मलमासादिरूप अधिमासमें अनावृत्त तीर्थमेंभी स्नान न करना चाहिये ॥ ६८ ॥

वाले वा यदि वा वृद्धे शुक्रे चास्तमुपागते ।
मलमास इवैतानि वर्जयेद्देवदर्शनम् ॥ ६९ ॥ (न)

इति वृद्धमनुप्रभृतयः ।

अर्थ-मलमासमें जिस प्रकार अनावृत्त अनादि देवताओंका दर्शन करना मने है तिसी प्रकार शुक्रके बाल्य (उदय) में, वृद्धिमें (अस्तमें) भी अनावृत्त अनादि देवताओंका दर्शन न करना चाहिये ॥ ६९ ॥

अनादिदेवता (*) र्चासु कालदोषो न विद्यते ।
नित्यास्वभ्यासयोगेन तथैवैकादशीव्रते ॥ १७० ॥ (प)

अर्थ-आवृत्त अनादि देवताके पूजनमें कालदोष नहीं होताहै और जिस प्रतिमाकी नित्यपूजा होय उसमेंभी कालदोप नहीं होताहै और एकादशीके व्रतमेंभी कालदोष नहीं होताहै ॥ १७० ॥

गयायां प्रतिप्रसवमाह ।

गयायां सर्वकालं तु पिण्डं दद्याद्विचक्षणः ।
अधिमासे जन्मदिने अस्ते च गुरुशुक्रयोः ।
न त्यक्तव्यं गयाश्राद्धं सिंहस्थे च बृहस्पतौ ॥ ७१ ॥

इति तीर्थचिन्तामणौ-वायुपुराणम् ।

अर्थ-गयाक्षेत्रमें पण्डितगण सर्वदाही पिण्डदान करतेहैं अधिमास (मलमास) में जन्मदिनमें, बृहस्पति और शुक्रके अस्तसमयमें वा बृहस्पतिके सिंहराशिमें स्थित होनेसेभी गयाश्राद्धको परित्याग न करना चाहिये ॥ ७१ ॥

अथाकालवृष्टिकथनम् ।

चतुर्मासे निवृत्ते तु चक्रपाणौ समुत्थिते ।

(न) यथा मलमासे अनावृत्तमेव अनादिदेवतादर्शनं वर्जनीयं तथा बालशुक्रादावप्यनावृत्तमेव अनादिदेवतादर्शनं वर्जयेत् । न तु आवृत्तमपि । शुक्रास्त इति एतच्चोपलक्षणम् इति ॥

(*) अनादिदेवतात्वञ्च पुराणभारतादिप्रसिद्ध श्रीपुरुषोत्तमविश्वेश्वरप्रभृतित्वं तेनानावृत्तादिदेवतादर्शनं तीर्थस्नानञ्च शुक्रास्ते मलमासे च त्यजेत् इति।मलमासतत्त्वे स्मार्तेनोक्तम् ।

(प) यासु अर्चासु नित्य पूजा क्रियते तास्वित्यर्थः । अभ्यासोति प्रत्यहं पूजयेदित्यर्थः ।

अकालवृष्टिं जानीयाद्यावन्न सुप्यते हरिः ॥ ७२ ॥ ( फ )

अर्थ–चतुर्मासके अन्तमें श्रीहरिके उत्थान ( उठने ) से शयनके पूर्वकालपर्यन्त जो समय है उसमें वृष्टि होनेसे अकालवृष्टि कही जातीहै । जीमूत ( मेघ ) वाहन "यावन्न सुप्यते हरिः" इस स्थलमें "यावद्विष्णुमहोत्सवः" इस प्रकार पाठ करके फाल्गुनीपूर्णिमापर्यन्त अकालवृष्टिका समय कहा गया है ॥ ७२ ॥

पौषादिचतुरो मासाञ्ज्ञेया वृष्टिरकालजा ।
व्रतयज्ञादिकं तत्र वर्जयेत्सप्तवासरान् ॥ ७३ ॥

इति भोजदेवः ।

अर्थ–सौर पौषसे चैत्रपर्यन्त वर्षनेसे अकालवृष्टि जानना चाहिये तीन दिन क्रमसे चरणाङ्कित वर्षनेसे शेष दिनसे सप्ताहपर्यन्त अकाल होताहै, इसमें व्रतयज्ञादि काम्य कर्मका आरम्भ न करना चाहिये ॥ ७३ ॥

मार्गा ( * ) न्मासात्प्रभृति मुनयो व्यासवाल्मीकिगर्गाः
श्चैत्रं यावत्प्रवर्षणविधौ नेति कालं वदन्ति ।
नाडीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकालौ
मासावेतावशुभफलदौ पौषमाघौ न शेषाः ॥७४ ॥

अर्थ–पौषमाससे चैत्रमासपर्यन्त वृष्टिका अकाल होता है, व्यास, वाल्मीकि और गर्गमुनिने इस प्रकार कहाहै, किन्तु नाडीजङ्घ और बृहस्पतिके मतसे पौष और माघमें वृष्टिसे अकालवर्षण होता है, एतद्भिन्नमासमें वृष्टि होनेसे कालवर्षण होता है ॥ ७४ ॥

वृष्टिः करोति दोषं तावन्नाकालसम्भवा राज्ञः ।
यावन्न भवति याने नरपशुचरणाङ्किता वसुधा ॥ ७५ ॥

अर्थ–जिस वर्षामें मनुष्य और पशुओंके चरणोंका चिह्न पृथिवीमें अङ्कित न हों तो उस अकालवृष्टि होनेमें दोष नहीं होता है ॥ ७५ ॥

प्रकृतमनुसरामः ।

अनिष्टे त्रिविधोत्पाते सिंहिकासुतदर्शने ।

---

( फ ) तत्र यावद्विष्णुमहोत्सव इति जीमूतवाहनः पठति । महोत्सवः फाल्गुनपूर्णिमेति व्याचष्टे च ।

( * ) मार्गादित्यवधौ पञ्चमी नाभिप्रेता पौषादीत्यनेनैकवाक्यत्वात् ।

**सप्तरात्रं न कुर्वीत यात्रोद्वाहादि मङ्गलम् ॥ ७६ ॥ ( ब )**

अर्थ-दिव्य, भौम और आन्तरिक्ष ( * ) इन तीन प्रकारके उत्पातोंमें और ग्रहण पडनेसे सात दिनपर्यंत यात्रा और विवाहादि मङ्गल कार्य न करना चाहिये ॥ ७६ ॥

विशेषमाह ।

**एकरात्रं परित्यज्य कुर्यात्पाणिग्रहं ग्रहे ।**
**प्रयाणे सप्तरात्रन्तु त्रिरात्रं व्रतबन्धने ॥ ७७ ॥**

अर्थ-ग्रहणका एक दिन परित्याग करके विवाहकरै सात दिन परित्याग करके यात्रा करै और तीन दिन परित्याग करके उपनयन ( यज्ञोपवीत ) करै ॥७७॥

**दिग्दाहे दिनमेकञ्च ग्रहे सप्तदिनानि च ।**
**भूकम्पे च समुद्भूते त्र्यहाणि परिवर्जयेत् ॥ ७८ ॥**

---

( ब ) अस्य कालशुद्धिमाह-अनिष्ट इति । त्रिविधोत्पातो दिव्यभौमान्तरिक्षरूपः । दिव्यो ग्रहयुद्धधूमकेतूदयादिः । भौमो भूकम्पनिर्घातादिः । अन्तरिक्षो दिग्दाहोल्कादिः एतेषाञ्चाग्न्यादिमण्डलपातेनानिष्टफलत्वमिष्टफलत्वञ्च एतत्सर्वं स्थानान्तरे विवृतम् । अत्र चानिष्टफले त्रिविधोत्पाते सप्तरात्र यात्रोद्वाहादि मङ्गल कर्म न कुर्यात् इष्टफले तु कर्त्तव्यमेवेति तात्पर्यम् । तथा राहुदर्शनेऽपि सप्तरात्र मङ्गल न कुर्यात् । ननु दिव्य ग्रहर्क्षवैकृत्यमित्यनेन राहुदर्शनस्यापि दिव्योत्पातत्वात् पुनरुक्तिः सत्य राहुदर्शने सत्येव निषेधः । यस्तु कदाचित् राहु न पश्यति तेन मङ्गल न कर्त्तव्यमेव । यथा राहुदर्शन एव स्नानादेः कर्त्तव्यता नादर्शने । अन्यथा मेघाच्छन्नतया दर्शनाभावेऽपि निषेधः स्यादिति दर्शनपदन्तु चाक्षुषज्ञानपर ज्ञानमात्रपरत्वे लक्षणाप्रसङ्गात् एतत्सर्वं समयप्रकाशे विस्तृतमिति अतो राहुदर्शने सत्येव निषेधः । अन्योत्पातानां तु दर्शनेऽपि निषेध इत्यपुनरुक्तिः । किञ्चात्र राहुदर्शने इष्टे अनिष्टे च सामान्यतो निषेध इति । तथा चानिष्टमुक्त वराहसंहितायाम् । " जन्मसप्ताष्टरिष्फाङ्कदशमस्थे निशाकरे । दृष्टोऽरिष्टप्रदो राहुर्जन्मर्क्षे निधनेऽपि वा " ॥ जन्मर्क्ष त्रिजन्मनक्षत्र निधन त्रयोविंशनक्षत्रम् । अत्रापि दृष्ट इति विशेषणमर्थवत्त्वप्रदर्शनादेवारिष्टप्रदत्वं नादर्शनादिति । अत्र च राशौ यत्र विधुन्तुदेन तरणिरित्यादिवचन पठन्ति । समूलाभीति समूलत्वे च गोचरविशेषोऽयम् । एवञ्चाकालवृष्टावपि सप्तरात्र मङ्गल न कर्त्तव्यम् । तथा च राजमार्त्तण्डे-" पौषादिचतुरो मासाञ्ज्ञेया वृष्टिरकालजा । व्रत यात्रादिक तत्र वर्जयेत्सप्तवासरान् ॥ वृष्टिः करोति दोष तावन्नाकालसम्भवा राज्ञः । यावन्न भवति गमने नरपशुचरणाङ्किता वसुधा " इति । यावत्कर्दमाक्ता पृथिवी न स्यादित्यर्थः ।

( * ) ग्रहयुद्ध और धूमकेतु उदयादि दिव्योत्पात, भूकम्पनिर्घातादि भौम उत्पात और दिग्दाह उल्कापातादि अन्तरिक्षोत्पन्न उत्पात हैं ॥

उल्कापाते च त्रिदिनं धूमे पञ्चदिनानि च ।
वज्रपाते दिनमेकं वर्जयेत्सर्वकर्मसु ॥ ७९ ॥

अर्थ-दिग्दाहमें एक दिन, ग्रहणमें सात दिन, भूकम्पमें तीन दिन, उल्कापातमें तीन दिन, धूमकेतुके दर्शनमें पांचदिन और वज्रपतन ( गिरने ) में एक दिन परित्याग करके समस्त मङ्गलकार्य करना चाहिये ॥ ७८ ॥ ७९ ॥

अथ जन्ममासादौ विवाहादिनिषेधः ।

न जन्ममासे नच चैत्रपौषे क्षौरं विवाहो न च कर्णवेधः ।
अर्थस्य हानिं बहुदुःखपीडां मूलस्यनाशं मुनयो वदन्ति॥१८०॥

अर्थ-अब जन्ममासादिमें विवाहादिका निषेध कहते हैं जन्मके मासमें, चैत्रमासमें वा पौषमें क्षौरकर्म विवाह और कर्णवेध न करना चाहिये जो मनुष्य इन मासोंमें उक्त कार्यको करते हैं उनके द्रव्यका नाश होता है अनेकप्रकारके दुःख होते हैं, रोग होता है और मूलका विनाश होता है इसप्रकार मुनिगणोंने कहा है ॥ १८० ॥

अपिच भोजदेवः ।

यो जन्ममासे क्षुरकर्मयात्रां कर्णस्य वेधं कुरुते विवाहम् ।(भ)
नूनं स रोगं धनपुत्रनाशं प्राप्नोति मूढो वधबन्धनानि ॥ ८१ ॥

अर्थ-भोजराजने कहाहै कि, जो मनुष्य जन्ममासमें क्षौरकर्म, यात्रा, कर्णवेध और विवाह करता है उसके धन और पुत्रका नाश होता है और वह मनुष्य रोगी होता है और वध बन्धन होता है ॥ ८१ ॥

मासिमसवमाह ।

जातं दिनं दूषयते वसिष्ठश्चाष्टौ च गर्गो यवनो दशाहम् ।
जन्माख्यमासं किल भागुरिश्च चौले विवाहे क्षुरकर्णवेधे ॥ ८२॥

अर्थ-वसिष्ठने कहा है कि, जन्मदिन परित्याग करके चूडा, विवाह, क्षौरकर्म और कर्णवेध करना चाहिये। इसी प्रकार गर्गमुनिके मतसे आठ दिन और यवन मुनिके मतसे दशदिन त्यागकरके उक्त कार्य करना चाहिये किन्तु भागुरिमुनिके मतमे जन्ममासकोही परित्याग करके उक्त कार्य करना चाहिये ॥ ८२ ॥

(भ) कुरुते च मोहादिति पाठान्तरम् ।

अपिच।

**स्नानं दानं तपो होमः सर्वमाङ्गल्यवर्द्धनम्।**
**उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते॥ ८३॥**

इति श्रीपतिसमुच्चये।

अर्थ-स्नान, दान, तपस्या, होम और समस्त मङ्गलके बढानेवाले कार्य और कन्याका विवाह जन्ममासमें प्रशस्त है॥ ८३॥

अन्यच्च।

**जन्ममासे च पुत्राढ्या धनाढ्या च धनोदये।**
**जन्मभे जन्मराशौ च कन्या हि ध्रुवसन्ततिः॥ ८४॥**

इति कृत्यचिन्तामणौ

अर्थ-कृत्यचिन्तामणिग्रन्थमें लिखाहै कि, जन्ममासमें कन्याका विवाह होनेसे पुत्रवती होती है, जन्ममाससे द्वितीयमासमें विवाहिता कन्या धनशालिनी होती है और जन्मनक्षत्रमें वा जन्मराशिमें जिस कन्याका विवाह होय तो उसके शीघ्र ही सन्तति होती है॥ ८४॥

अपरञ्च।

**ज्येष्ठे मासि तथा मार्गे क्षौरं परिणयं व्रतम्।**
**ज्येष्ठपुत्रदुहित्रोश्च यत्नतः परिवर्जयेत्॥ ८५॥**

इति गर्गः।

अर्थ-प्रथम गर्भोत्पन्न पुत्र वा कन्याको ज्येष्ठ मासमें, वा अग्रहायण मासमें चूडाकरण, विवाह और पुत्रका उपनयन इनको यत्नके साथ परित्याग करना चाहिये। इस प्रकार गर्गमुनिने कहा है॥ ८५॥

प्रकारान्तरञ्च।

**न जन्ममासे न च जन्मभे तथा नैव जन्मदिवसेऽपि कारयेत्।**
**आद्यगर्भभवपुत्रकन्ययोर्ज्येष्ठे मासि न च जातु मंगलम्॥८६॥**

अर्थ-जन्ममासमें, जन्मनक्षत्रमें और जन्मदिनमें पुरुषका माङ्गल्य कर्म न करै और ज्येष्ठ मासमें प्रथम गर्भके पुत्र वा कन्याका माङ्गल्य कर्म न करना चाहिये८६

अपिच।

**कृत्तिकास्थरविं त्यक्त्वा ज्येष्ठे ज्येष्ठस्य कारयेत्।**
**उत्सवेषु च सर्वेषु दिग्दिनानि च वर्जयेत्॥ ८७॥**

अर्थ–कृत्तिका नक्षत्रमें स्थित सूर्य अर्थात् ज्येष्ठ मासके प्रथम कृष्ण पक्षके दश दिन परित्याग करके ज्येष्ठ पुत्र वा ज्येष्ठ कन्याका समस्त मङ्गलकार्य करना चाहिये ॥ ८७ ॥

अन्यच्च ।

कृषिवपनविवाहाः पट्टबद्धाभिषेकः
प्रथमयुवतिसेवा गन्धमाल्यानुलेपः
इति वदति समस्तं जन्मवारे प्रशस्तं
पथिगमनविरुद्धं क्षौरकर्मातिरुद्धम् ॥ ८८ ॥

अर्थ–सस्यरोपण ( खेतमें बीज बोना ) विवाह ( * ) पट्टबद्ध, अभिषेक, गर्भाधान, गन्ध, माल्य, ( माला ) और अनुलेपनकरण ( उबटन करना ) जन्मवारमें प्रशस्त है, यात्रा और क्षौरकर्म जन्मवारमें अत्यन्त निषिद्ध है, अतएव इन दोनों कार्योंको जन्मवारमें कभी न करना चाहिये ॥ ८८ ॥

अथ विवाहादौ ग्रहशुद्धिकथनम् ।

अष्टवर्गशुभैः श्रीमान्कर्म कुर्यान्नभश्चरैः ।
गोचरस्थैस्तदप्राप्तौतत्प्राप्तौ चैव वेधगैः ॥ ८९ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावली ग्रन्थमें लिखा है कि, अष्टवर्गमें ग्रहशुद्धि देखकर कर्म करना चाहिये, अष्टवर्गमें ग्रहोंकी शुद्धि न होनेसे गोचर शुद्धि देखे, गोचरमेंभी यदि ग्रहगण शुद्ध न हो तो वामवेधमें वा दक्षिणवेधमें शुद्ध होनेसे कार्य करना चाहिये ॥ ८९ ॥

अथाष्टवर्ग कथनम् ।

तत्रादौ रवेरष्टवर्गः ।

स्वाह्निनकृच्छुभदः क्षितिपक्षसमुद्रनगादिकपथ्रगतो–१ । २ । ४ । ७ । ८ । ९ । १० । ११ ऽथ विमावारिभर्त्तुस्त्र्यङ्गदशेशगतो, ३ । ६ । १० । ११ ऽथ कुजाह्निनकरवद् १ । २ । ४ । ७ । ८ । ९ । १० । ११ बुधाञ्जिशरर्त्तुनवादिषु जातो ३ । ५ । ६ । ९ । १० । ११ । १२ देवगुरोर्विषयर्त्तुनवेशगतो. ५ । ६ । ९ । ११ऽथ सुरारिगुरोः समयाचलभास्करयातः ६ । ७ । १२ तीक्ष्णमरीचिसुतादपि भास्करव- १ ।२।४।७।८।९।१०।११ दय लग्नगृहान्निकृताङ्गदशादिषु यातः ३ । ४ ।६। १० ।

( * ) कन्याके विवाहमें जन्ममास, जन्मराशि, और जन्मनक्षत्र प्रशस्त है । अतएव जन्मवारभी कन्याके विवाहमें प्रशस्त है ।

११ ।१२ ॥ (×) ॥ रविरेखाः (४८) तथाच । सूर्यात् १ । २ । ४ । ७ । ८ । ९ । १० । ११ चन्द्रात् ३ । ६ । १० । ११ । कुजात् १ । २ । ४ । ७ । ८ । ९ । १० । ११ । बुधात् ३ । ५ । ६ । ९ । १० । ११ । १२ जीवात् ५ । ६ । ९ । ११ शुक्रात् ६ । ७ । १२ मन्दात् १ । २ । ४ । ७ । ८ । ९ । १० । ११ लग्नात् ३ । ४ । ६ । १० । ११ । १२–४८ ॥ १९० ॥

अर्थ–अब अष्टवर्ग कीर्त्तन करते हैं। जन्मसमयका राशिचक्र अर्थात् मनुष्यके जन्मकालमें जो ग्रह जिस राशिमें स्थित हों उन सब ग्रहोंको राशिचक्रमें स्थापनकर जो लग्न होय उनकोभी "ल" चिह्नद्वारा यथास्थानमें अङ्कित करै। अनन्तर सूर्यके अष्टवर्ग करनेमें सूर्यग्रह जिस स्थानमें स्थित होय उसी स्थानसे प्रथम, द्वितीय, चतुर्थ, सप्तम, अष्टम, नवम, दशम और एकादश घरमें एक २ रेखापात करनी चाहिये। एवं चन्द्रसे तृतीय, षष्ठ, दशम और एकादश घरमें एक २ रेखापात करै. इसी प्रकार मङ्गलसे प्रथम, द्वितीय, चतुर्थ, सप्तम, अष्टम, नवम, दशम, एकादश घरमें, बुधसे तृतीय, पञ्चम, षष्ठ, नवम, दशम, एकादश और द्वादश घरमें, बृहस्पतिसे पञ्चम, षष्ठ, नवम और एकादश घरमें, शुक्रसे षष्ठ, सप्तम और द्वादश घरमें, शनिसे प्रथम, द्वितीय, चतुर्थ, सप्तम, अष्टम, नवम, दशम और एकादश घरमें. और लग्नसे तृतीय, चतुर्थ, षष्ठ, दशम, एकादश और द्वादशवें घरमें एक २ रेखा अङ्कित करनी चाहिये। अष्टवर्गमें ग्रहगण शुद्ध है वा नहीं इसके देखनेकी रीति आगे लिखी गई है ॥ १९० ॥

इति रवेरष्टवर्गः।

अथ चन्द्रस्याष्टवर्गः।

चन्द्रः शुभोऽर्कात्त्रिकालाद्रिदन्तावलाशाशिवस्थः ३ । ६ । ७ । ८ । १० । ११–ततः स्वात्कुरामर्त्वगाशाशिवस्थः १ । ३ । ६ । ७ । १० । ११ क्ष्माजाद्विवह्नीषुपडङ्कदिगीशेष्वथ २ । ३ । ५ । ६ । ९ । १० । ११ । ज्ञात् कुगमाब्धिबाणागदन्तावलाशाशिवस्थो १ । २ । ३ । ४ । ५ । ७ । ८ । १० । ११ ऽथ जीवात्कुदृग्वेदशैलेभकाष्ठाशिवस्थो । १ । २ । ४ । ७ । ८ । १० । ११ ऽथ शुक्रात्त्रिवेदेषुशैलग्रहाशाशिवस्थः ३ । ४ । ५ । ७ । ९ । १० ११ । तीक्ष्णांशु-

(×) अष्टवर्गोक्तगोचरफलमाह–स्वादिनकादिति । जन्मकाले यत्र ग्रहास्तिष्ठन्ति तस्माद्वक्ष्यमाणप्रकारेण शुभाशुभत्वं बोद्धव्यम्। तत्र च यस्मिन्स्थाने शुभत्वं वक्ष्यते तत्र रेखा दातव्या यत्र च नोक्तं तत्र बिन्दवो दातव्या इति प्रकारः। अत्र च रविः स्वादारभ्य क्षित्यादिग. शुभः विभावरीभर्त्तुश्चन्द्रात् त्र्यादिषु रविः शुभः विभावरीति याकारो स्त्रीकृतौ ह्रस्वौ क्वचिदिति दीर्घस्य ह्रस्वता। कुजात्सूर्यवत् रविः शुभः बुधात्त्रिशरादिषु रविः शुभः। गुरोर्विषयादिषु रविः शुभः। शुक्रात् षडादिषु रविः शुभः। शनेः सूर्यवत् रविः शुभः लग्नात् त्र्यादिषु रविः शुभः ॥ इति।

देहोऽब्धवाद्रामवाणर्त्तुशंभुस्थितो ३ । ५ । ६ । ११ । ऽथोदयाद्धव्यवाहर्त्तुकाष्ठाशिवस्थः ३ । ६ । १० । ११ ॥ ( × )॥ चन्द्ररेखा ( ४९ ) तथाच सूर्यात् ३ । ६ । ७ । ८ । १० । ११ । चन्द्रात् १ । ३ । ६ । ७ । । १० । ११ कुजात् २ । ३ । ५ । ६ । ९ । १० । ११ । बुधात् । १ । ३ । ४ । ५ । । ७ । ८ । १० । ११ जीवात् १ । २ । ४ । ७ । ८ । १० । ११ शुक्रात् ३ । ४ । । ५ । ७ । ९ । १० । ११ मन्दात् ३ । ५ । ६ । ११ । लग्नात् ३ । ६ । १० । ११ । ४९ ॥ ९१ ॥

इति चन्द्रस्याष्टवर्गः । ( • )

अथ कुजस्याष्टवर्गः ।

कुजोऽर्काच्छुभो वह्निवाणर्त्तुदिक्छम्भुगो ।३।५। ६।१० । ११ ऽथेन्दुतो रामकालेशगः ३ । ६ । ११ । ततः स्वात्कुदृग्वेदसप्ताष्टदिक्छम्भुगो १ । २ ।४।७।८। । १० । ११ । ऽथ निशानाथपुत्राद्गुणेष्वङ्गरुद्रोपयातः ३ । ५ । ६ । ११ । ततो जीवतः कालकाष्ठाशिवार्कोपयातो ६ । १० । ११ । १२ ऽथ देवारिपूज्यादनेहो ( १ ) गजेशार्कसंस्थः ६ । ८ । ११ । १२ ततः सूर्यपुत्रात्कुवेदागनागग्रहाशाभवस्थो १ । ४ । ७ । ८ । ९ । १० । ११ ऽथ लग्नात्कुरामाङ्गदिक्छम्भुयातः १ । ३ । ६ । १० । ११ । कुजरेखाः ( ३९ ) तथा च सूर्यात् ३ । ५ । ६ । १० । ११ । चन्द्रात् । ३ । ६ । ११ कुजात् १ । २ । ४ । ७ । ८ । १० । ११ बुधात् ३ । ५ । ६ । ११ । जीवात् ६ । १० । ११ । १२ शुक्रात् ६ । ८ । ११ । १२ मन्दात् १ । ४ । ७ । ८ । ९ । १० । ११ लग्नात् १ । ३ । ६ । १० । ११ । ३९ ॥ ९२ ॥

इति कुजस्याष्टवर्गः ।

अथ बुधस्याष्टवर्गः ।

ज्ञः शुभोऽर्कतः शरर्त्तुगोशिवार्कगो ५ । ६ । ९ । ११ । १२ । ऽथ चन्द्रतो द्विवेदकालनागदिङ्महेश्वरेषु २ । ४ । ८ । १० । ११ भूमिजात् कुदृक्कृतागनागगोदिगीशगः १ । २ । ४ । ७ । ८ । ९ । १० । ११। ततःस्वात्कुवह्निपञ्चषण्णवादिकेषु १ । ३ । ५ । ६ । ९ । १० । ११ । १२ वाक्पते रसाष्टशम्भुसूर्यगो ६ । ८ ११ ।

( • ) चन्द्रोऽर्कात्त्रिकालादिषु शुभदः । स्वात्मनश्चन्द्रः कुगमादिषु शुभ । कुजाद्व्यादिषु चन्द्रः शुभः । बुधाच्चन्द्र कुगमादिषु शुभः । गुरोः कुदृगादिषु चन्द्र- शुभः । शुक्राच्च्यादिषु चन्द्रः शुभः । शनेः रामादिषु चन्द्रः शुभः । लग्नादिषु चन्द्र शुभः । एवमन्येषामपि ग्रहाणां वक्तव्यम् ।

( • ) चान्द्रादि ग्रहों के अष्टवर्गोंका अनुवाद करनेमें विशेष लाभ नहीं है किन्तु पूर्वत रेखापातसे अङ्क देनेसेही पाठकगण उक्त अङ्क देखकर अष्टवर्गचक्र लिख सक्ते हैं ।

( १ ) कुजइति । अनेहः पद इति ।

तः ३ । ६ । ९ । ११ गुरोः शराष्टरन्ध्रादिङ्महेशगः । ५ । ८ । ९ ।१०।११ ततः स्यात् कुपश्चकाष्टरन्ध्रादीर्विक्षोपगः१। २। ३। ४ । ५। ८ । ९ । १० । ११ शनेर्गुणाब्धिपश्चनागमोदशेशगो ३ ।४ । ५। ८। ९ । १० । ११ऽथ लग्नतः कुपश्चकाष्टगोशिवस्थितः १ । २ । ३ । ४ ।५ । ८ । ९ । ११ शुक्ररेखाः ( ५२ ) तथाच सूर्यात् ८ । ११ । १२ । चन्द्रात् १ । २ । ३ । ४ । ५ । ८ । ९ । ११ । १२ कुजात् ३ । ४ । ६ । ९ । ११ । १२ बुधात् ३ । ५ । ४ । ९ ।११। जीवात् ५। ८ । ९ । १० । ११ । शुक्रात् १ । २ । ३ । ४ । ५ । ८ ।९ ।१० । ११ मन्दात् ३ । ४ । ५ । ८ । ९ । १० । ११ लग्नात् १ । २।३।४।५।८।९।११–५२ ॥९५॥

इति शुक्रस्याष्टवर्गः ।

अथ शनेरष्टवर्गः ।

पङ्गुरर्काच्छुभःक्ष्मायमाम्भोधिशैलाष्टदिक्छम्भुगो–१ । २ । ४ । ७ । ८ ।१०। ११ऽथेन्दुतो गमकालेशगः । ३।६। ११ क्ष्मासुताद्वह्निबाणर्तुकाष्ठाशिवार्कोपगो ३ । ५ । ६ । १० । ११ । १२ ऽथ ज्ञतः कालदन्तावला ( ग ) विस्थितः६।८ । ९ । १० । ११ । १२ अथ जीवतो बाणकालेशमार्त्तण्डगः ५ ।६।११। १२ ततो दैत्यपूज्यादनेहः शिवार्कोपगः ६ । ११ । १२ स्वाद्वताशेषुकालेशयातः३।५।६ । ११ । ततो लग्नतः क्ष्मागुणाम्भोधिपङ्क्तिदिङ्महेशस्थितः १ । ३ । ४ । ६ । १० । ११ चन्द्रात् शनिरेखाः ( ४९ ) तथाच सूर्यात् १ । २ । ४ । ७ । ८ । १० । ११ । चन्द्रात् ३ । ६ । ११ कुजात् । ३ ।५। ६। १० । ११ । १२ बुधात्६।८।९।१०। ११ । १२ जीवात् ५ । ६ । ११ । १२ शुक्रात् ६ । ११ । १२ मन्दात् ३ । ५ । ६ । ११ लग्नात् १ । ३ । ४ । ६ । १० । ११–३९ । ॥ ९६ ॥

इति शनेरष्टवर्गः ।

अथ लग्नाष्टवर्गः ।

सूर्यादेकाद्विचतुःसप्ताष्टदशैकादशेषु १ । २ । ४ । ७ । ८ । १० । ११ सोमात्त्रिषडेकादशेषु ३ । ६ । ११ भौमात्त्रिपश्चषडेकादशेषु३।५।६।११ बुधात् पडष्टनवदशैकादशेषु ६ । ८ । ९ । ११ । गुरोः पञ्चषडेकादशद्वादशेषु ५ । ६ । ११ । १२ शुक्रात् षडेकादशद्वादशेषु ६ । ११ । १२ ।शनेस्त्रिपञ्चाष्टदशैकादशेषु ३ ।५ । ८ । १० । ११ लग्नादेकत्रिचतुः षड्दशैकादशेषु १ । ३ । ४ । ६।१० । ११ लग्नरेखाः ( ३७ ) तथाच सूर्यात् १ । २ । ४ । ७ । ८ । १० । ११ चन्द्रात् ३ । ६ ।

( ग ) दन्तावलो हस्ती तदादि द्वादशपर्यन्तमित्यर्थः। अत्राष्टवर्गे रविरेखा ४८ चन्द्रस्य ४९ कुजस्य ३९ बुधस्य ५४ गुरोः ५६ शुक्रस्य ५२ शनेः ३९ ॥

११ । कुजात् ३ । ५ । ६ । ११ बुधात् ८ । ९ । १० । ११ जीवात् ५ । ६ । ११ । १२ शुक्रात् ६ । ११ । १२ मन्दात् ३ । ५ । ८ । १० ।११ लग्नात् १ । ३ । ४ । ६ । १० । ११-३७ ॥ ९७ ॥

इति लग्नाष्टवर्गः ।

अथाष्टवर्गगणनक्रमः ।

**यावती यावती रेखा ग्रहाणामष्टवर्गके ।**
**तावती द्विगुणीकृत्य चाष्टाभिः परिशोधयेत् ॥ ९८ ॥**

अर्थ–अब अष्टवर्गके गिननेका क्रम लिखतेहैं । पूर्वोक्तरीतिसे रेखापात करनेमें जिस घरमें जितनी रेखा पतित हो उनको द्विगुणी ( दूनी ) करके आठसे भाग देवै ॥ ९८ ॥

**अष्टोपरि भवेद्रेखा अष्टाभ्यान्तरबिन्दवः ।**
**अष्टभिश्च समो यत्र समस्तोऽत्र निगद्यते ॥ ९९ ॥**

अर्थ–आठसे भाग देनेसे जो अङ्क शेष बचै उनको उसी घरमें रखना चाहिये दूनी करनेसे यदि आठसे कम हों तो जितने बिन्दुओंसे आठ होसकै उतने बिन्दु उस घरमें रखना चाहिये और दूनी करनेसे यदि आठ होवें तब उस घरमें सम लिखना चाहिये ॥ ९९ ॥

स्पष्टमाह ।

**शून्ये तु बिन्दवश्चाष्टौ रेखैके रसबिन्दवः ।**
**चत्वारो बिन्दवो युग्मे द्विबिन्दू रामरेखके ॥ २०० ॥**
**समा रेखा चतुष्के तु पञ्चमे नेत्ररेखिका ।**
**षड्रेखासु चतूरेखा सप्तमे रसरेखिका ॥ १ ॥**

इति जातकचन्द्रिकायाम् ।

अर्थ–अब आठों वर्गमें रेखा और शून्य लिखनेकी रीति कही जातीहै । जिस घरमें रेखा, रेखापात न हो, उस घरमें आठ शून्य लिखना चाहिये. इसी प्रकार जिस घरमें एक रेखापात हो, उसमें छः शून्य जिस घरमें दो रेखा हों, उसमें चार शून्य, जिस घरमें तीन रेखा हों उसमें दो शून्य, लिखे और जिस घरमें चार रेखा हों उसमें सम लिखै, जिस घरमें पांच रेखा हो उसमें दो शून्य, जिस घरमें छः रेखा हों उसमें चार शून्य और जिस घरमें सात रेखा पतित हों उस घरमें छः शून्य लिखना चाहिये ॥ २०० ॥ १ ॥

अथ रेखाबिन्द्वादीनां फलम् ।

**श्रीरानन्दस्तथा श्रेयो योगो राज्यप्रदस्तथा ।**
**व्यादिद्विगुणरेखाणां फलमेतदनुक्रमात् ॥ २ ॥**

इति दीपिकायाम् ।

अर्थ–अब द्वयादिद्विगुण रेखाका फल कीर्त्तन करतेहैं । दो रेखा होनेसे श्री ( लक्ष्मी ) प्राप्त होती है. इसी प्रकार चार रेखामें आनन्दका अनुभव होताहै. छः रेखामें मङ्गल होताहै और आठ रेखा होनेसे राज्यप्राप्ति होती है ॥ २ ॥

अन्यच्च ।

**रेखाद्वये शुभं कुर्याद्धनी रेखाचतुष्टये ।**
**रेखाषट्के प्रभुत्वं स्यात्तिरष्टरेखे महीपतिः ॥ ३ ॥**

इति जातकचन्द्रिकायाम् ।

अर्थ–जातकचन्द्रिकामें लिखाहै कि, अष्टवर्गके घरमें दो रेखा होनेसे शुभ होताहै, चार रेखा होनेसे धनवान् होताहै, छः रेखा होनेसे प्रभुत्वलाभ होताहै और आठ रेखा होनेसे राजा होता है ॥ ३ ॥

**मलिनोऽथ विपद्धानिर्योगो मृत्युप्रदस्तथा ।**
**द्वयादिद्विगुणबिन्दूनां फलमेतदनुक्रमात् ॥ ४ ॥**

इति दीपिकायाम् ।

अर्थ–द्वयादिद्विगुणशून्यका फल वर्णन करतेहैं । अष्टवर्गमें दो शून्य पडनेसे मलीनता होती है इसी प्रकार चार शून्यमें विपत् छः शून्यमें हानि और आठ शून्य पडनेसे मृत्यु होती है ॥ ४ ॥

अपरञ्च ।

**शून्यद्वये भवेन्मृत्युश्चतुःशून्ये प्रपीडनम् ।**
**षट्शून्ये रोगदारिद्र्यमष्टशून्ये मृतिर्भवेत् ॥ ५ ॥**

इति जातकचन्द्रिकायाम् ।

अर्थ–जातकचन्द्रिकामें अष्टवर्गके शून्योंका फल इस प्रकारसे कहाहै कि, दो शून्य होनेसे मृत्युके समान फल होताहै. इसी प्रकार चार शून्य होनेसे पीडा होतीहै छः शून्य होनेसे रोग और दरिद्रता होतीहै और आठ शून्य होनेसे मनुष्यकी मृत्यु होती है ॥ ५ ॥

**शुभा रेखाः समाख्याता बिन्दवश्चाशुभा मताः ।**
**यत्र रेखा न बिन्दुश्च तत्समं परिकीर्तितम् ॥ ६ ॥**

इति दीपिकायाम् ।

अर्थ–अष्टवर्गमें यदि रेखापात हो तब शुभ होता है, बिन्दु पडनेसे अशुभ

होता है और जिस स्थानमें रेखा वा बिन्दु ( शून्य ) कुछभी न होवे उसको सम कहते हैं. उस स्थानसेभी शुभ फल होता है ॥ ६ ॥

अविशुद्धाष्टवर्गस्य फलमाह।

**अष्टवर्गेषु ये शुद्धास्ते शुद्धाः सर्वकर्मसु।**
**अशुभाश्चाष्टवर्गेषु सर्वत्रैवाशुभा मताः ॥ ७ ॥**

इति जातकचन्द्रिकायाम्।

अर्थ-ग्रहगण अष्टवर्गमें शुद्ध होनेसे समस्त कर्ममें शुभफल प्रदान करते हैं, यदि अष्टवर्गमें अशुद्ध होवे तो समस्त कार्योंमें अशुभ देते हैं ॥ ७ ॥

**व्रतारम्भे विवाहे च यात्रायां क्षुरकर्मणि।**
**अविशुद्धाष्टवर्गस्य समस्ता निष्फला भवेत् ॥ ८ ॥**

इति ज्योतिःसारे।

अर्थ-ज्योतिषसारमें लिखा है कि, व्रतारम्भमें, ( उपनयनमें ) विवाहमें, यात्रामें और चूडाकर्ममें इन समस्त कार्योंमें यदि अष्टवर्गमें ग्रह शुद्ध होनेसे कर्म निष्फल होता है। अतएव कर्म करनेके समय अष्टवर्गमें ग्रहोंकी शुद्धि अवश्य देखना चाहिये ॥ ८ ॥

अथ ग्रहाणां गोचरशुद्धिः। ( म )

**केतूपप्लवभौममन्दगतयः षष्ठत्रिसंस्थाः शुभा-( य )**
**श्चन्द्रार्कावपि ते च तौ च दशमौ चन्द्रः पुनः सप्तमः।**
**जीवः सप्तनवद्विपञ्चमगतो युग्मेषु सोमात्मजः**
**शुक्रः षड्दशसप्तवर्जमितरे सर्वेऽप्युपान्ते शुभाः ॥ ९ ॥**

इति माण्डव्य।

अर्थ-अब माण्डव्योक्त गोचरशुद्धि कही जाती है जन्मराशिसे तृतीय, षष्ठ

( म ) केतूपप्लवेत्याद्युक्तगोचरस्याष्टवर्गगोचरस्य च द्वयोरेव फले अतीव शुभफलं द्वयोर्विरोधे मध्यफलं द्वयोरशुभेऽतीवाशुभफलमिति युक्तिः। अत्र सौभरिणा इत्यष्टवर्गगोचरं यन्निगदितं तदिष्टम् अन्यत्त्वेतूपप्लवेत्यादिना यदुक्तं तन्नेष्टं न सम्यक्फलदायकमिति प्रलपितं तद्धेयमेव। "स्थानेष्वेतेषु हिता शेषेष्वहिता भवन्ति चाष्टानाम्। अशुभशुभविशेषफलं ग्रहा प्रयच्छन्ति चरगताः ॥" इति लघुजातकवचनविरोधात्। श्लोकस्यानन्वयापत्तेश्च बृहज्जातके केतूपप्लवेत्यादिगोचरस्यानुरक्तत्वेनाष्टवर्गगोचरस्यानन्तरमस्य वचनस्य पाठादस्या व्याख्याया अघटनाच्चेत्यलं बहुना।

( य ) गोचरशुभाशुभमाह-केतूपप्लवेति। उपप्लवो राहुः केतुराहुभौममन्दा जन्मकालीनचन्द्राध्युषितराशेः षष्ठस्थास्तृतीयस्थाश्च शुभदाः। चन्द्रार्कावपि षष्ठस्थौ तृतीयस्थौ च शुभदौ ते च केतूपप्लवभौममन्दगतय दशमस्था शुभदा तौ च चन्द्रार्कौ दशमौ शुभदौ दशमाविति। समीपस्थसंख्याग्रहीतौ वक्रम्नु सप्तमस्थोऽपि शुभदः।

और दशमस्थानमें स्थित केतु, राहु, मङ्गल, शनि और सूर्य ग्रह होनेसे शुभफल प्रदान करतेहैं. तृतीय, षष्ठ, दशम और सप्तम स्थानमें चन्द्रग्रह स्थित होनेसे शुभफल प्रदान करता है बृहस्पति जन्मराशिसे सप्तम, नवम, द्वितीय और पञ्चम स्थानमें स्थित होनेसे शुभफल होता है. बुध द्वितीय, चतुर्थ, षष्ठ, अष्टम, दशम और द्वादशवें स्थानमें स्थित होनेसे शुभफलको देता है. शुक्र, षष्ठ, दशम और सप्तम भिन्न स्थानमें शुभ होता और जन्मराशिसे एकादश स्थानमें समस्तग्रहही शुभफल प्रदान करते हैं ॥ ९ ॥

> सूर्यः षट्त्रिदशास्थितस्त्रिदशषट्सप्ताद्यगश्चन्द्रमा
> जीवःसप्तनवद्विपञ्चमगतो वक्रार्कजौ षट्त्रिगौ ।
> सौम्यः षड्द्विचतुर्दशाष्टमगतः सर्वेऽप्युपान्ते शुभाः
> शुक्रः षड्दशसप्तमर्क्षसहितःशार्दूलवत्त्रासकृत् ॥२१०॥ (२)

इति वराहः ।

अर्थ–अब वराहोक्त गोचरशुद्धि कही जाती है जन्मराशिसे छठे, तीसरे और दशवें स्थानमें स्थित सूर्यग्रह शुभ होता है. तीसरे, दशवें, छठे सातवें और जन्मराशिमें स्थित चन्द्र शुभ होता है. सातवें, नववें, दूसरे और पांचवें स्थानमें स्थित बृहस्पति शुभ होता है. मङ्गल और शनि छठे और तीसरे स्थानमें स्थित होनेसे शुभ होता है. छठे दूसरे चौथे, दशवें और आठवें स्थानमें स्थित बुध शुभ होता है. जन्मराशिसे ग्यारहवें स्थानमें समस्तग्रह स्थित होनेसे शुभप्रद होते हैं और छठे, दशवें और सातवें स्थानमें स्थित शुक्र होनेसे व्याघ्रके समान त्रास उत्पन्न करता है ॥ २१० ॥

---

एते च राहुकेतुकुजमन्दसूर्यास्तृतीयषष्ठदशमगाः शुभदाः । चन्द्रः तृतीयषष्ठदशमसप्तमगः शुभ इत्यर्थः । जन्मराशेः सकाशात् गुरुः सप्तमनवपञ्चमगतः शुभदः । बुधस्तु गुरुष्वेषु द्वितीयचतुर्थषष्ठाष्टमदशमद्वादशेषु स्थितः शुभदः । शुक्रस्तु षष्ठदशमसप्तमराशीस्थस्त्वा इतरे अन्यस्थाने एकद्वित्रिचतुःपञ्चाष्टमनवमैकादशद्वादशेषु शुभदः' इत्यर्थः माण्डव्यमुनिनोक्तत्वात् सर्वेनामर्थाभाव इति केचित् । केचित्तु षड्दशमसप्तमर्क्षसहित इति पाठं मन्यन्ते । वस्तुतस्तु इतरे इति परेण महानन्वयः तत्रैव व्याख्या । शुक्रः षड्दशसप्तमराशिगराशिषु जन्मादित्रिचतुःपञ्चाष्टमनवमैकादशद्वादशेषु शुभदः । एतेन शुक्रस्यैकादशस्थाने शुभत्वमायात्येव इतरेऽन्येऽपि सर्वे एकादशे शुभाः । अत्र एवापिशब्दोऽपि सार्थक इति मन्तव्य समीपमुपान्तमेकादश सर्वे ग्रहा एकादशस्थाः शुभा इत्यर्थः ।

(२) एतन्माण्डव्योक्तमेव वराहोक्तगोचरेण भावयति–सूर्यइति । अत्र जन्मराशिगतश्चन्द्रः शुभद इति विशेषः । वक्रार्कजौ षट्त्रिगावित्यत्र दशमगावित्यप्यूह्यम् । बुधश्च द्वादशगः शुभ इत्यप्यूह्यम् ॥

रविशुद्धौ गृहकरणं रविगुरुशुद्धौ व्रतोद्वाहौ।
क्षौरं तारकशुद्ध्या शेषं चन्द्राश्रितं कर्म।
सर्वदा सर्वकार्येषु चित्तशुद्धिर्विशेषतः ॥ ११ ॥

इति ज्योतिःसारे।

अर्थ-अब गृहारम्भमें सूर्यशुद्धिको कहते हैं, उपनयन और विवाहमें सूर्य और बृहस्पति शुद्ध होना चाहिये चूडाकर्ममें नक्षत्रशुद्धिका प्रयोजन है और अन्यान्य कार्यमें चन्द्रशुद्धिको विचारना चाहिये किन्तु सर्वदा समस्त कार्यमेंही चित्त शुद्ध रखना चाहिये अर्थात् चित्तशुद्धि न होनेसे कोई कार्य न करना चाहिये ॥ ११ ॥

पुंसामर्कः स्मृतो योनियोंपितामप्तृतद्युतिः।
अतः पुंयोपितोः शस्तं बलमर्कशशाङ्कजम् ॥ १२ ॥

इति विद्याधरीविलासे।

अर्थ-पुरुषको सूर्यका बल और स्त्रीको चन्द्रका बल विचारकरके पुरुष और स्त्रीका कार्य करना चाहिये ॥ १२ ॥

गोचरशुद्धाविन्दुं कन्याया यत्नतः शुभं वीक्ष्य।
तिग्मकिरणञ्च पुंसः शेषैर्बलैरपि विवाहः ॥ १३ ॥ (*)

अर्थ-विवाहके समय कन्याके गोचरमें चन्द्रशुद्धि होनेसे और पुरुषके गोचरमें सूर्यशुद्धि होनेसे और अन्य समस्त ग्रह शुद्ध न होनेसे भी विवाह करना चाहिये ॥ १३ ॥

---

(*) चन्द्रशुद्धि रविशुद्धिश्चाह-गोचरशुद्धाविति। सप्तमोपचयइत्यादिना गोचरशुद्धौ कन्याया यत्नेन शुभ चन्द्र दृष्ट्वा विवाहः कार्य इत्यर्थः। एतेनैतदुक्त भवति। उभयोरेव चन्द्रशुद्धिः कार्या किन्त्वत्र कन्यायाः यत्नेनावश्य चन्द्रशुद्धिः कार्या वरस्य कदाचित् कार्यवशात् प्रतीकारेणापि विवाह· कार्यो न न कन्याया इत्यर्थः। अत एव वामवेधादिशुद्धिर्यस्य सर्वत्र कल्पनीयेत्यर्थः। यथा राजमार्त्तण्डे-"तारानुरूपफलदः स्वगृहे स्ववर्गे स्वोच्चेऽपि शीतकिरणः सुहृदस्त्रिभागे। शस्तोऽष्टवर्गपरिशोधितगोचरेण पक्षादिशुद्धिविपरीतविशुद्धिशुद्धः" इति। यथा जन्मराशेः शुभः सूर्य इत्यादिना शुद्धो सूर्यं च पुंसः शुभ वीक्ष्य विवाहः कार्यः। अत्राप्युभयोरेव विशुद्धिः कार्या। किन्तु पुंसो यत्नेनावश्य रविशुद्धिः कार्या कन्यायाः कदाचित्कार्यवशात् प्रतीकारेण रविशुद्ध्यभावेपि विवाहः न तु वरस्येत्यर्थः। अतः कन्याया अपि रविशुद्धिः। यथा राजमार्त्तण्डे-"जन्मनि भानौ विधवा पतिसुतयुक्ता भवत्युपचयर्क्षे। शेषगृहस्थे कन्या नानाशोकातुरा नूनम् ॥" इति। अत्र च गुरुशुद्धिरपि चिन्त्या यथा तत्रैव। "रविशुद्धौ गृहकरण रविगुरुशुद्धौ व्रतोद्वाहौ। क्षौरं तारकशुद्धौ शेष कर्म चन्द्राश्रितम् ॥" इति। गुरुशुद्धिस्तु

अथ रविशुद्धिः ।

**जन्मराशेः शुभः सूर्यस्त्रिषष्ठदशलाभगः ।**
**द्विपञ्चनवमोऽपीष्टस्त्रयोदशदिनात्परम् ॥ १४ ॥**

अर्थ–अब सूर्यशुद्धिको कीर्त्तन करते हैं । मनुष्यकी जन्मराशिसे तीसरे, छठे दशवें और ग्यारहवें घरमें स्थित होनेसे सूर्य सर्वदा शुभ होता है और जन्मराशिसे दूसरे, पांचवें वा नववें घरमें स्थित होनेसे सूर्य तेरह दिनके बाद शुभ होता है ॥ १४ ॥

फलम् ।

**त्रिषट्कदशैकादशगो दिनेशः पुत्रार्थसौभाग्यसुतप्रदः स्यात् ॥**
**वैधव्यदाताष्टमराशिसंस्थः शेषेषु रुग्दुःखशुचः करोति ॥ १५ ॥**

इति भोजराजः ।

अर्थ–जन्मराशिसे तीसरे, छठे, दशवें और ग्यारहवें घरमें स्थित होनेसे सूर्य पुत्र, अर्थ, सौभाग्य और मङ्गलदायक होता है, आठवें घरमें रहनेसे स्त्रीको विधवा कर देता है । और जन्मराशिमें स्थित हो वा दूसरे, चौथे, पांचवें, सातवें, नववें और बारहवें घरमें स्थित होनेसे सूर्य, रोग दुःख और अनेक प्रकारके शोक प्रदान करता है ॥ १५ ॥

अन्यच्च-शुद्धिमाह ।

**द्विपञ्चनवमस्थोपि भवेच्छुभकरो रविः ।**
**उभौ यदि शुभौ स्यातां हरिणाङ्कबृहस्पती ॥ १६ ॥**

इति सारसंग्रहे ।

अर्थ–यदि चन्द्र और बृहस्पति गोचरमें शुद्ध होवे तो दूसरे, पांचवें, वा नववें स्थानमें स्थित सूर्यभी तेरह दिनके मध्यहीमें शुभ होजाता है ॥ १६ ॥

---

–"जीवः सप्तनवाहिपञ्चमगतः" इत्यादिनाऽबोध्या । तथा "जन्माष्टमद्वादशगः सुरेज्यो वैधव्यदः स्त्रीक्षयकृत्त्रिषष्ठः । दौर्भाग्यदाता दशमश्चतुर्थः शेषेषु सौभाग्यसुखायकृत्स्यात्।" शेषैरिति एतच्छेषैर्मङ्गलादिभिरवशेर्गोचराशुद्धैरपि विवाहः कार्य इत्यर्थः । एतच्च गौडदेशीयानां यथा ।"यद्यपि सुरगुरुसूर्यौ शस्तौ कथितौ विवाहयोगेऽपि । सकलगुणोदयदात्री भानोःशुद्धिः परा गौडे ।"तथा राजमार्त्तण्डे "बृहस्पतौ गोचरशोभनस्थे विवाहमिच्छन्ति हि दाक्षिणात्याः । रवौ विशुद्धे प्रवदन्ति गौडा न गोचरे माणवके प्रमाणम् । भौमे विशुद्धे यमुनातटोद्भवा हिमालयोत्थाः शशिजे शुभप्रदे । कैलासदेशप्रभवाः शनैश्चरे द्वीपान्तरोत्था भृगुजे जगुः शुभम्" । अत्रच ग्रहा मित्रादिगृहे स्थिता अनिष्टा अपि शुभदाः । यथा पशुपतिदीपिकायाम् "सुहृद्गृहस्थोच्चगतोऽपि वा स्यान्मित्रेक्षितो वा स्वगृहं गतो वा । अनिष्टसंस्थोऽपि ध्रुवं नराणां सर्वे ग्रहाः श्रेष्ठफलं ददन्ते " इति ।

अपरञ्च।

**द्वितीयपुत्राङ्कगतः प्रभाकरः त्रयोदशाहात्परतः शुभप्रदः।**
**न जन्मसप्तव्ययरन्ध्रगस्तथा करोति पुंसामपि तादृशं फलम् ॥१७॥**

इति ग्रन्थान्तरे।

अर्थ-ग्रन्थान्तरमें कहाहै कि,जन्मराशिसे दूसरे,पांचवें और नववें स्थानमें सूर्य स्थित होनेसे मासके तेरह दिनके अनन्तर ( बाद ) शुभप्रद होतेहैं; किन्तु जन्म राशिमें स्थित वा सातवें, बारहवें और आठवें घरमें सूर्य स्थित होनेसे किसी समयभी शुभ फल प्रदान नहीं करते हैं ॥ १७ ॥

अथ निषिद्धरविफलम्।

**जन्मन्यर्के भवति विधवा बन्धुहीना द्वितीये**
**निःस्वा पातालसंस्थे सुतगृहधनहा सप्तमे नष्टकामा।**
**मृत्यौ प्राप्नोति मृत्युं व्ययनवमगते रोगशोकाभिभूता**
**शेषे राशौ विवाहे विपुलधनवती धर्मकामार्थयुक्ता ॥ १८ ॥**

अर्थ-जन्मके सूर्यमें विवाहिता कन्या विधवा होतीहै, इसी प्रकार दूसरे सूर्यमें बन्धुहीना, चौथेमें धनहीना, पांचवेंमें धननाशिनी, सातवेंमें कामनाभ्रष्टा और आठवें सूर्यमें मरण होताहै, बारहवें और नववें सूर्यमें विवाह होनेसे रोगशोकादिसे ग्रसित होतीहै। तीसरे, छठे, दशवें और ग्यारहवें सूर्यमें विवाहिता नारी विपुल-धनशालिनी और धर्मकामार्थयुक्ता होतीहै ॥ १८ ॥

अन्यच्च।

**चतुर्थे चाष्टमे चैव द्वादशे च दिवाकरे।**
**कन्या वैधव्यमाप्नोति नियतं पाणिपीडने ॥ १९ ॥**

अर्थ-वचनान्तरमें कहाहै कि, विवाहसमय जन्मराशिसे चौथे, आठवें और बारहवें घरमें सूर्य होनेसे विवाहिता कन्या शीघ्रही विधवा होजातीहै ॥ १९ ॥

अथ बृहस्पतिशुद्धिः।

**चतुर्थे चाष्टमे चैव द्वादशे च बृहस्पतौ।**
**विवाहितो नरो मृत्युं प्राप्नोत्यत्र न संशयः ॥ २० ॥**

इति सारसंग्रहे।

अर्थ-जन्मराशिसे चौथे आठवें वा बारहवें घरमें बृहस्पति होनेसे विवाहित

पुरुषकी निःसंदेह मृत्यु होतीहै. अतएव उक्त स्थानोंको छोडकर अन्य स्थानोंमें रहनेसे वृहस्पति विवाहमें शुभ होताहै ॥ २२० ॥

अथ चन्द्रशुद्धिः।

**सप्तमोपचयाद्यस्थश्चन्द्रः सर्वत्रशोभनः। (*)**
**शुक्लपक्षे द्वितीयस्तु पञ्चमो नवमस्तथा ॥ २१ ॥**

अर्थ–जन्मचन्द्रसे सातवें, ग्यारहवें और छठे स्थानमें स्थित चन्द्र सर्वदाही शुभप्रद होता है, शुक्लपक्षमें दूसरे, पांचवें वा नववें स्थानमें स्थित चन्द्रमाभी शुभ प्रद होताहै ॥ २१ ॥

अपिच।

**दशपष्ठतृतीयैकादशसप्तमगः शुभः।**
**चन्द्रमा जन्मचन्द्रोऽपि जन्मर्क्षपरिवर्जितः ॥ २२ ॥**

इति ग्रन्थान्तरे।

अर्थ–मनुष्यकी जन्मराशिसे दशवें, छठे, तीसरे और ग्यारहवें स्थानमें चन्द्र शुभप्रद होताहै और जन्मनक्षत्रगत न होनेसे जन्मचन्द्रमाभी शुभ होताहै ॥ २२॥

अन्यच्च।

**जन्मनक्षत्रगश्चन्द्रः प्रशस्तः सर्वकर्मसु।**
**क्षौरभेषजवादाध्वकर्त्तनेषु च तं त्यजेत् ॥ २३ ॥**

इति सत्कृत्यमुक्तावल्याम्।

अर्थ–सत्कृत्यमुक्तावली ग्रन्थमें लिखाहै कि, जन्मनक्षत्रगत जन्मचन्द्र सभी कार्यमें प्रशस्त है. केवल क्षौरकर्ममें, औषधप्रयोगमें, विवादमें, यात्रामें, और छेदनकर्ममें जन्मनक्षत्रगत जन्मचन्द्र परित्याग करना चाहिये ॥ २३ ॥

अथ चन्द्रताराशुद्धिप्रशंसा।

**ताराचन्द्रबले प्राप्ते दोषाश्चान्ये भवन्ति ये।**
**ते सर्वे विलयं यान्ति सिंहं दृष्ट्वा गजा इव ॥ २४ ॥**

इति ग्रन्थान्तरे।

अर्थ–अब चन्द्र और ताराशुद्धिकी उत्कर्षता प्रतिपादन करतेहैं। ग्रन्थान्तरमें लिखाहै कि, जिस प्रकार सिंहको देखकर हाथी भाग जातेहैं तिसी प्रकार तारा और चन्द्रशुद्धिके होनेसे समस्त दोष दूर होजातेहैं ॥ २४ ॥

(*) "अथोपचयसंज्ञा स्यात्त्रिलाभरिपुकर्मणाम्।"

अपिच ।

**सर्वकर्मण्युपादया विशुद्धिश्चन्द्रतारयोः ।**
**तच्छुद्धावेव सर्वेषां ग्रहाणां फलदातृता ॥ २५ ॥ (क)**

अर्थ-चन्द्रशुद्धि और ताराशुद्धिकी प्रशंसा करतेहैं । समस्त कर्ममेंही चन्द्र-तारा शुद्धिकी उत्कर्षता कहीहै, अतएव चन्द्र और ताराकी शुद्धि होनेसेही समस्त ग्रह शुभफल प्रदान करतेहैं ॥ २५ ॥

अन्यच्च ।

**तिथिरेकगुणा प्रोक्ता वारश्चैव चतुर्दश । (*)**
**ऋक्षं षोडशमित्याहुर्योगश्चापि शताधिकः ॥ २६ ॥**
**सहस्राधिकः सूर्यश्चन्द्रो लक्षगुणः स्थितः ।**
**वर्जयित्वा बलं सर्वं तस्माच्चन्द्रबलं बलम् ॥ २७ ॥**

इति राजमार्त्तण्डे ।

अर्थ-राजमार्त्तण्डमें लिखा है कि, कर्मकालीन तिथिका एकगुण कहाहै, इसी प्रकार वारके चौदह गुण कहे हैं, नक्षत्रके सोलह गुण, योगके शताधिक गुण, सूर्यके सहस्राधिक गुण और चन्द्रके लक्षगुण कहे गये हैं, अतएव अन्य सब बल परित्याग करके और भी चन्द्रका बल अवश्यही ग्रहण करना चाहिये॥२६॥२७॥

अपरश्च ।

**तारास्तत्र न गण्यन्ते यत्र चन्द्रो बलोत्तरः ।**
**स्वामिना परितुष्टेन भृत्यक्रोधो निरर्थकः ॥ २८ ॥**

इति दीपिकायाम् ।

अर्थ-जिस प्रकार भृत्य ( नौकर ) का स्वामी प्रसन्न होनेसे भृत्यका क्रोध निरर्थक होता है, उसी प्रकार जिस स्थानमें चन्द्रका बल होय तो उसमें तारावल नहीं देखा जाता है ॥ २८ ॥

---

(क) सर्वकर्मारम्भेषु चन्द्रताराशुद्धेः प्राशस्त्यमाह-सर्वकर्मणीत्यादि । तस्मात्तच्छुद्धौ चन्द्रताराशुद्धौ सत्यामेव सर्वकर्मसु ग्रहाणां फलदायकत्वमिति । यथा राजमार्त्तण्डे-" चन्द्रबलेन विहीनो न मनःपरितोषदः क्रियारम्भः । अन्यगुणैरपि युक्तो नर इवाबलो वरस्त्रीणाम् ।" तथा "तिथिरेकगुणा प्रोक्ता वारश्चैव" इत्यादि । तथाच "तत्रैव तारास्तत्र न गण्यन्ते यत्र" इत्यादि "कृष्णे बलवती तारा" इत्यादि । " तारावलेन कर्त्तव्य चन्द्रमा " इत्यादि ।

(*) वारश्चैव चतुर्गुणा इत्यपि पाठः ।

प्रकारान्तरञ्च ।

क्रकचा मृत्युयोगश्च दिनं दग्धं तथापरे ।
शुभे चन्द्रे प्रणश्यन्ति वृक्षा वज्रहता इव ॥ ॥ २९ ॥

इति ग्रन्थान्तरे ।

अर्थ–जिसप्रकार वज्रसे वृक्षका नाश होजाताहै, तिसी प्रकार क्रकचयोग,मृत्युयोग,दग्धादिन और अन्यान्य अशुभ दोषोंका चन्द्र शुद्ध होनेसे नाश होता है२९॥

अपिच ।

कृष्णे बलवती तारा शुक्ले चन्द्रो बलोत्तरः ।
तस्मात्कार्यं प्रयत्नेन सुशुद्धे चन्द्रतारके ॥ ३० ॥

इति दीपिकायाम् ।

अर्थ–कृष्णपक्षमें तारावल अधिक होता है और शुक्लपक्षमें चन्द्रका बल अधिक होताहै अतएव चन्द्र और तारा इन दोनोंके शुद्ध होनेसेही कर्म करना चाहिये ॥ ३० ॥

अन्यच ।

ताराबलेन कर्त्तव्यं चन्द्रमा यदि दुर्बलः ।
दुर्बलेनैव शक्तः स्यात्प्रारब्धे विषये यतः ॥ ३१ ॥

इति दीपिकायाम् ।

अर्थ–यदि चन्द्रमा क्षीण होनेसे दुर्बल होय तो तारावल ग्रहण करना चाहिये जैसे प्रारब्ध विषयमें भी दुर्बल चन्द्र शक्त नहीं होताहै ॥ ३१ ॥

प्रकारान्तरञ्च ।

न कृष्णपक्षे शशिनः प्रभावस्ताराबलं तत्र विचारणीयम् ॥
विदेशसंस्थे विकलेऽपि पत्यौ सर्वाणि कर्माणि करोति नारी॥३२॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावली ग्रन्थमें लिखाहै कि, जिस प्रकार विदेशगामी वा विकलाङ्गादियुक्त पति वर्तमान होनेसे समस्त कर्म उसकी स्त्री करतीहै, तिसी प्रकार कृष्णपक्षमें चन्द्रमाकी कला क्षीण होनेसे तारावलकोही ग्रहण करना चाहिये३२॥

अथ चन्द्रताराद्यशुभप्रतीकारः ।

कर्म कुर्यात्फलावाप्तौ चन्द्रादिशोभने बुधः ।
सुस्थकाले त्विदं सर्वं नात्तः कालमपेक्षते ॥ ३३ ॥

इति ज्योतिषसारसंग्रहे ।

अर्थ–कर्म करनेके समय यदि अवकाश होवै वा विशेष फल पानेके अर्थ चन्द्र-

ताराादिके शुद्ध होनेसेही कर्म करना चाहिये, किन्तु जब कर्म करनेका अवकाश न होय तब निम्न ( नीचे ) लिखेहुए प्रतीकारको करके कर्म करै ॥ ३३ ॥

अन्यच्च ।

चन्द्रे च शंखं लवणञ्च तारे तिथावभद्रे सिततण्डुलांश्च ॥
धान्यञ्च दद्यात्करणर्क्षवारे योगे तिलान्हेम मणिञ्च लग्ने ॥ ३४ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ-अब चन्द्रताराादिके अशुद्ध होनेसे उनका प्रतीकार कहते हैं यथा,-चन्द्र अशुद्ध होनेसे शंखदान करना चाहिये, इसी प्रकार तारा अशुद्ध होनेसे लवणदान, तिथि अशुद्ध होनेसे शुभ्र तण्डुलदान करै अशुद्ध करण अशुभनक्षत्र वा अशुद्ध वार होनेसे धान्य ( नाज ) दान करै और अशुभ योगमें तिलदान और अशुद्ध ( अशुभ ) लग्न होनेसे उसके प्रतीकारके निमित्त स्वर्ण और मणिदान करना चाहिये ॥ ३४ ॥

चन्द्रस्य विशेषः ।

श्वेतं वासः सिता धेनुः शंखो वा क्षीरपूरितः ।
देयो वा राजतश्चन्द्रश्चन्द्रदोषोपशान्तये ॥ ३५ ॥ ( क )

अर्थ-चन्द्र अशुद्ध होनेसे दोषशान्तिके अर्थ श्वेतवस्त्र, शुक्लवर्णकी गौ और दूधसे भराहुआ शङ्ख अथवा चाँदीका चन्द्रमा बनवाकर दान करना चाहिये।३५॥

अथ चन्द्रदोषोपशान्तिस्नानम् ।

उशीरञ्च शिरीषञ्च चन्दनं पद्मकं तथा ।
शंखे न्यस्तमिदं स्नानं चन्द्रदोषोपशान्तये ॥ ३६ ॥

अर्थ-चन्द्र अशुभ होनेसे उशीर, शिरीष, चन्दन और पद्ममिश्रित जल शङ्खमें भरकर उसके द्वारा स्नान करनेसे चन्द्रका दोष दूर हो जाता है ॥ ३६ ॥

अथ गोचरे चन्द्रशुद्धिफलम् ।

सप्ताद्यचन्द्रे ध्रुवमर्थलाभः षष्ठे तृतीये धनभोगमायुः ॥
सर्वार्थसिद्धिं दशमे लभन्ते एकादशे सर्वसुखानि चैव ॥ ३७ ॥

अर्थ-अब चन्द्रशुद्धिका फल वर्णन करते हैं, सातवें स्थानमें स्थित वा जन्मके

---

( क ) चन्द्रदोषशान्तिदानमाह-श्वेतामिति वस्त्रादीनां प्रत्येकमेव दोषहन्तृत्वं समुदिते तु फलभूमा कल्पनीयः ।

चन्द्र होनेसे अर्थ ( द्रव्य ) लाभ होता है इसी प्रकार छठे और तीसरे चन्द्रमें भोग और आयुकी वृद्धि होती है । दशवें चन्द्र होनेसे सर्वार्थलाभ होता है और ग्यारहवें चन्द्र होनेसे सर्वप्रकारके सुख प्राप्त होते हैं ॥ ३७ ॥

अथ ग्रहाणां गोचरापवादमाह ।

त्रयोदशदिनान्यर्कौ दशपड्धरणीसुतः ।
सार्द्धं दिनञ्च शीतांशुर्मासमेकादशं तमः ॥ ३८ ॥
सौरिः पादाधिकं वर्षं मासानष्टौ बृहस्पतिः ।
भवनार्द्धं भृगुः सौम्यो यावद्राश्यशुभाः फलम् ।
कद्यं नतादिके दद्युर्न तथा शेषभागगाः ॥ ३९ ॥

अर्थ–सूर्य एक राशिमें एक मास स्थित रहते हैं । यदि सूर्य विरुद्ध हों तब तेरह दिनके बाद शुभ फल प्रदान करते हैं, मङ्गल तीन पक्ष एक राशिमें रहते हैं यदि विरुद्ध हो तो सोलह दिनके बाद शुभ फल करते हैं, इसी प्रकार चन्द्र सवादो दिन एक राशिमें रहता है विरुद्ध होनेसे डेढदिनके बाद शुभफल करता है, राहु डेढ वर्ष एक राशिमें रहता है विरुद्ध होनेसे ग्यारह मासके बाद शुभ फल करताहै, शनि अढाई वर्ष एक राशिमें वास करता है विरुद्ध होनेसे एक वर्ष तीन महीनेके बाद शुभ फल करता है; बृहस्पति एक वर्ष एक राशिमें रहता है विरुद्ध होनेसे आठ महीनेके बाद शुभ फल करता है; शुक्र अट्ठाईस दिन एक राशिमें रहता है विरुद्ध होनेसे चौदह दिनके बाद शुभ फल करता है और बुध अठारह दिनतक एक राशिमें वास करता है विरुद्ध होनेसे नौ दिनके बाद शुभ फल प्रदान करता है; किन्तु उक्त नियतकालके पूर्वमें विरुद्ध ग्रह होनेसे उनमें उपनयनादि कार्य न करना चाहिये ॥ ३८ ॥ ३९ ॥

अथ ग्रहाणां दक्षिणवेधवामवेधौ । ( ख )

तत्रादौ रवेः ।

लाभविक्रमखशत्रुतः स्थितः शोभनो निगदितो दिवाकरः ॥
खेचरैः सुततपोजलान्त्यगैर्व्योमभिर्यदि न विध्यते तदा ॥ २४० ॥

इति ज्योतिषतत्त्वे ।

अर्थ–अब ग्रहोंकी दक्षिणवेध और वामवेधमें शुद्धि कही जातीहै यथा, जन्मराशिसे ग्यारहवें तीसरे,दशवेंमें और छठे स्थानमें स्थित सूर्य दक्षिणवेधमें शुद्ध होते

( ख ) वामवेधत्वञ्च यूनजन्मोती इति स्मार्त्ताः । सप्तानां ग्रहाणां दक्षिणवेधवामवेधौ। इत्यपि ज्योतिस्तत्त्वे स्मार्तेनोक्तम् ।

हैं। यदि शनि ग्रह पांचवें, नववें चौथे और बारहवें स्थानमें हो अर्थात् ग्यारहवें स्थानके सूर्य शुभ होतेहैं यदि पांचवें शनि होय इसी प्रकार तीसरे स्थानके सूर्य शुभ होते हैं यदि नववें स्थानमें शनि होय, दशमें स्थानका सूर्य शुभ होताहै यदि चौथे शनि होय और छठे स्थानमें स्थित सूर्य शुभफल प्रदान करतेहैं यदि बारहवें स्थानमें शनि ग्रह होय जन्मराशिसे पांचवें, नववें, चौथे और बारहवें सूर्य वामवेधमें शुद्ध ( शुभ ) होते हैं यदि शनिग्रह ग्यारहवें, तीसरे, दशवें और छठे स्थानमें स्थित न होवै अर्थात् पांचवें सूर्य शुभ होते हैं यदि शनि ग्यारहवें न होय. इसी प्रकार नववें सूर्य शुभ होताहै, जो तीसरे स्थानमें शनि न होय, चौथे सूर्य शुभ होताहै, यदि दश शनि न होय और बारहवें स्थानके सूर्य वामवेधमें शुभफल प्रदान करतेहैं, यदि शनि छठे स्थानमें स्थित न होय ॥ ४० ॥

चन्द्रस्य ।

**द्यूनजन्मरिपुलाभखत्रिगश्चन्द्रमाः शुभफलप्रदस्तथा ।**
**स्वात्मजास्तमृतिबन्धुधर्मगैर्विध्यते न विबुधैर्यदि ग्रहैः ॥ ४१ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-जन्मराशिसे सातवें, प्रथम, छठे, ग्यारहवें, दशमें और तीसरे स्थानमें स्थित चन्द्र दक्षिणवेधमें शुभफल प्रदान करताहै, यदि दूसरे, पांचवें, बारहवें, आठवें, चौथे और नववें स्थानमें बुध ग्रह स्थित होय अर्थात् सातमें चन्द्र शुभ होताहै, यदि दूसरे स्थानमें बुध स्थित होय, इसी प्रकार जन्मराशिका चन्द्र शुभ होताहै यदि पांचवें बुध होय, छठे स्थानका चन्द्र शुभ होता है, यदि बारहवें बुध होय, ग्यारहवें चन्द्र शुभ होताहै, जो आठवें बुध होवै, दशमें स्थानका चन्द्र शुभ होताहै जो चौथे स्थानमें बुध होय और तीसरे स्थानमें स्थित चन्द्र दक्षिणवेधमें शुभफल प्रदान करतेहैं यदि नववें स्थानमें बुध ग्रह स्थित होय, जन्मराशिसे दूसरे, पांचवें, बारहवें, आठवें, चौथे और नववें स्थानमें स्थित चन्द्र वामवेधमें शुभफल प्रदान करते हैं, यदि सातवें जन्मराशिमें, छठे, ग्यारहवें दशवें और तीसरे स्थानमें बुध ग्रह न होय अर्थात् दूसरे स्थानमेंका चन्द्रमा शुभ होता है यदि सातवें स्थानमें बुध न होय इसी प्रकार पांचवें चन्द्र शुभ होताहै यदि जन्मराशिमें बुध न होय. बारहवें चन्द्र शुभ होता है यदि छठे बुध न होय आठवें चन्द्र शुभ होताहै जो ग्यारहवें बुध न होवै, चौथे चन्द्र शुभ होवाहै जो दशमें बुध न होय. और नववें स्थानमें स्थित चन्द्र वामवेधमें शुभफल प्रदान करता है यदि तीसरे स्थानमें बुध ग्रह स्थित न होवै ॥ ४१ ॥

प्रकारान्तरे वामवेधे चन्द्रशुद्धिकथनम् ।

**सितशनिकुजजीवार्कास्त इन्दुर्नराणां**
**व्ययसुखनवमस्थोऽपीष्टदाताथ तेषाम् ।**
**खसुतनिधनगश्चेन्मृत्युपुत्रार्थगोऽपि**
**प्रचुरशुभफलं स्याद्वामवेधेन शुद्धः ॥ ४२ ॥ ( ग )**

इति ज्योतिस्तत्त्वे ।

**अर्थ–अब प्रकारान्तरकी रीतिसे वामवेधमें स्थित चन्द्रकी शुद्धि कही जाती है**

( ग ) चन्द्रस्य वामवेधेन शुद्धिमाह–सितेति । नराणां व्ययसुखनवमस्थो मिरुद्ध-श्चन्द्रः शुक्रशनिकुजजीवार्काणाम् अस्ते सप्तमे स्थितो नराणामिष्टदाता स्यात् एतत्तु रवि-मन्दकुजाक्रान्तमित्यादिना यामित्रवेधनिषिद्धादन्येषु कर्मसु बोद्धव्यम् । अथ नराणां मृत्युपुत्रार्थगोऽपि चन्द्रः यथासंख्यं तेषां सितादीनां खसुतनिधनगो यदि स्यात्तदा वाम वेधेन शुद्धः प्रचुरशुभफलो भवति । प्रचुर शुभफलं यस्मात्स प्रचुरशुभफल इत्यर्थः । अय-मर्थः नृणामष्टमगोऽपि सितादीनां दशमगश्चेच्छुभः । नृणां पञ्चमगोऽपि सितादीनां पञ्चमगश्चेच्छुभः । नृणां द्वितीयगोऽपि सितादीनामष्टमगश्चेच्छुभः इति । तथाच बृहद्वा-श्चार्यां “ पञ्चमायदशषट्त्रिजन्मगो नेष्टदो द्विनिधनोपगैर्ग्रहैः । बन्धुरिःफनवपञ्चमास्थिते-श्चेष्टदो यदि विलोमवेधगः ” अस्यार्थः । जन्मराशेः सप्तमायदशषट्त्रिजन्मगश्चन्द्रो यथा-संख्यं जन्मराशेर्द्विनिधनोपगैर्बन्धुरिःफनवपञ्चमस्थैश्च ग्रहैर्विद्धो न शुभदः स्यात् । अत्रच पूर्वोक्तयुनजन्मेत्यादिवचनाद् बुधं त्यक्त्वेति बोद्धव्यम् । तद्यथा जन्मराशेः सप्तमश्चन्द्रो जन्मराशेर्द्वितीयस्थेन बुधवर्जितेन ग्रहेण विद्धो न शुभः । एव जन्मराशेरेकादशस्थे जन्मराशेरष्टमस्थेन दशमस्थो बन्धुस्थेन षष्ठस्थो रिःफस्थेन तृतीयस्थो नवमस्थेन दशमस्थो बन्धुस्थेन षष्ठस्थो रिःफस्थेन तृतीयस्थो नवमस्थेन जन्मगः पञ्चमस्थेन विद्धो नेष्टद इत्यर्थः । यदि तु विलोमवेधकश्चन्द्रः स्यात्तदा इष्ट इत्यर्थः । एतदुक्तं भवति विपरीतगश्चन्द्रो द्विनिधनबन्धुरिःफनवपञ्चमस्थो यथासंख्य विपरीतस्थैः जन्मराशेः सप्तमायदशषट्त्रिजन्मस्थैर्बुधवर्जितैर्ग्रहैर्विद्धश्चन्द्रः शुभदः स्यात् । तद्यथा जन्मराशेर्द्वितीयस्थश्चन्द्रो जन्मराशेः सप्तमस्थेन ग्रहेण विद्धः शुभः । अतएव जन्मराशेः सप्तमात् जन्मराशेर्द्वितीयस्याष्टमत्वेन ग्रन्थकृता अर्थगश्चन्द्रः सितादीनां निधनगश्चेच्छुभ इत्युक्तः । एवञ्चाष्टमस्थ एकादशस्थेन विद्धः शुभः अतोऽष्टमस्य एकादशाद्दशमस्थत्वेन ग्रन्थकृता मृत्युगश्चन्द्रः सितादीनां दशमगश्चेत् शुभ इत्युक्तः । एव बन्धुस्थो दशमस्थेन विद्धः शुभः । अतश्चतुर्थस्य दशमात् सप्तमस्थत्वेन ग्रन्थकृता सुखगश्चन्द्रः सितादीनां सप्तमस्थश्चेच्छुभ इत्युक्तः । एव रिःफस्थः षष्ठस्थेन विद्धः शुभः । अतो रिःफस्य षष्ठात्स-प्तमस्थत्वेन ग्रन्थकृता व्ययस्थश्चन्द्रः सितादीनां सप्तमस्थश्चेत् शुभः इत्युक्तः । एव नवम-स्थस्तृतीयस्थेन विद्धः शुभः अतो नवमस्य तृतीयात्सप्तमस्थत्वेन सितादीनामस्तस्थ इत्यु-क्तम् । एव पंचमस्थो जन्मराशिगतेन ग्रहेण विद्धः शुभः अतः पञ्चमस्य जन्मराशितः पञ्चमत्वेन ग्रन्थकृता पञ्चमश्चन्द्रः सितादीनां पञ्चमस्थश्चेच्छुभ इत्युक्तः। तथाच वासिष्ठः। “ जन्मराशिगतश्चन्द्रो जन्मतः पञ्चमो ग्रहः । स्थितो यदा तदा चेन्दुर्वेधगो नेष्टदः

मनुष्यके बारहवें, चौथे और नववें स्थानमें स्थित विरुद्ध चन्द्र यदि शुक्र, शनि, मङ्गल बृहस्पति वा सूर्यके सातवें स्थानमें स्थित होय तो वामवेधमें शुद्ध होकर शुभफल प्रदान करता है, इसी प्रकार मनुष्यके आठवें स्थानका विरुद्ध चन्द्र जो शुक्र, शनि, मङ्गल, बृहस्पति वा सूर्यके दशवें स्थानमें स्थित होय तो शुभफल होता है, पांचवें स्थानका विरुद्ध चन्द्र इन्हीं शुक्रादि ग्रहोंके पांचवें स्थानमें स्थित होनेसे शुभफल करता है और दूसरे स्थानका विरुद्ध चन्द्र यदि उक्त शुक्रादिग्रहोंके आठवें स्थानमें स्थित होय तो वामवेधमें शुद्ध होकर प्रचुर शुभफल प्रदान करता है ॥ ४२ ॥

कुजशन्योः ।

**विक्रमायारिपुगः कुजः शुभः स्यात्तदान्त्यसुतधर्मगैः खगैः ।**
**चेन्न विद्ध इनसूनुरप्यसौ किन्तु घर्मघृणिना न विध्यते ॥ ४३ ॥**

इति ज्योतिस्तत्त्वे ।

*अर्थ*–मनुष्यकी जन्मराशिसे तीसरे स्थानमें मङ्गल होनेसे दक्षिणवेधमें शुद्ध होता है यदि बारहवें स्थानमें कोई ग्रह न होवे इसी प्रकार ग्यारहवें स्थानका मंगल शुभ होता है जो पाचवें घरमें कोई ग्रह न होय और छठे स्थानका मंगल शुभफल करता है जो नववें स्थानमें कोई ग्रह न होय । जन्मराशिसे बारहवें स्थानका मङ्गल वामवेधमें शुभ होता है. यदि तीसरे घरमें कोई ग्रह होय. इसी प्रकार पाचवें स्थानका मङ्गल शुभ होता है. जो ग्यारहवें स्थानमें कोई ग्रह होय और नववें स्थानका मङ्गल शुभ होता है जो छठे स्थानमें किसी ग्रहका वास होवे । मनुष्यकी जन्मराशिसे तीसरे स्थानका शनि दक्षिणवेधमें शुभ होता है जो बारहवें स्थानमें सूर्य न होय. इसी प्रकार ग्यारहवें स्थानका शनि शुभ होता है जो पांचवें स्थानमें सूर्य न हो और छठे स्थानका शनि शुभ होता है जो नववें घरमें सूर्य न हो मनुष्यकी जन्मराशिसे बारहवें स्थानका शनि शुभ होता है यदि ग्यारहवें स्थानमें सूर्य स्थित होय और नववें स्थानका शनि वामवेधमें, शुभ होता है जो छठे स्थानमें सूर्य स्थित होवे ॥ ४३ ॥

बुधस्य ।

**स्वाम्बुशत्रुमृतिखायगःशुभो ज्ञस्तदा न खलु विध्यते यदा ।**
**आत्मजात्रिनवकाद्यनैधनप्रान्त्यगैर्विविधुभिर्नभश्चरैः ॥ ४४ ॥**

इति ज्योतिस्तत्त्वे ।

*अर्थ*–जन्मराशिसे दूसरे स्थानमें बुध होनेसे दक्षिणवेधमें शुद्ध होता है यदि

---

स्मृतः । पञ्चमस्थानगश्चन्द्रो जन्मराशिगतो ग्रहः । यदा तदा विपर्यस्तो वेधगः शुभदः स्मृतः । एवं तृतीयषट्सप्तमदशमैकादशोपगः । धर्मारिफद्विचन्द्राणस्थितैर्विद्धस्तु नेष्टदः । विपरीतेन विद्धस्तु शुभदः परिकीर्तितः ॥" इति ।

पांचवें स्थानमें चन्द्र ग्रह होय, इसी प्रकार चौथे बुध शुभ होता है जो तीसरे स्थानमें चन्द्र होय छठे बुध शुभ होता है जो नववें स्थानमें चन्द्रमा होय आठवें बुध शुभ होता है जो जन्मराशिमें चन्द्र होय; दशवें बुध शुभ होता है जो आठवें चन्द्रमा होय और ग्यारहवें बुध दक्षिणवेधमें शुभ होता है यदि बारहवें स्थानमें चन्द्रातिरिक्त ग्रह न होय । जन्मराशिसे पांचवें स्थानमें बुध वामवेधमें शुभ होताहै । यदि दूसरे स्थानमें चन्द्रमा न होय इसी प्रकार तीसरे स्थानका बुध शुभ होता है जो चौथे घरमें चन्द्रग्रह न होय नववें स्थानका बुध शुभ फल करता है यदि छठे स्थानमें चन्द्र न होय, जन्मराशिमें स्थित बुध शुभ होता है यदि आठवें स्थानमें चन्द्र न होय, आठवें बुध शुभ होता है यदि दशवें स्थानमें चन्द्र ग्रह न होवे और बारहवें स्थानमें स्थित बुध वामवेधमें शुभफल प्रदान करता है यदि ग्यारहवें स्थानमें चन्द्र ग्रह न होय ॥ ४४ ॥

गुरोः ।

**स्वायधर्मतनयद्युनस्थितो नाकनायकपुरोहितःशुभः ।**
**रिःफरन्ध्रखजलत्रिगैर्यदा विध्यते गगनचारिभिर्नहि ॥ ४५ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-जन्मराशिसे दूसरे स्थानमें स्थित बृहस्पति दक्षिणवेधमें शुभ होता है यदि बारहवें स्थानमें कोई ग्रह न होय. इसी प्रकार ग्यारहवें स्थानका बृहस्पति शुभ होता है यदि आठवें स्थानमें कोई ग्रह न होय. नववें स्थानका बृहस्पति शुभ होता है जो दशवें स्थानमें कोई ग्रह न होय. पांचवें स्थानका बृहस्पति शुभ होता है यदि चौथे घरमें कोई ग्रह न होय और सातवें स्थानमें स्थित बृहस्पति दक्षिणवेधमें शुभ फल प्रदान करता है जो तीसरे स्थानमें किसी ग्रहका वासस्थान न होय. जन्मराशिसे बारहवें स्थानमें स्थित बृहस्पति वामवेधमें शुभ फल प्रदान करता है यदि दूसरे घरमें कोई ग्रह होय, इसी प्रकार आठवाँ बृहस्पति शुभ होता है यदि ग्यारहवें घरमें कोई ग्रह स्थित होय, दशवाँ बृहस्पति शुभ होताहै यदि नववें स्थानमें कोई ग्रह होय, चौथे स्थानका बृहस्पति शुभ होताहै यदि पांचवें स्थानमें कोई ग्रह होय और तीसरे स्थानमें स्थित बृहस्पति वामवेधमें शुभफल प्रदान करता है यदि सातवें स्थानमें कोई ग्रह स्थित होवै ॥ ४५ ॥

शुक्रस्य ।

**आसुताष्टमतपोऽव्ययायगो विद्ध आस्फुजिदशोभनः स्मृतः ।**
**नैधनास्ततनुकर्मधर्मधीलाभवैरिसहजस्थखेचरैः ॥ ४६ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-मनुष्यकी जन्मराशिमें स्थित शुक्र दक्षिणवेधमें शुभ होताहै यदि आठवें

स्थानमें कोई ग्रह न होय इसी प्रकार दूसरे स्थानमें स्थित शुक्र शुभ होता है यदि सातवें स्थानमें ग्रह न होय, तीसरे शुक्र शुभ अशुभ होता है यदि कोई ग्रह जन्मराशिमें स्थित न होय चौथे स्थानके शुक्र शुभ होताहै यदि दशवें घरमें कोई ग्रह न होय, पांचवें स्थानके शुक्र शुभ होते हैं यदि नववें स्थानमें कोई ग्रह न होय, नवें स्थानके शुक्र शुभ होता है यदि ग्यारहवें स्थानमें कोई ग्रह न होय, बारहवें स्थानके शुक्र शुभ होता है यदि छठे घरमें कोई ग्रह न होय और ग्यारहवें स्थानमें स्थित शुक्र दक्षिणवेधमें शुभ फल प्रदान करताहै यदि तीसरे स्थानमें किसी ग्रहका वासस्थान न होय मनुष्यकी जन्मराशिसे आठवें स्थानमें स्थित शुक्र वामवेधमें शुभफल प्रदान करते हैं यदि जन्मराशिमें कोई ग्रह स्थित होय, इसी प्रकार सातवें स्थानका शुक्र शुभ होता है, यदि दूसरे स्थानमें किसी ग्रहका वास स्थान होय जन्मराशिमें स्थित शुक्र शुभ होता है यदि तीसरे स्थानमें कोई ग्रह होय, दशमें स्थानका शुक्र शुभ होता है यदि चौथे स्थानमें कोई ग्रह होय, नववें स्थानका शुक्र शुभ होता है यदि पांचवें स्थानमें कोई ग्रह होय, पांचमें स्थानका शुक्र शुभ होताहै यदि आठवें स्थानमें कोई ग्रह स्थित होय, ग्यारहवें स्थानका शुक्र शुभ होताहै यदि नवमें स्थानमें कोई ग्रह होय, छठे स्थानका शुक्र शुभ होताहै यदि बारहवें स्थानमें कोई ग्रह स्थित होय और तीसरे स्थानका शुक्र वामवेधमें शुभ फल प्रदान करता है यदि ग्यारहवें स्थानमें किसी ग्रहका वासस्थान होय ॥ ४६ ॥

इति ग्रहाणां दक्षिणवेधवामवेधौ।

अथ वेधफलम्।

**एवमत्र खचरा व्यधान्विताः सत्फलं न हि दिशन्ति गोचरे।**
**वामवेधविधिना त्वशोभना अप्यमी शुभफलं दिशन्त्यलम्॥४७(*)**

अर्थ–दक्षिणवेधमें जिस २ स्थानमें ग्रहोंके होनेसे वेध होताहै वह पूर्वमें कह-

(*) यथोक्तस्थानस्था ग्रहा एवमुक्तप्रकारेण व्यधान्विता जन्मराशेर्यथासंख्य पूर्वोक्तस्थानस्थैर्ग्रहैर्विद्धा गोचरे शुभा अपि शुभफलं न दिशन्ति। विपरीतवेधविधिना तु विद्धाः शुभाः। वेधकस्थानानि यान्युक्तानि वामवेधे तानि वेध्यस्थानानि यानि च वेध्यस्थानान्युक्तानि वामवेधे तानि च वेधकस्थानानि नराणां वामवेधवेध्यस्थानस्था ग्रहाः जन्मराशितो वामवेधकस्थानस्थैर्ग्रहैर्विद्धा अशुभफला अपि शुभफलमत्यर्थं दिशन्तीति। तथाच खेरुदाह्रियते। नराणां लाभत्रिक्रमरशत्रुषु स्थितो दिवाकरो जन्मराशितो यथासंख्य सुततपोजलान्त्यगैः शनिवर्जितैर्ग्रहैर्विद्धः सन् शुभफलं न ददाति। तथाच वामवेधे नराणां सुततपोजलान्त्यगो दिवाकरः जन्मराशितो यथासंख्य लाभत्रिक्रमरशत्रुषु स्थितैर्ग्रहैः शनिवर्जितैर्विद्धः सन् शुभफलं ददातीत्यर्थः। एवमन्येषामपि बोद्धव्यम् इति॥

दियाहै उस २ स्थानमें ग्रह होनेसे गोचरमें ग्रहोंके शुद्ध अशुद्ध होनेसेभी शुभफल प्रदान नहीं करते हैं; किन्तु वामवेधमें ग्रहोंके विद्ध होनेसेभी उनके द्वारा शुभफल प्राप्ति होती है ॥ ४७ ॥

इति वेधफलम् ।

अथ दिवाविवाहनिषेधः ।

विवाहे तु दिवाभागे कन्या स्यात्पुत्रवर्जिता ।
विवाहानलदग्धा सा नियतं स्वामिघातिनी ॥ ४८ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-दिनमें विवाह होनेसे कन्या पुत्रहीना होती है और विवाहानल द्वारा दग्ध होकर वह स्त्री स्वामीघातिनी होतीहै ॥ ४८ ॥

अथ कुलिकाख्ययोगकथनम् ।

सूर्ये च सप्तमी सोमे षष्ठी भौमे च पञ्चमी ।
बुधे चतुर्थी देवेज्ये तृतीया भृगुनन्दने ॥ ४९ ॥
द्वितीया वर्जनीया स्यात्प्रतिपच्च शनैश्वरे ।
कुलिकाख्यो हि योगोऽयं विवाहादौ न शस्यते ॥ २५० ॥

इति ज्योतिःसारे ।

अर्थ-ज्योतिःसारमें लिखाहै कि, रविवारको सप्तमी, सोमवारको षष्ठी, मङ्गलवारको पञ्चमी, बुधवारको चतुर्थी, बृहस्पतिवारको तृतीया, शुक्रवारको द्वितीया और शनिवारको प्रतिपदा तिथि होनेसे कुलिकाख्ययोग होताहै, इस योगमें विवाह न करना चाहिये ॥ ४९ ॥ २५० ॥

अथ दग्धकथनम् ।

द्वितीया मीनधनुषोश्चतुर्थी वृषकुम्भयोः ।
मेषकर्कटयोः षष्ठी कन्यामिथुनकेऽष्टमी ॥ ५१ ॥
दशमी वृश्चिके सिंहे द्वादशी मकरे तुले । (×)
एभिर्जातो न जीवेत यदि शत्रुसमो भवेत् ॥ ५२ ॥
विवाहे विधवा नारी यात्रायां मरणं भवेत्
निष्फलं कृषिवाणिज्यं विद्यारम्भे च मूर्खता ॥ ५३ ॥

(×) "सिता च कृष्णा दशमी हरावली विष्णर्मृगे तोल्धरेऽवल्क्षे"इति ग्रन्थान्तरे।

गृहप्रवेशे भङ्गः स्याच्चूडायां मरणं ध्रुवम्।
ऋणदाने फलं नास्ति व्रतादाने च निष्फले।
शुभकर्माणि सर्वाणि नैव कुर्याद्विचक्षणः॥ ५४॥

इति राजमार्त्तण्डादौ।

अर्थ-अब दग्धातिथि वर्णन करते हैं,मीन और धन राशिमें सूर्य होनेसे द्वितीया दग्धा तिथि होती है इसी प्रकार वृष और कुम्भके सूर्य होनेसे चौथ दग्धा तिथि होतीहै, मेष और कर्कके सूर्य होनेसे षष्ठी दग्धा होतीहै, कन्या और मिथुनके सूर्य होनेसे अष्टमी दग्धा होतीहै, वृश्चिक और सिंहके, सूर्य होनेसे दशमी दग्धा होती है,मकर और तुला राशिमें सूर्य होनेसे द्वादशी तिथि दग्धा होती है। इन्हींको मासदग्धा कहते हैं। इनमें उत्पन्न हुआ मनुष्य इन्द्रके समान होनेसेभी नहीं जीसक्ता हैं,मासदग्धामें विवाह होनेसे कन्या विधवा होजातीहै इसी प्रकार यात्रा करनेसे मृत्यु होतीहै, कृषि( खेती )और वाणिज्य करनेमें कर्म निष्फल होताहै,विद्यारम्भ करनेसे मूर्ख होताहै, गृहप्रवेशमें गृहभङ्ग होजाताहै, चूडाकरण करनेमें मृत्यु होती है। ऋणदानमें फलका अभाव होताहै, और उपनयन और दान करनेसे निष्फल होताहै। अतएव पण्डितगणको चाहिये कि, किसी प्रकारका शुभ कर्म मासदग्धामें न करें॥ ५४॥

अन्यच्च।

आद्या धनुःषु शफरीषु परा द्वितीया
एकान्तरे दिनकरे तिथयः प्रदग्धा॥ ५५॥

इति ज्योतिस्तत्त्वे।

अर्थ-धनराशिमें सूर्य होनेसे शुक्ल पक्षकी द्वितीया दग्धा तिथि होती है। और मीन राशिमें सूर्य होनेसे कृष्णपक्षकी द्वितीया दग्धा होतीहै एकएक तिथिअन्तर प्रदग्धा होती है॥ ५५॥

कार्मुके च तथा कुम्भे मेषे युग्मे हरौ घटे।
एषु शुक्ला द्वितीयाद्या दग्धाः कृष्णा झषादिषु॥ ५६॥

इति ज्योतिस्तत्त्वे।

अर्थ-धन, कुम्भ, मेष, मिथुन, सिंह और तुला राशिमें सूर्य होनेसे शुक्लपक्षकी द्वितीयादि एक २ तिथिके अन्तरमें दग्धा होतीहै और कृष्णपक्षकी द्वितीयादि मीनादिराशिमें सूर्यके होनेसे दग्धा होती है॥ ५६॥

राश्योश्चन्द्रस्य च खे स्थित्या वाच्यं फलं बुधैः।

याःप्रोक्तास्तिथयो दग्धा मेषादिषु च राशिषु ।
शुक्लास्ता विषमे राशौ समे कृष्णाः प्रकीर्त्तिताः ॥ ९७ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-पूर्व वचनमें जो दोदो राशिमें द्वितीयादि तिथि दग्धा कही है उनको चन्द्र और सूर्य इन दोनों तिथिके द्वाराही जाननाचाहिये इसमें विशेष यही है कि, विषम राशिमें शुक्लपक्षकी तिथि दग्धा होतीहै और समराशिमें कृष्णपक्षकी तिथि दग्धा होती है ॥ ९७ ॥

राशिषु चन्द्रस्थित्या दग्धायां व्यक्तत्वमाह ।

षष्ठी मेषकुलीरयोर्हिमकरे कन्या युगे चाष्टमी
सिंहे वृश्चिकराशिगे च दशमी तौलौ मृगे द्वादशी ।
चापे चाथ झषे द्विका यदि वृषे कुम्भे चतुर्थी यदा
दग्धाख्यास्तिथयो वदन्तिमुनयस्त्याज्याःसदा कर्मसु॥९८॥

इति ज्योतिस्तत्त्वे ।

अर्थ-राशिमें चन्द्रके स्थित होनेसे जो तिथिदग्धा होती है अब उनको कीर्त्तन करते हैं। मेष और कर्क राशिमें चन्द्र होनेसे षष्ठी तिथि दग्धा होती है इसी प्रकार कन्या और मिथुन राशिमें चन्द्रके होनेसे अष्टमी दग्धा होतीहै, सिंह और वृश्चिक राशिमें चन्द्रके होनेसे दशमी दग्धा होतीहै, तुला और मकर राशिमें चन्द्रके होनेसे द्वादशी दग्धा होतीहै, धन और मीन राशिमें चन्द्रके होनेसे द्वितीया दग्धा होती है और वृष और कुम्भराशिमें चन्द्रके स्थित होनेसे चतुर्थी तिथि दग्धा होती है। इन समस्त दग्धा तिथियोंको समस्त शुभकर्ममें परित्याग करना चाहिये इस प्रकार मुनिगणने कहाहै ॥ ९८ ॥

अथावमत्र्यहस्पर्शौ ।

तिथ्यन्तद्वयमेको दिनवारः स्पृशति यत्र ॥ तद्भवत्यवमादिनं
त्रिदिनस्पृक्तिथित्रयस्पर्शनादह्नः ॥ ९९ ॥ (१)

अर्थ-अब अवम और त्र्यहस्पर्शको कहते हैं एक दिनरात्रिके मध्यमें दो

(१) अवमत्र्यहस्पर्शादिनमाह-तिथ्यन्तेति । एको दिनवारः एक एव वारस्तिथ्यन्तद्वयं यत्र दिने स्पृशति तद्दिनमवमसंज्ञकं भवति अह्नस्तिथित्रयस्पर्शनात् त्रिदिनस्पृग्दिनं स्यात् यदहस्तिथित्रयं स्पृशति तद्दिनं त्रिदिनस्पृगित्यर्थः । यथा दण्डद्वयमेका तिथिस्तदनन्तरमपरदिनसूर्योदयावधि समस्तदिनव्यापिनी चान्या तद्दिनमवमं स्यादिति । यत्र

तिथियोंका अवसान होनेसे उस दिनको अवम ( २ ) कहते हैं और एक दिन रात्रिके मध्यमें तीन तिथियोंका स्पर्श होनेसे उसको त्र्यहस्पर्श कहते हैं ॥५९॥

आपिच ।

**द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः ॥ २६० ॥**

इति कौर्मपाद्मयोः ।

अर्थ-कूर्मपुराण और पद्मपुराणमें लिखा है कि, यदि एक दिनरात्रिके मध्यमें दो तिथियोंका अन्त होय तब उसको दिनक्षय ( त्र्यहस्पर्श ) कहते हैं ॥२६०॥

अन्यच्च ।

**एकस्मिञ्छ्रावणे त्वह्नि तिथीनां त्रितयं यदा ।**
**तदा दिनक्षयःप्रोक्तस्तत्र साहस्रिकं फलम् ॥ ६१ ॥ ३ ॥**

इति वसिष्ठः ।

अर्थ-वशिष्ठने कहा है कि, श्रावणमासमें एक दिनके मध्यमें यदि तीन तिथि होंय तो उसको दिनक्षय ( त्र्यहस्पर्श ) कहते हैं; इस दिनमें माङ्गल्यके इतर वैदिक कर्म करनेसे सहस्रगुण फल प्राप्त होता है ॥ ६१ ॥

---

च दण्डद्वयमेका तिथिरन्या च सप्तपञ्चाशद्दण्टात्मिका तदनन्तरमन्यातिथियोगः अतस्तिथित्रयस्पर्शात् त्र्यहस्पृगीति साम्प्रदायिकाः । वस्तुतस्तु दिनवार इत्यनेन वारप्रवृत्तिकालात् परदिनसूर्योदयावधितिथ्यन्तद्वयस्पर्शेऽवमदिन स्यात् । त्र्यहस्पृग्दिनन्तु अह्नः सूर्योदयकालात् तिथित्रययोगो यदा स्यात्तदा इत्यर्थः । तथाच गौडदेशे सार्द्धैकदण्डाद्दूर्ध्वं वारप्रवृत्तिः । तदनतर परदिनसूर्योदयावधितिथ्यन्तद्वयस्पर्शे तद्दिनमवम स्यात् यथा दण्डत्रयमेका तिथिर्दण्डेकान्या च षट्पञ्चाशद्दण्डात्मिका इति तथा यस्मिन् दिने सूर्योदयाद् वारप्रवृत्तेः पूर्वमेका तिथिर्दण्डेकान्या च सप्तपञ्चाशद्दण्डात्मिका चेत्तस्मिन्नेव दिनेऽन्यतिथियोगः स्यात्तदा त्र्यहःस्पृक् तद्दिन स्यात् । तथा करणरत्नेश्वराचार्येण लिखितम् । " अवमं तद्वारादिन तिथ्यन्तद्वययोगि यत् । त्र्यहस्पर्शन्तु त्रितिथिस्पर्शोद्दीदयिक विदुः " इति । केचित्तु अह्नत्रयस्पर्शादितिपाठ कृत्वा व्याचक्षते अह्नत्रयस्पर्शाद्दिनत्रयस्पर्शात् त्रिदिनस्पृक् तिथिः स्यादिति षष्टिदण्डात्मिकतया वर्द्धमाना या तिथिः सा त्रिदिनस्पृगित्यर्थः।एतच्च सम्प्रदायविरुद्धमाचारविरुद्ध शास्त्रविरुद्धञ्च तथाच शूलपाणिना एकादशीविवेके विष्णुरहस्यवचन लिखितम् । "एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्र्यहस्पृक्तद्दहोरात्रमुपोष्या सा सदा तिथिः । " इति । तथाच राजमार्त्तण्डे-'एकस्मिन् श्रावणे त्वह्नि तिथीनाम् ' इत्यादि । " त्र्यहस्पृग्दिवसश्चैव महापुण्यतमः स्मृतः । तिथित्रयस्य संस्पर्शात्त्र्यहस्पृक्समुदाहृतः ॥ "

( २ ) जो तिथि सूर्योदयके ( वारप्रवृत्तिके ) बाद कुछ समय रहकर यदि परतिथि परदिन सूर्योदयके पूर्वकालपर्यन्त रहे तब उसको ' अवम ' कहते हैं ।

( ३ ) साहस्रिक फलमिति माङ्गल्येतरवैदिककर्मपरमिति स्मार्त्तेनोक्तम् ।

अपरश्च ।

**अधिमासे दिनपाते (४) धनुषि रवौ भानुलंघिते मासि ।**
**चक्रिणि सुप्ते कुर्यान्नो माङ्गल्यं विवाहश्च ॥ ६२ ॥**

इति भीमपराक्रमे ।

अर्थ-भीमपराक्रममें कहा है कि, अधिमासमें, दिनक्षयमें, सौरपौषमें, मलमासमें और श्रीहरिके शयनावस्थामें विवाहादि मङ्गलजनक कार्य न करना चाहिये॥६२॥

**त्र्यहस्पृशन्नाम यदेतदुक्तं यत्र प्रयत्नः कृतिभिर्विधेयः ।**
**विवाहयात्राशुभपुष्टिकर्म सर्वं न कार्यं त्रिदिनस्पृशे तु ॥६३॥(५)**

इति त्र्यहस्पर्शनिन्दा ।

अर्थ-जिस दिनमें त्र्यहस्पर्श कहा गया है, उस दिनमें विवाह और यात्रादि शुभ कर्मको पण्डितगण यत्नपूर्वक परित्याग करदेवें ॥ ६३ ॥

एकादिने सोदराणां विवाहनिषेधः ।

**एकोदरप्रसूतानामेकस्मिन्नपि वासरे । (६)**
**विवाहो नैव कर्त्तव्यो गर्गस्य वचनं यथा ॥ ६४ ॥**

इति बृहस्पतिः ।

अर्थ-बृहस्पतिने कहाहै कि, "गर्ग मुनिके मतसे एक दिनमें एक गर्भसे उत्पन्न सहोदर वा सहोदर गणके मध्यम एकाधिक विवाह निषिद्ध है" गौडादि देशोंमेंभी इसी प्रकारही व्यवहार होता है किन्तु औडिष्यावासीगण उक्त वचनसे "वासरे" इस स्थलमें "वत्सरे" इसी प्रकार पाठ करके एकवर्षके मध्यमें एक गर्भसे उत्पन्न हुए दो भाईयोंका वा दो बहनोंका विवाह नहीं करते हैं ॥ ६४ ॥

अपिच ।

**एकस्मिन्दिवसे चैव सोदराणां तथैव च ।**
**युग्ममौद्वाहिकं वर्ज्यं कन्यादानद्वयं तथा ॥ ६५ ॥**

इति मत्स्यसूक्ते महातंत्रे ।

---

(४) दिनपाते दिनक्षये इति स्मार्त्तः ।

(५) त्र्यहस्पर्शनिन्दामाह-त्र्यहस्पृशमिति । त्र्यहस्पर्शदिन यदुक्तं तत्र पण्डितैः प्रयत्नः कार्ययत्नेन तद्वर्जनीयमित्यर्थः । विवाहादि सर्वं शुभकर्म तत्र न कार्यमित्यर्थः।

(६) वासर इत्यत्र वत्सर इति औड्रदेशीयगणाः पठन्ति व्यवहरन्ति च । इति उद्वाहतत्त्वे स्मार्त्तेनोक्तम् ।

अर्थ-मत्स्यसूक्त महातन्त्रमें भी लिखाहै कि, एक दिनमें दो सगे भाइयोंका विवाह निषिद्ध है और दो कन्या दानभी एक दिनमें न करना चाहिये ॥ ६५ ॥

गुणबाहुल्ये अल्पदोषस्य त्याज्यताकथनम् ।

न सकलगुणसम्पल्लभ्यतेऽल्पैरहोभि-
र्बहुतरगुणयुक्तं योजयेन्मङ्गलेषु ।
प्रभवति हि न दोषो भूरिभावे गुणानां
सलिललव इवाग्नेः संप्रदीप्तेन्धनस्य ॥ ६६ ॥ (×)

अर्थ-समस्तगुण अल्प ( थोडे ) दिनमें नहीं प्राप्त होते हैं अतएव विवाहादि मङ्गलकार्यमें बहु गुणयुक्त दिनका मुहूर्त रक्खे कारण प्रज्वलितकाष्ठ जिस प्रकार जलके बिन्दुसे निवारण होता है तिसी प्रकार बहु गुणयुक्त दिनभी अल्पदोषसे दूषित नहीं होता है ॥ ६६ ॥

बहुगुणसत्त्वे गुरुतरैकदोषस्य निन्दाकथनम् ।

गुणशतमपि दोषः कश्चिदेकोऽतिवृद्धः
क्षपयति यदि नान्यस्तद्विराधी गुणोऽस्ति ।
घट इव परिपूर्णं पञ्चगव्येन सद्यो
मलिनयति सुराया बिन्दुरेकोऽपि सर्वम् ॥ ६७ ॥ (*)

अर्थ-एक बडे दोषसेही सौ गुणोंका नाश होजाता है यदि दोषका विरोधी कोई गुण न होवै, जिस प्रकार पञ्चगव्यसे भराहुआ घट एक बूंदसे शराबके मिलनेसे ही दूषित होजाता है ॥ ६७ ॥

इति वंशबरेलीनिवासिकान्यकुब्जकुलभूषणभारद्वाजगोत्रेण त्रिपाठ्युपनामकेन पण्डितबाँकेलालात्मजेन श्यामसुन्दरशर्मणा सम्पादिते भाषाटीकया विभूषिते च ज्योतिषतत्त्वसुधार्णवे विवाहप्रकरणंनाम द्वितीयस्तरङ्गः॥ २ ॥

---

× उपसंहारमाह-नसकलेति। अल्पदिनैः सर्वे गुणा न लभ्यन्ते तस्माद्विवाहादिमङ्गलकर्मसु बहुगुणयुक्त दिन योजयेत्। हि यस्माद् गुणाना भूरिभावे बहुत्वे दोषो न प्रभवति। दृष्टान्तमाह-सलिललव इति।

(*) बहुगुणे सत्यपि एकस्यापि दोषस्य अतिगुरुत्वे निषेधमाह-गुणशतमिति। एकोऽप्यतिगुरुः कश्चिद्दोषो गुणशतमपि नाशयति यदि तद्दोषविरोधी गुणोऽन्यो नास्ति विरोधिगुणे तिष्ठति सति गुरुदोषोऽपि न दोषावह इति। दृष्टान्तमाह-घटमिति। यथा पञ्चगव्येन पूरित घट सद्यस्तत्क्षणात् सुराबिन्दुर्मलिनयति करणे तृप्त्यर्थयोरिति करणे षष्ठी। एष सर्वो विचारो मुख्यकर्मण्येव विवाहे तु केचित्पाणिग्रहण मुख्य वदन्ति केचि

# तृतीयस्तरङ्गः ३.

अथ नववध्वागमनम् ।

**युग्माङ्कबाणाद्रिदिने विवाहाद्वध्वागमः षोडशवासरान्तः ।**
**शुभस्तदूर्ध्वं विषमाब्दमासघस्रेषु यावन्नच पञ्चमाब्दम् ॥ १ ॥**

अर्थ–अब नववध्वागमन कहते हैं विवाहके बाद सोलह दिनके मध्यमें युग्म दिनमें और अयुग्म दिनके मध्यमें नववें, पांचवें और सातवें दिनमें नववधूको पतिके घरमें लानाचाहिये । सोलह दिनके बाद पांच वर्षके मध्यमें अयुग्म वर्षमें अयुग्म मासमें और अयुग्म दिनमें नववधूको पतिके घरमें लावे ॥ १ ॥

अन्यच्च ।

**आरभ्योद्वाहदिवसात्षष्ठे वाप्यष्टमे दिने ।**
**वधूप्रवेशः सम्पत्त्यै दशमेऽथ समे दिने ॥ २ ॥**

अर्थ–विवाहके दिनसे छठे, आठवें वा दशवें दिनमें अथवा अन्यान्य युग्म दिनमें नववधूको पतिके घरमें लानेसे सम्पत्तिकी वृद्धि होती है ॥ २ ॥

अपरञ्च ।

**वधूप्रवेशनं कार्यं पञ्चमे सप्तमे दिने ।**
**नवमे च शुभे वारे सुलग्ने शशिनो बले ॥ ३ ॥**

अर्थ–विवाहके दिनसे पांचवें, सातवें, वा नववें दिनमें शुभग्रहके वारमें शुभलग्नमें चन्द्र बलवान् होनेसे नववधूको पतिके घरमें लावे ॥ ३ ॥

प्रकारान्तरम् ।

**ध्रुवक्षिप्रमृदुश्रोत्रवसुमूलमघानिले ।**
**वधूप्रवेशः सन्नेष्टो रिक्तारार्के बुधे परैः ॥ ४ ॥**

अर्थ–उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, पुष्य, अश्विनी, हस्त, चित्रा, अनुराधा, मृगशिर, रेवती, श्रवण, धनिष्ठा, मूल, मघा और स्वाति नक्षत्रमें, रिक्ताभिन्न तिथिमें, मङ्गल, इतवार और बुधभिन्न वारमें नववधूको पतिके घरमें लाना चाहिये ॥ ४ ॥

---

क्चान्योऽन्यमुखावलोकनामीति । यथा राजमार्त्तण्डे–" घृतदधिमधुपर्कमाशनादग्निसाक्षाद्यादि शुभमशुभ वा ,पाणियोगेऽङ्गनायाः । बहुमुनिमतमेतत्सम्प्रदान प्रधान ह्युभयवदनचन्द्रालोकनाद्यश्च केचित् " इति । एतेन द्वयमेव शुभलक्षणे कार्यामिति प्रतीम इति ।

अथ बालबन्धः।

**ध्रुवमृदुलघुवर्गे विष्णुमूलानिलर्क्षे**
**शनिशशिदिनवर्ज्यं गोद्विदेहोदयेषु।**
**उपचयगतपापे सत्सु केन्द्रत्रिकोणे**
**सुतिथिकरणयोगे बालबन्धः शुभेन्दौ ॥ ५ ॥ (*)**

अर्थ-विवाहके बाद केशबन्धन शुभदिन कीर्तन करते हैं । उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, चित्रा, अनुराधा, मृगशिर, रेवती, पुष्य, अश्विनी, हस्त, श्रवण, मूल और स्वाति नक्षत्रमें शनि और सोमभिन्न वारमें वृष, मिथुन, कन्या, धन, और मीन लग्नमें, तीसरे, ग्यारहवें, छठे और दशवें स्थानमें स्थित पापग्रह होनेसे लग्नमें, चौथे, सातवें, दशवें, नववें और पांचवें स्थानमें शुभ ग्रह स्थित होनेसे शुभ तिथिमें, शुभ करणमें और शुभयोगमें चन्द्र शुद्ध होनेसे कामिनीके विवाहके बाद प्रथम केशबन्धन करना चाहिये ॥ ५ ॥

अथ द्विरागमनम्।

**वृत्ते पाणिग्रहे गेहात्पितुःपतिगृहं प्रति।**
**पुनरागमनं वध्वास्तद्विरागमनं विदुः ॥ ६ ॥**

इति नारायणपद्धतौ।

अर्थ-अब द्विरागमनका मुहूर्त्त कहते हैं। विवाह होनेके बाद पिताके घरसे वधू पतिके घरमें दूसरीबार जो जातीहै उसकोही पण्डितगण द्विरागमन कहते हैं॥६॥

अपिच-

**श्वश्रूं हन्त्यष्टमे वर्षे श्वशुरञ्च दशाब्दिके।**
**संप्राप्ते द्वादशे वर्षे पतिं हन्ति द्विरागमे ॥ ७ ॥ (१)**

इति कृत्यचिन्तामणौ।

अर्थ-आठवें वर्षमें द्विरागमन होनेसे सासकी मृत्यु होती है इसी प्रकार दशवें

(*) विवाहानन्तर केशबन्धमाह-ध्रुवेति। ध्रुवगणादिनक्षत्रेषु शनिशशिवारौ वर्जयित्वा अन्येषु वारेषु तत्र च रविगुरुकुजवारा अतिप्रशस्ताः यथा राजमार्त्तण्डे " भवति पुग्रहवारे स्त्रीणां खलु बालबन्धने पुरुषः। युवतिग्रहे हि युवती नपुंसके स्यान्नपुंसकोत्पत्तिः "। वृषद्वयात्मकलग्नेषु वृषमिथुनकन्याधनुर्मीनेषु लग्नादुपचयस्थपापे केन्द्रत्रिकोणस्थेषु सद्ग्रहेषु शुभे चन्द्रे शुभतिथिकरणयोगे बालबन्धः कार्यः।

(१) " षष्ठेऽष्टमे द्विदर्शावशचतुष्ये साप्यष्टादशे वसुयुगे च चतुर्दशे वा। वर्षे यदा नववधूगमनञ्च शीघ्रं वेजस्यत गमयानि स्वपानि स्वबन्धुम् " इति ग्रन्थान्तरे।

वर्षमें श्वशुरकी मृत्यु होतीहै और बारहवें वर्षमें द्विरागमन होनेसे पतिकी मृत्यु होती है ॥ ७ ॥

अपरञ्च ।

विवाहमासि प्रथमं वध्वा नागमनं यदि ।
तदा सर्वमिदं चिन्त्यं युग्माद्यब्दं विचक्षणैः ॥ ८ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–विवाह जिस मासमें होताहै उस मासके मध्यमेंही जो बधू पतिके वशमें न आवे तभी पण्डितगणकर्तृक युग्मादि वर्षका विचार करना चाहिये ॥ ८ ॥

अन्यच्च ।

विवाहदिवसाद्यात्रा द्वितीयदिवसे शुभा ।
तन्मासाभ्यन्तरे तस्य चिन्त्यं नैतद्विचक्षणैः ॥ ९ ॥

अर्थ–वचनान्तरमें लिखा है कि, विवाहके दिनसे दूसरे दिनमें यात्रा शुभ होती है और विवाहके एक मासके मध्यमें भी युग्मादिका विचार नहीं होताहै ॥ ९ ॥

प्रकारान्तरञ्च ।

स्त्रीशुद्धचालिघटाजसंयुतरवौ काले विशुद्धे भृगुं
संत्यज्य प्रतिलोमगं शुभदिने यात्राप्रवेशोचिते ।
त्यक्त्वाहस्तु निरंशकंनववधूयात्राप्रवेशे पतिः
कुर्यादेकपुरादिपुप्रतिभृगोर्नेच्छन्ति दोषं बुधाः ॥ १० ॥ (१)

इति दीपिकायाम् ।

अर्थ–दीपिकानामक ग्रन्थमें लिखाहै कि, वधूके चन्द्रताराशुद्धि और कालशुद्धि होनेसे सौर अग्रहायण, फाल्गुन वा वैशाखमासके शुभदिनमें संक्रान्ति और पुरः शुक्रको त्यागकरके यात्रोचित नक्षत्रमें नववधूको यात्रा करावे । पति यदि स्वयं नववध्वागमन करावे तो पुरः शुक्रादिदोषको ग्रहण न करना चाहिये ॥ १० ॥

अपरञ्च ।

पैत्र्यागारे कुचकुसुमयोः संभवो वा यदि स्यात्
कालः शुद्धो न भवति यदा सन्मुखो वापि शुक्रः ।

(१) "भृगौ सन्मुखे संस्थिते वाथ दक्षे न गच्छेन्नवोढा शिशुर्गर्भिणी च । व्रजेदेव वन्ध्या भवेत्सा नवोढा शिशुर्मृत्युमाप्नोत्यगर्भा सगर्भा ॥" इति ग्रन्थान्तरे ।

मेपे कुंभेऽलिनि च न भवेद्भास्करश्चेत्तथापि
स्वामी भद्रेऽहनि नववधूं वेशयेन्मन्दिरं स्वम् ॥ ११ ॥ (२)

इति ज्योतिस्तत्त्वे ।

अर्थ-यदि पिताके घरमें रमणीके दोनों स्तन विकासित होजांय तो कालशुद्धि न होनेसेभी पुरः शुक्रादि दोष न विचार करके शुभ दिनमें उसका स्वामी स्वयं नववधूको अपने घरको लेजाय । वैशाख, फाल्गुन वा अग्रहायण मास न होनेसेभी कोई दोष नहीं होता है ॥ ११ ॥

अपिच ।

भर्तुर्गोचरशोभने दिनपतौ नास्तं गते भार्गवे
हित्वा च प्रतिलोमगौ बुधसितौ जीवस्य शुद्धौ तथा ।
सूर्ये कीटघटाजगे शुभदिने पक्षे च कृष्णेतरे
चानीता गुणशालिनी नववधूर्नित्योत्सवामोदिता ॥ १२ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-पतिके गोचरमें सूर्य और बृहस्पति शुद्ध होनेसे और अग्रहायण, फाल्गुन वा वैशाखमासमें, शुक्लपक्षमें, और शुभदिनमें सर्वदा उत्सवयुक्ता और आमोदान्विता गुणशालिनी भार्याको द्विरागमन करावे, किन्तु शुक्रके अस्त होनेसे अथवा बुध वा शुक्र सम्मुख होनेसे द्विरागमन निषिद्ध होता है ॥ १२ ॥

पुनरपिच ।

एकग्रामे चतुःशाले दुर्भिक्षे राष्ट्रविप्लवे ।
पतिना नीयमानायाः पुरःशुक्रो न दुष्यति ॥ १३ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-सन्मुखमें स्थित शुक्रके प्रतिप्रसव कहते हैं यथा एक ग्राममें वा चतुःशालाके मध्यमें अथवा दुर्भिक्षसमयमें अथवा राजविप्लव होनेमें पति यदि पत्नीको लेजाय तो उसमें सम्मुख शुक्र होनेसेभी दोष नहीं होता है ॥१३ ॥

अन्यच्च ।

काश्यपेषु वसिष्ठेषु भृग्वादित्याङ्गिरःसु च ।
भारद्वाजेषु वात्स्येषु प्रतिशुक्रो न दोषभाक् ॥ १४ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-जिसका काश्यप, वसिष्ठ, भृगु, आदिति, आङ्गिरा, भारद्वाज वा वात्स्य-

(२) "पैत्र्ये गृहे चेत्कुचपुष्पसम्भवः स्त्रीणां न दोषः प्रतिशुक्रसम्भव । भृग्वाङ्गिरोवात्स्यवसिष्ठकश्यपात्रीणां भरद्वाजमुनेः कुले तथा" । इति ग्रन्थान्तरे ।

गोत्र होय उसके गमनकालमें सम्मुखस्थ शुक्र दोषभागी नहीं होता है ॥ १४ ॥

अपरञ्च ।

मार्गफाल्गुनवैशाखे शुक्लपक्षे शुभान्विते ।
गोचरादित्यशुद्धौ च पत्युः शुद्धौ बृहस्पतौ ॥
वध्वा द्विरयनं शस्तं मासेष्वन्येष्वनिष्टदम् ॥ १५ ॥

इति भीमपराक्रमे ।

अर्थ-भीमपराक्रममें द्विरागमनके विषयमें कहा है कि, अग्रहायण फाल्गुन वा वैशाख मासके शुक्लपक्षमें शुभनक्षत्रवारादियुक्त दिनमें वधूके गोचरमें सूर्य शुद्धि और पतिके गोचरमें बृहस्पतिशुद्धि होनेसे नववधूका द्विरागमन शुभ होता है और उक्तमास भिन्न अन्यान्य मासमें द्विरागमन करानेसे अनिष्ट होता है१५॥

प्रकारान्तरञ्च ।

पुष्यादित्यसमीरणादितिवसुष्वप्युत्तरारेवती-
तारानायकरोहिणीषु शुभदे मेषालिकुंभे रवौ ।
वारेष्विज्यसितेन्दुवित्सु शुभदे तारे प्रशस्ते विधौ
कन्यामन्मथमीनतौलिमृगभे स्यादङ्गनाद्यागमः॥ १६॥ (१)

इति प्रचेताः ।

अर्थ-प्रचेताने कहाहै कि, पुष्य, हस्त, स्वाति, पुनर्वसु, धनिष्ठा; उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रेवती, मृगशिर और रोहिणी इन समस्त शुभनक्षत्रोंमें सौर वैशाख, अग्रहायण और फाल्गुनमासमें, बृहस्पति सोम और बुधवारमें, शुभतारामें, चन्द्रशुद्धि होनेसे कन्या, मिथुन मीन मतान्तारमें, कुम्भ, तुला और मकर लग्नमें नववधूका द्विरागमन शुभ होता है ॥ १६ ॥

अन्यच्च ।

पुष्यादित्यसमीरणादितिवसुत्रीण्युत्तराण्याश्विनी-
रोहिण्यः शशलाञ्छनोऽपि शुभदो मेषालिकुम्भे रवौ ।
देवाचार्यसितेन्दुसौम्यदिवसे ताराप्रशस्ते बुधः
कन्यामन्मथमीनभे नववधूयानं मृगे तौलिके ॥ १७ ॥

इति सारसंग्रहे ।

अर्थ-सारसंग्रहनामक ग्रन्थमें लिखाहै कि-पुष्य, हस्त, स्वाति, पुनर्वसु,

(१) " तौलिकुम्भे मृगभे " इति पाठान्तरम् ।

धनिष्ठा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, अश्विनी, रोहिणी और मृगशिर इन नक्षत्रोंमें, सौर वैशाख, अग्रहायण वा फाल्गुनमासमें बृहस्पति, शुक्र, सोम और बुधवारमें ताराशुद्धि होनेसे कन्या, मिथुन, मीन, मकर और तुला लग्नमें नववधूका द्विरागमन प्रशस्त है ॥ १७ ॥

अपरञ्च ।

वृद्धे चास्तमिते शिशौ भृगुसुते चन्द्रे च सूर्ये स्थिते
वक्रे चापि गुरौ तथातिचरिते लुप्ते च संवत्सरे ।
वर्षे द्वादशके गुरौ हरिगृहे पक्षे च शुक्लेतरे
आनीता श्रमकांक्षिणी नववधूरत्यन्तदुःखप्रदा ॥ १८ ॥

इति पराशरः ।

अर्थ–शुक्रके वार्द्धक्य, अस्त वा बाल्यावस्थामें चन्द्र और सूर्य एक राशिमें स्थित होनेसे, बृहस्पति सिंहराशिमें स्थित वक्री, अतिचारी वा महातिचारी होनेसे, कृष्णपक्षमें द्वादशवर्षवयस्का, नववधूका द्विरागमन करनेसे वह अत्यन्त दुःखदायिनी होतीहै । इस प्रकार पराशरने कहाहै ॥ १८ ॥

प्रकारान्तरञ्च ।

ओजोऽब्देऽलिघटाजगे दिनकरे गुर्वर्कचन्द्रे शुभे
कन्यामन्मथतौलिमीनमृगभे युक्तेक्षिते सद्ग्रहैः ।
देवाचार्यसितेन्दुसौम्यदिवसे पक्षे च कृष्णेतरे
मूलक्षिप्रचरध्रुवेषु मृदुभे वध्वा द्वितीयागमः ॥ १९ ॥

इति ग्रन्थान्तरे ।

अर्थ–अब ग्रन्थान्तरकी रीतिसे द्विरागमनका शुभ दिन कहते हैं, अयुग्मवर्षमें सौर अग्रहायण, फाल्गुन और वैशाख मासमें बृहस्पति, सूर्य और चन्द्र शुद्ध होनेसे कन्या, मिथुन, तुला, मीन और मकरलग्न शुभग्रहयुक्त वा शुभग्रहकी दृष्टि होनेसे, बृहस्पति शुक्र, सोम और बुधवारमें शुक्लपक्षमें, मूल, पुष्य, अश्विनी, हस्त, स्वाति, पुनर्वसु, श्रवण, धनिष्ठा, शतभिषा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, चित्रा, अनुराधा, मृगशिर और रेवती इन नक्षत्रोंमें नववधूका द्विरागमन प्रशस्त है ॥ १९ ॥

अथ द्विरागमने प्रशस्ततिथिकथनम् ।

द्वितीया तृतीया चैव पञ्चमी सप्तमी तथा ।

**दशम्येकादशी प्रोक्ता त्रयोदशी शुभा तथा ॥ २० ॥**

अर्थ-द्वितीया, तृतीया, पञ्चमी, सप्तमी, दशमी, एकादशी और त्रयोदशी तिथि द्विरागमनमें प्रशस्त हैं ॥ २० ॥

अथ निषिद्धतिथिकथनम् ।

**नाष्टम्यां न च रिक्तायां नाद्यषष्ठी च पूर्णिमा ।**
**द्वादशी चाशुभा ज्ञेया द्विरागमनकर्मसु ॥ २१ ॥ (*)**

अर्थ-अष्टमी, रिक्ता ( चतुर्थी, नवमी और चतुर्दशी ) प्रतिपदा, षष्ठी, पूर्णिमा और द्वादशी तिथि द्विरागमनमें अप्रशस्त हैं ॥ २१ ॥

अथ पितृगृहे भोजनानन्तरं पतिगृहे भोजननिषेधः ।

**भुक्त्वा पितृगृहे कन्या भुङ्क्ते स्वामिगृहे यदि ।**
**दौर्भाग्यं जायते तस्याः शपन्ति कुलदेवताः ॥ २२ ॥**

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ-विवाहिता कन्या पिताके घरमें भोजन करके यदि पुनः ( फिर ) पतिके घरमें भोजन करे तब दुर्भाग्यवती होतीहै और कुलदेवता उसको शापदेते हैं॥२२॥

अथाद्यरजोदर्शने शुभाशुभवारादिकथनम् ।

**आदित्ये विधवा नारी सोमे चैव पतिव्रता ।**
**वेश्या मङ्गलवारे च बुधे सौभाग्यमेव च ॥ २३ ॥**
**बृहस्पतौ पतिः श्रीमाञ्छुक्रे पुत्रवती भवेत् ।**
**शनौ वन्ध्यां विजानीयात्प्रथमं स्त्री रजस्वला ॥ २४ ॥**

इति नारायणपद्धतौ ।

अर्थ-अब प्रथम रजोदर्शनका फल वर्णन करते हैं । रविवार ( इतवार ) में स्त्रीको प्रथम रजोदर्शन होनेसे वह स्त्री विधवा होजातीहै. इसी प्रकार सोमवारमें पतिव्रता, मङ्गलवारमें वेश्या और बुधवारमें सौभाग्यवती होती है. बृहस्पतिवारमें प्रथम रजस्वला होनेसे उसका पति अत्यन्त धनाढ्य होताहै, शुक्रवारमें प्रथम रजोदर्शन होनेसे वह नारी पुत्रवती होती है और शनिवारमें प्रथम रजस्वला होनेसे वन्ध्यात्व प्राप्त होता है ॥ २३ ॥ २४ ॥

अथ मासकथनम् ।

**ज्येष्ठे स्याद्विधवा नारी आषाढे बन्धुनाशिनी ।**

(*) मासदग्धाविवाहप्रकरणे विलिखिता विष्टिभद्रा च सामान्यकाण्डे लिखिता दिग्दग्धा यात्राप्रकरणे वक्ष्यामि । एता ग्रहणीयाः ।

श्रावणे च मृतापत्या भाद्रे च बहुरोगिणी ।
आश्विने च मृतापत्या कार्त्तिके कुलनाशिनी ॥ २५ ॥
मार्गशीर्षे धर्मशीला पौषे च रतिविह्वला ॥ २६ ॥
माघे पतिव्रता नारी फाल्गुने बहुपुत्रिणी ।
चैत्रे च मदनोन्मत्ता वैशाखे प्रियवादिनी ॥ २७ ॥ (*)

इति ज्योतिर्निबन्धे ।

अर्थ–ज्येष्ठमासमें प्रथम रजस्वला होनेसे वह नारी विधवा होती है• इसी प्रकार आषाढमें बन्धुनाशिनी, श्रावणमें मृतवत्सा, भाद्रपदमें रोगिणी, अश्विनमें मृतवत्सा, कार्तिकमें कुलक्षयकारिणी, अग्रहायणमें धर्मपरायणा, पौषमें मदनोन्मत्ता, माघमें पतिव्रता, फाल्गुनमें बहुपुत्रवती, चैत्रमें कामुकी और वैशाखमासमें प्रथमवार रजस्वला होनेसे वह नारी प्रियभाषिणी होतीहै ॥ २५ ॥ २६ ॥ २७ ॥

अथ तिथिकथनम् ।

प्रतिपत्सुभगां नारीं द्वितीया वातुलां प्रियाम् ।
तृतीया क्षेममारोग्यं चतुर्थी पतिवल्लभाम् ॥ २८ ॥
पञ्चमी सुभगां नारीं षष्ठी पररताञ्चरेत् ।
सप्तमी श्रीयुतां नारीमष्टमी पतिरोगिणीम् ॥ २९ ॥
नवमी विधवां नारीं दशमी च सुपुत्रिणीम् ।
एकादशी मृतवत्सां द्वादशी परगामिनीम् ॥ ३० ॥
त्रयोदशी चार्थपुत्रा चञ्चलाञ्च चतुर्दशी ।
नष्टेन्दुः कुरुते मृत्युं पौर्णमासी च सम्पदः ॥ ३१ ॥

अर्थ–स्त्रियोंके प्रथमवार रजस्वला होनेमें तिथिफल कहते हैं। प्रतिपदा तिथिमें प्रथमवार स्त्री रजस्वला होनेसे सुभगा होती है, इसी प्रकार द्वितीयामें वातुला, तृतीयामें मङ्गल और आरोग्यलाभ, चतुर्थीमें पतिकी प्यारी, पञ्चमीमें सुभगा, षष्ठीमें परपुरुषमें प्रीति रखनेवाली, सप्तमीमें धनशालिनी, अष्टमीमें पतिको रोग, नवमीमें विधवा, दशमीमें पुत्रवती, एकादशीमें मृतवत्सा, द्वादशीमें परपुरुषगामिनी, त्रयो-

(*) " सन्ध्याद्वये तथा रात्रौ पित्रगारे परालये । विष्टौ तथैव सङ्क्रान्त्या ग्रहणे चन्द्रसूर्ययोः । कृष्णपक्षे चाशुभं स्यान्नारीणां प्रथमं रजः ॥ " इति सन्ध्यादौ आद्यर्तुफलम् ।

दशीमें धन और पुत्रयुक्ता,चतुर्दशीमें चञ्चला और अमावास्यामें मृत्यु होती है और पूर्णमासी तिथिमें प्रथमवार रजस्वला होनेसे सम्पत्तिलाभ होताहै॥२८-३१॥

अन्यच्च ।

द्वितीया पञ्चमी चैव तृतीया दशमी तथा ।
प्रथमे रजसि स्त्रीणां शुभाश्चान्येऽधमाः स्मृताः ।
अमारिक्ताष्टमीषष्ठीद्वादशीप्रतिपत्स्वपि ॥ ३२ ॥ ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमें लिखाहै कि, द्वितीया, पञ्चमी, तृतीया और दशमी तिथिमें प्रथमवार रजस्वला होनेसे शुभ होताहै, और अमावस्या, रिक्ता, अष्टमी, षष्ठी, द्वादशी और प्रतिपदा तिथिमें प्रथमवार रजस्वला होनेसे अशुभ होताहै ॥ ३२ ॥

अथ योगादिकथनम् ।

परिघस्य तु पूर्वार्द्धे व्यतीपाते च वैधृतौ ॥
सन्ध्या सूपप्लवे विद्यादशुभं प्रथमार्त्तवम् ॥ ३३ ॥ ( * )

अर्थ-अब योगका फल वर्णन करते हैं । परिघ योगके पूर्वार्द्धमें, व्यतीपातमें, वैधृतियोगमें, सन्ध्याकालमें और ग्रहणसमयमें प्रथमवार रजस्वला होनेसे अशुभ फल होताहै ॥ ३३ ॥

अन्यच्च ।

विष्कम्भे दुर्भगा नारी वन्ध्या स्यादतिगण्डके ।
शूले शूलान्विता गण्डे वज्रे वेश्या भवेद्ध्रुवम् ॥ ३४ ॥
व्यतीपाते वैधृतौ च पतिघ्नी नात्र संशयः ।
परिघे स्यान्मृतापत्या व्याघाते चात्मघातिनी ।
शेषा यथानामफला नारीणां प्रथमार्त्तवे ॥ ३५ ॥

अर्थ-विष्कम्भयोगमें प्रथमवार रजस्वला होनेसे वह स्त्री दुर्भगा होती है. इसी प्रकार अतिगण्डयोगमें वन्ध्या, शूलयोगमें शूल रोगान्विता गण्ड और वज्र योगमें वेश्या,व्यतीपात और वैधृति योगमें स्वामिघातिनी, परिघयोगमें मृतपुत्रा और व्याघातयोगमें प्रथमवार रजस्वला होनेसे आत्मघातिनी होती है; अन्यान्य-योगमें नामकेसे माने फल होताहै ॥ ३४ ॥ ३५ ॥

( * ) मार्गफाल्गुनवैशाखे ज्येष्ठे च श्रावणे तथा । माघे कृष्णेतरे पक्षे स्त्रीणामादिरजःशुभम् । कृष्णपक्षे तु दशमी मध्यमं फलमादिशेत् ॥ इति कस्मिंश्चिद्ग्रन्थे ।

अथ नक्षत्रकथनम् ।

पूर्वात्रये याम्यभुजङ्गरौद्रे
वैधव्यमस्या विदधाति नूनम् ।
मघे सशोकाप्यथ भेऽदितीशे
सा बन्धकीन्द्रानलभे दरिद्रा ॥ ३६ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, भरणी, आश्लेषा और आर्द्रा नक्षत्रमें प्रथमवार स्त्री रजस्वला होनेमें निश्चयही विधवा होती है, इसी प्रकार मघानक्षत्रमें शोक होता है, पुनर्वसु नक्षत्रमें जारिणी होती है और ज्येष्ठा और कृत्तिका नक्षत्रमें प्रथम वार रजस्वला होनेसे नारी दरिद्रा होती है ॥ ३६ ॥

पुष्पं दृष्टं निन्दिते भे यदि स्या-
(*) च्छान्तिं कुर्यादङ्गनानाञ्च पूर्वम् ।
तत्संयोगं बान्धवा वर्जयेयु-
र्यावद्भूयो दृश्यते शस्तभे तत् ॥ ३७ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ--निन्दित नक्षत्रमें यदि प्रथमवार नारी रजस्वला होय तब उस नारीके लिये शान्ति करनी चाहिये और जबतक शुभ नक्षत्रमें दूसरीवार रजस्वला न होय तबतक बान्धवगण उस स्त्रीके साथ स्पर्शादि सम्बन्धको परित्याग करदेवें ॥ ३७ ॥

कृत्तिकादीनि ऋक्षाणि दिक्ष्वष्टसु लिखेद्बुधः ।
चत्वारि दिक्षु ऋक्षाणि कोणेषु च त्रयं लिखेत् ॥ ३८ ॥
पूर्वादिक्रमतो लब्धं फलं तेनैव निर्दिशेत् ।
श्रीर्वन्ध्या सुभगा चैव विपुत्रा पुत्रिणी तथा ॥ ३९ ॥

इति ग्रन्थान्तरे ।

विधवा सर्वसम्पन्ना वेश्या चेति क्रमात्फलम् ।

(*) " मासदोषे गुड तैल वारदोषे च तण्डुलम् । नक्षत्रे च मणिं दद्याद्योगे च तिलकाञ्चनम् । तिथिदोषे मणिं दद्यात्करणे काञ्चनं तथा । लग्नदोषे वृषं दद्यात्प्रथमे स्त्री रजस्वला ॥ "

**आद्ये रजसि सम्भूते स्त्रीणामृक्षफलंभवेत् ॥ ४० ॥ (x)**

इति ज्योतिस्तत्वे ।

अर्थ-एक दिक्चक्र अङ्कित करके उसमें कृत्तिकादिकरके नक्षत्रांक आठों दिशामें स्थापन करै । चारों दिशामें चार २ नक्षत्र और चतुष्कोणमें तीन २ नक्षत्रांक अंकित करना चाहिये । कृत्तिकादि नक्षत्र पूर्वादिक्रमसे लिखे फलभी इसी प्रकार जानना चाहिये अर्थात् पूर्वदिशाके नक्षत्रोंके मध्यमें प्रथम वार रजस्वला होनेसे श्रीयुक्ता होती है, इसी प्रकार अग्निकोणमें होनेसे वन्ध्या दक्षिणमें सौभाग्यवती, नैर्ऋतमें पुत्रहीना, पश्चिममें पुत्रवती, वायुकोणमें विधवा, उत्तरमें सर्वसम्पन्ना और ईशान कोणस्थित नक्षत्रोंकाक मध्यमें प्रथमवार नारी रजस्वला होनेसे वेश्या होती है । स्त्रियोंके प्रथमवार रजस्वला होनेमें नक्षत्रोंका फल इस प्रकारसे कहागया । आगे दिक्चक्र स्पष्ट लिखा है जिसके देखनेसेही पाठकगणको अनायासमें ज्ञात होजायगा ॥ ३८-४० ॥ इति नक्षत्रकथनम् ।

अथ दिक्चक्रम् ।

| | | |
|---|---|---|
| ई॰<br>रे. अ. भ | पू॰<br>कृ. रो. मृग. आ. | अ॰<br>पुन. पु ऽश्ले. |
| उ॰<br>ध श.पू.भा.उ-भा. | अथ दिक्चक्रम्. | द॰<br>म.पू फा.उ फा.<br>ह॰ |
| वा॰<br>उ-षा. ऽभि श्र. | प॰<br>अनु. ज्ये मू पू-षा. | न॰<br>चि स्वा वि. |

अथ गर्भाधानम् ।

तत्रादौ पञ्चपर्वनिरूपणम्।

**चतुर्दश्यष्टमी चैव अमावस्याथ पूर्णिमा ।**

(x) अश्विन्यादिक्रमेण नक्षत्रफलम्। " सुभगा चनदुःशीला वन्ध्या पुत्रसमन्विता। धर्मयुक्ता व्रतन्नी च परसन्तानमोहिनी । सुपुत्रा चैव दुष्पुत्रा पितृवेश्मरतामता । दीना प्रजावती चैव पुत्राढ्या चित्रकारिणी । साध्वी पतिप्रिया नित्य सुपुत्रा नष्टचारिणी । स्वकर्माणि रता हिंस्रा पुण्यपुत्रादिसंयुता ।- नित्य धनचयासक्ता सुपुत्रा धान्यसयुता । मूर्खा चाज्ञा पुण्यशीलेत्यृक्षादेः क्रमात्फलम् ॥ " इति ग्रन्थान्तरे ।

पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥ ४१ ॥
स्त्रीतैलमांसभोगी च पर्वस्वेतेषु वै पुमान् ।
विण्मूत्रभोजनं नाम प्रयाति नरकं ध्रुवम् ॥ ४२ ॥

इति विष्णुपुराणे ।

अर्थ-अब पञ्चपर्व वर्णन करते हैं । विष्णुपुराणमें लिखा है कि, चतुर्दशी, अष्टमी, अमावस्या, पूर्णिमा और रविसंक्रान्तिको पञ्चपर्व कहते हैं इनमें जो मनुष्य स्त्रीसम्भोग तैलाभ्यङ्ग, वा मांसभोजन करता है, वह मनुष्य विण्मूत्रभोजननामक नरकमें निश्चयही वास करता है ॥ ४१ ॥ ४२ ॥

अन्यच्च ।

कुहूपूर्णेन्दुसंक्रान्तिचतुर्दश्यष्टमीषु च ।
नरश्चाण्डालयोनिःस्यात्तैलस्त्रीमांससेवनात् ॥ ४३ ॥ (*)

इति सारसंग्रहे ।

अर्थ-सारसंग्रहमें लिखा है कि; अमावस्या, पूर्णिमा, संक्रान्ति, चतुर्दशी और अष्टमी तिथियोंमें मनुष्य तैलव्यवहार, स्त्रीसङ्ग, वा मांसभोजन करनेसे चाण्डालयोनिमें प्राप्त होता है अतएव उक्त समस्त निषिद्ध दिनमें स्त्रीसेवनादि न करना चाहिये ॥ ४३ ॥

अथ निषेककालकथनम् ।

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुद्ध्यति ॥ ४४ ॥

अर्थ-रजस्वला स्त्री प्रथम दिनमें चण्डालिनीके समान होती है द्वितीयदिनमें ब्रह्मघातिनिके समान होती है और तृतीय दिनमें रजकिनी (धोबिन) के समान अस्पृश्या रहकर चतुर्थ दिनमें शुद्ध होती है ॥ ४४ ॥

रात्रं दिनं परित्यज्य यावद्वहति शोणितम् ।
तावदेव ऋतुः स्त्रीणां रात्रयः षोडशः स्मृताः ॥ ४५ ॥

अर्थ-स्त्रियोंके रजस्वला होनेकी अवधि सोलह रात्रिके मध्यमें प्रथम तीन दिन परित्याग करके ऋतुकाल जानना चाहिये ॥ ४५ ॥

(*) " पूर्णासु योषित्परिवर्जनीया " । इति नरपतिजयचर्यास्वरोदये वामनपुराणम् । " बुधे च योषां न समाचरेत " इति । " योषिन्मृगा तृप्तिरमूत्तमासु " । इति रत्नमालायाम् ।

चतुर्थे जायते पुत्रः स्वल्पायुर्गुणवर्जितः ।
विद्याधर्मपरिभ्रष्टो दरिद्रः क्लेशभोजनः ॥ ४६ ॥

अर्थ-रजस्वला स्त्री चौथे दिनमें स्नान करके पतिके साथ वास करसक्ती है, किन्तु उक्त दिनमें गर्भ धारण करके पुत्रप्रसव करनेसे वह पुत्र अल्पायुविशिष्ट, गुणहीन, मूर्ख, अधर्माचारी, दरिद्र होता है और उसको क्लेशकर भोजन प्राप्त होता है ॥ ४६ ॥

पञ्चमे जायते कन्या दुर्भगा नित्यदुःखिता ।
स्वल्पायुरसती वेश्या कुरूपा विधवा स्मृता ॥ ४७ ॥

अर्थ-पांचवें दिन गर्भधारण करनेसे कन्या होती है, वह कन्या दुर्भगा, चिर-दुःखिनी अल्पायुविशिष्टा, असती, वेश्या, कुरूपा और विधवा होती है ॥ ४७ ॥

षष्ठे च जायते पुत्रो न दोषी न गुणी तथा ।
मूर्खो दुःखी कुरूपश्च धनसन्ततिवर्जितः ॥ ४८ ॥

अर्थ-छठे दिनमें गर्भ धारण करनेसे पुत्र होताहै, वह पुत्र दोषहीन, निर्गुण मूर्ख, दुःखभागी, कुरूप, धनहीन, और निःसन्तान होता है ॥ ४८ ॥

सप्तमे जायते कन्या दुःखिनी नायिका भवेत् ।
जीवन्ती सा मृता लोके धनधान्यविवर्जिता ॥ ४९ ॥

अर्थ-सातवें दिन गर्भ धारण करनेसे कन्या उत्पन्न होती है वह कन्या दरि-द्रकी स्त्री और जीवन्मृताके समान धनधान्यसे हीना होती है ॥ ४९ ॥

अष्टमे जायते पुत्रः पितुर्वित्तविनाशकः ।
व्याधितो दुर्मुखश्चैव प्रायो निष्ठुरमानसः ॥ ५० ॥

अर्थ-आठवें दिन गर्भ धारण करनेसे पुत्र होता है, वह पुत्र पिताके धनका नाश करनेवाला, व्याधियोंसे युक्त, दुर्मुख और निर्दय होताहै ॥ ५० ॥

नवमे जायते कन्या मेधायुःपुत्रसंयुता ।
लक्ष्मीसमा भवेन्नारी स्वामिनो हितकारिणी ॥ ५१ ॥

अर्थ-नवें दिन गर्भ धारण करनेसे कन्या होती है, वह कन्या मेधाविनी, दीर्घायुयुक्ता, पुत्रवती, लक्ष्मीके समान और पतिके हितकारिणी होती है ॥५१॥

दशमे जायते पुत्रो धनधान्यमहेश्वरः ।
भाग्यवान्नकुशो विद्यामेधायुःपुत्रसंयुतः ॥ ५२ ॥

अर्थ-दशवें दिन गर्भ धारण करनेसे पुत्र होता है, वह पुत्र धनधान्यका स्वामी, भाग्यवान, अत्यन्त विद्वान् मेधायुक्त और पुत्रवान् होता है ॥ ५२ ॥

रुद्रे च जायते कन्या कुलद्वयमनोहरा ।
सती पुत्रवती साध्वी धर्मकर्महितैषिणी ॥ ५३ ॥

अर्थ-ग्यारहवें दिन गर्भ धारण करनेसे कन्या होती है. वह कन्या दोनों कुलोंको उज्वल करती है और सती, पुत्रवती, साध्वी और धर्मकर्ममें प्रीति रखनेवाली होती है ॥ ५३ ॥

द्वादशे जायते पुत्रो यशोविद्यादयान्वितः ।
धनी सुपुत्रयुक्तश्च मतिमाँल्लोकपालकः ॥ ५४ ॥

अर्थ-बारहवें दिन गर्भ धारण करनेसे पुत्र होता है, वह पुत्र यशस्वी, विद्वान् दयाशील, धनी, सुपुत्रान्वित, बुद्धिमान और लोकपालक होताहै ॥ ५४ ॥

त्रयोदशे च कन्या स्यात्कुलद्वयमनोहरा ।
साध्वी पुत्रवती धन्या धर्मलोकनिवासिनी ॥ ५५ ॥

अर्थ-तेरहवें दिन गर्भ धारण करनेसे कन्या होतीहै वह कन्या दोनों कुलके उज्ज्वल करनेवाली, साध्वी, पुत्रवती और प्रशसनीया होकर धर्मलोकमें वास करती है ॥ ५५ ॥

चतुर्दशे तु पुत्रः स्याद्बलवान्नृपसन्निभः ।
शुद्धवीर्ययशोराशिर्मेधालक्ष्मीसमन्वितः ॥ ५६ ॥

अर्थ-चौदहवें दिन गर्भ धारणकरनेसे पुत्र होता है, वह पुत्र बलवान् राजाके समान, यशस्वी, मेधावी और लक्ष्मीयुक्त होता है ॥ ५६ ॥

भवेत्पञ्चदशे कन्या भूपानां कण्ठधारिणी ।
अर्द्धप्राणहरा पत्युः सती धर्मपरायणा ॥ ५७ ॥

अर्थ-पन्द्रहवें दिन गर्भ धारणकरनेसे कन्या होती है वह भूपालप्रणयिनी, स्वामीकी अर्द्धाङ्गरूपा सती और धर्मपरायणा होती है ॥ ५७ ॥

धर्मज्ञश्च कृतज्ञश्च समयज्ञो महीपतिः ।
षोडशे जायते पुत्रः सत्यवादी जितेन्द्रियः ॥ ५८ ॥ (*)

इति सारसंग्रहधृतवचनानि ॥

अर्थ-सोलहमें दिन गर्भधारण करनेसे पुत्र होता है. वह पुत्र धर्मज्ञ, कृतज्ञ,

(*) इत्यादिवचनानुसारेण ऋतुकालावधिषोडशदिनमध्ये दशमे द्वादशे चतुर्दशे षोडशे वा निषेकः कर्त्तव्यः ॥ इति ।

भूपति, सत्यवादी और जितेन्द्रिय होता है ॥ ५८ ॥

अथ गर्भाधाने युग्मायुग्मादिनव्यवस्था ।

षोडशर्तुनिशाः स्त्रीणां तासु युग्मासु संविशेत् ॥ ५९ ॥

इति याज्ञवल्क्यः ।

अर्थ-भगवान् याज्ञवल्क्यने कहा है कि, स्त्रियोंके ऋतुकालका समय सोलह रात्रितक होता है तिनके मध्यमें युग्म रात्रियोंमें निषेक करना चाहिये ॥ ५९ ॥

अन्यच्च ।

स्त्रीणामृतुर्भवति षोडशवासराणि
तत्रादितः परिहरेच्च निशाश्च तिस्रः ।
युग्मासु रात्रिषु नरा विषमासु नार्यः
कुर्यान्निषेकमथ तास्वपि पर्व वर्ज्यम् ॥ ६० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-स्त्रियोंके ऋतुकालका समय सोलह दिनतक होता है, तिनके मध्यमें प्रथमके तीन दिन परित्याग करके अन्य तेरह दिनके मध्यमें रजोदर्शनावधि युग्मरात्रिमें गर्भधारण करनेसे पुत्र और अयुग्म रात्रिमें कन्या उत्पन्न होती है अतएव युग्म रात्रियोंमें निषेक करना चाहिये किन्तु पञ्चपर्वको परित्याग करदेवे ॥ ६० ॥

अपरञ्च ।

एवं गच्छेत्स्त्रियं क्षामां मघां मूलञ्च वर्जयेत् ।
शस्त इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ॥ ६१ ॥

इति याज्ञवल्क्यः ।

अर्थ-मूल और मघा नक्षत्रको छोडकर शुभ चन्द्रमें आहारलाघवादिद्वारा क्षीणा स्त्रीमें गमन करनेसे उत्तम लक्षणाक्रान्त पुत्र उत्पन्न होताहै ॥ ६१ ॥

प्रकारान्तरञ्च ।

युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ।
तस्माद्युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम् ॥ ६२ ॥

इति याज्ञवल्क्यः ।

अर्थ-याज्ञवल्क्यने कहा है कि, युग्मरात्रिमें पुत्र और अयुग्म रात्रिमें कन्या उत्पन्न होतीहै अतएव पुत्रार्थी मनुष्यको युग्म रात्रिमेंही स्त्रीगमन करना चाहिये ॥ ६२ ॥

आपिच ।

**पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः ॥ ६३ ॥**

इति मनुः ।

अर्थ-भगवान् मनुजीने कहाहै कि, पुरुषके शुक्र ( वीर्य ) अधिक होनेसे पुत्र और स्त्रीके शोणित अधिक होनेसे कन्या उत्पन्न होतीहै ॥ ६३ ॥

अन्यच्च ।

**युग्मायामपि रात्रौ चेच्छोणितं प्रचुरं तदा ।**
**कन्या पुंवद्भवति शुक्राधिक्ये पुमान्भवेत् ॥ ६४ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-युग्मरात्रिमेंभी यदि स्त्रीका शोणित अधिक होय तब पुरुषचरित्रा कन्या उत्पन्न होतीहै और पुरुषका शुक्र ( वीर्य ) अधिक होनेसे पुत्र उत्पन्न होताहै।६४।

अपरश्च ।

**पीडाराशौ भौमदृष्टे शशाङ्के मासं मासं योषितामार्त्तवं स्यात् ।**
**त्र्यंशे शान्तं यच्च रक्तं जपाभं तद्गर्भार्थे वेदनागन्धहीनम् ६५॥ (*)**

अर्थ-अनुपचयराशिमें स्थित चन्द्रग्रहपर मङ्गलकी दृष्टि होनेसे प्रतिमासमें स्त्रियोंकी जो रज उत्पन्न होती है, और जो शोणित तीन दिनमेंही उसके समान होजाय और जिस शोणितका वर्ण जपापुष्पके समान और वेदनागन्धादिविहीन होय तो उसमें निषेक करनेसे गर्भका सञ्चार होताहै ॥ ६५ ॥

प्रकारान्तरञ्च ।

**मासेशाः सितकुजगुरुरविशशिशनिसौम्यलग्नपशशीनः ।**

---

(*) ऋतुनिरूपणमाह-पीडेति । कुजदृष्टे चन्द्रे प्रतिमासं स्त्रीणामृतुर्भवति । यथा सारावल्याम् । "इन्दुर्जलं कुजोऽग्निर्जलमिश्रस्त्वग्निरेव पित्तं स्यात् । एवं क्षुभिते पित्तेतेन रजः प्रवर्त्तते स्त्रीषु ॥ " अत्र च बालां वृद्धातुरां वन्ध्यां वर्जयित्वा तु योषितं पीडाराशौ अनुपचयराशौ गते चन्द्रे भौमदृष्टे मासमासं यदार्त्तवं रजो भवति तद्रजो गर्भार्थे गर्भक्षमं स्यात् यच्च रक्तं त्र्यशे दिनत्रये शान्तं जपाभम् ओंड्रपुष्पसदृशवर्णं वेदनाहीनं गन्धहीनञ्च तच्च रजो गर्भक्षमं स्यादित्यर्थः । यथा सारावल्याम् " अनुपचयराशिसंस्थे कुमुदाकरबान्धवे रुधिरदृष्टे । प्रतिमासं युवतीनां भवति रजो जगुर्मुनयः । एवं यद्भवति रजो गर्भस्य निमित्तमेव कथितन्तु तत् । उपचयसंस्थे विफलं प्रतिमासं दर्शनं तस्य " इति । एतेन पीडाराशौ गोचरदृष्टे चन्द्रे इत्यशुद्धमेव प्रलपितं सौभरिणेति ।

कलुषैःपीडागर्भस्य पीडितैः पतनमन्यथा पुष्टिः ॥ ६६ ॥ ( • )

अर्थ-गर्भमासाधिपतिद्वारा गर्भका शुभाशुभ कहते हैं-गर्भधारणसे प्रसवकालपर्यन्त दशमासके स्वामी क्रमानुसार शुक्र, मङ्गल, बृहस्पति, रवि, चन्द्र, शनि, बुध, निषेककालकी लग्नके स्वामी चन्द्र और सूर्य कहते हैं, अर्थात् प्रथम मासका स्वामी शुक्र, द्वितीयमासका स्वामी मङ्गल, तीसरे मासका स्वामी बृहस्पति, चौथे मासका स्वामी सूर्य, पांचवें मासका स्वामी चन्द्र, छठे मासका स्वामी शनि, सातवें मासका स्वामी बुध, आठवें मासका स्वामी निषेकलग्नाधिपति, नववें मासका स्वामी चन्द्र और दशवें महीनेका स्वामी सूर्य ग्रह होताहै, उक्त समस्त मासके स्वामी ग्रहोंके मध्यमें कोई ग्रह पापयुक्त होय तो सौम्यमासमें गर्भकी पीडा होतीहै, और यदि कोई ग्रह अस्तादि त्रिविधोत्पात वा उपरागादिद्वारा पीडित होय- तब उसी मासमें गर्भपात होजानेकी आशङ्का होती है और यदि कोई ग्रह शुभग्रह युक्त हो वा किसी ग्रहपर शुभग्रहकी दृष्टि होय तो गर्भ पुष्ट होकर शुभ होता है ॥ ६६ ॥

प्रशस्ताप्रशस्तनक्षत्रकथनम् ।

पुंनक्षत्राणिचैतानितिष्योहस्तःपुनर्वसुः ।
अभिजित्प्रौष्ठपाचैवानुराधापाढश्चाश्वयुक् ॥ ६७ ॥

इति वशिष्ठः ।

अर्थ-वशिष्ठने कहाहै कि, पुष्य, हस्त, पुनर्वसु, अभिजित, अनुराधा, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा और अश्विनी इनको पुंनक्षत्र कहतेहैं ॥ ६७॥

अपिच-

हस्तो मूलं श्रवणः पुनर्वसुमृगशिरस्तथा पुष्यश्च ।
गर्भाधानादिकार्येषु पुंन्नामायं गुणः शुभदः ॥ ६८ ॥

इति ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमें लिखाहै कि; हस्त, मूल, श्रवण, पुनर्वसु, मृगशिर और पुष्य इन पुंसंज्ञक नक्षत्रोंमें गर्भाधानादिकार्य करनेमे शुभफल प्राप्त होताहै॥६८॥

( • ) मासनाथैर्गर्भस्य शुभाशुभमाह-मासेशैरिति । यथाक्रम गर्भाधानात्प्रभृति दशमासानामधिपैः सितादिभिः कलुषैः पापग्रहयुक्तैर्गर्भस्य पीडा स्यात्तैश्च पीडितैःअस्तत्वादित्रिविधोत्पातोपरागादिहतैर्गर्भस्य पातः स्यात् अन्यथा शुभग्रहयोगे शुभदृष्टे गर्भस्य पुष्टिः स्यादित्यर्थः । तथा च देवजनवल्लभायाम्-" एते यदा शत्रुगृहे वसन्ति युद्धे जिता शत्रुभिरस्तगा वा ॥ अन्यत्र वा पीडितदेहभाजो गर्भस्य पाताय भवन्ति रोटाः ॥ " तथा सारावल्याम् " उत्पातग्रहहते तन्मासस्याधिपे पतति गर्भः " इति । अत्र च लग्नपः निषेकलग्नाधिपः प्रश्नलग्नाधिपश्च इति ।

अन्यच्च।

ज्येष्ठामूलमघाश्लेषारेवतीकृत्तिकाश्विनीः।
उत्तरात्रितयं त्यक्त्वा पर्ववर्जं व्रजेहतौ ॥ ६९ ॥

इति ज्योतिस्तत्त्वे।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि;ज्येष्ठा, मूल, मघा, आश्लेषा, रेवती, कृत्तिका, अश्विनी, उत्तराफाल्गुनी, उत्तराषाढा, और उत्तराभाद्रपदा नक्षत्र और पर्व त्यागकरके ऋतुकालमें स्त्रीके साथ सहवास करना चाहिये ॥ ६९ ॥

अपरंच।

पुष्यार्कचन्द्रशिवमूलपुनर्वसुः स्या-
दाषाढयुग्महरिभाद्रपदद्वयं च।
एतानि पुंसि कथितानि शुभानि भानि
चान्येषु गर्भपतनादिभयञ्च भेषु ॥ ७० ॥

इति ज्योतिस्तत्त्वे।

अर्थ-पुष्य, हस्त, मृगशिर, आर्द्रा, मूल, पुनर्वसु, पूर्वाषाढा, उत्तराषाढा, श्रवण, पूर्वाभाद्रपदा और उत्तराभाद्रपदा इन सब पुंसंज्ञक नक्षत्रोंमें गर्भाधान शुभदायक होताहै। उक्त नक्षत्रोंके शिवाय अन्य समस्त नक्षत्रोंमें गर्भाधान होनेसे वह गर्भ पतन होजाताहै ॥ ७० ॥

प्रकारान्तरश्च।

मूलर्क्षं स्मृतिदुष्टत्वाद्गर्भाधानेषु नेष्यते।
तस्य पुंसवनादौ तु पुंसंज्ञत्वे प्रयोजनम् ॥ ७१ ॥

इति ज्योतिस्तत्त्वे।

अर्थ-मूलनक्षत्र स्मृतिके विरुद्ध होनेसे गर्भाधानमें प्रशस्त नहीं है किन्तु पुंसवनादिकार्यमें मङ्गलदायक पुंनक्षत्रोंके मध्यमें कहाहै ॥ ७१ ॥

अथप्रशस्ताप्रशस्ततिथ्यादिकथनम्।

नन्दा भद्रा भवेत्पुंसि स्त्रीषु पूर्णा जया स्मृता।
रिक्ता नपुंसके त्वाहुस्तस्मात्तां परिवर्जयेत् ॥ ७२ ॥

इति ज्योतिस्तत्त्वे।

अर्थ-नन्दा और भद्रा तिथि पुरुषकर्ममें प्रशस्त है, पूर्णा और जया तिथि

स्त्रीकर्ममें प्रशस्त हैं, रिक्ता तिथि नपुंसक है अतएव उसको समस्त कर्ममें परित्याग करना चाहिये ॥ ७२ ॥

पापासंयुतमध्यगेषु दिनकृल्लग्नक्षयास्वामिषु
तद्द्यूनेष्वशुभोज्झितेषु विकुजे च्छिद्रे विपापे सुखे ।
सद्युक्तेषु, त्रिकोणकण्टकविधुष्वायत्रिषष्ठान्विते
पापे युग्मनिशास्वगण्डसमये पुंशुद्धितः (१)सङ्गमः ॥७३(२)

अर्थ–यदि सूर्य,लग्न और चन्द्र पापग्रहयुक्त न हों, पापग्रहके मध्यमें स्थित न होय. सूर्य, लग्न और चन्द्रके सातव स्थानमें पापग्रहका वासस्थान न होय, आठवें मङ्गल अथवा चौथे पापग्रहसे युक्त न होय, और राशि, लग्न और लग्नके पांचवें, नववें, चौथे, सातवें और दशवें स्थानमें शुभग्रह होय और लग्नके ग्यारहवें, तीसरे और छठे स्थानमें पापग्रह स्थित होय तो युग्मरात्रियोंमें गण्डनक्षत्र त्याग करके पुरुष चन्द्रशुद्धि होनेसे गर्भाधान करे ॥ ७३ ॥

---

( १ ) "कन्यानक्षत्रशुद्धौ स्याद्विवाह शुभकृन्नृणाम् । पश्चाद्भर्तुर्विशुद्धया तु यात्रापुष्पोत्सवादय. ॥" इति ज्योतिस्तत्त्वे । "विवाहकार्यं कुसुमप्रतिष्ठा गर्भप्रतिष्ठा वनिताविशुद्धौ । अन्यानि कार्याणि धवस्य शुद्धौ पत्यौ विहीने प्रमदात्मशुद्धया ॥" इति ग्रन्थान्तरे विरुद्धवचनमास्ति ।

( २ ) निषेकमाह–पापेति । रविलग्नचन्द्रेषु पापायुक्तेषु तद्द्यूनेषु तेषा रविलग्नचन्द्राणा सप्तमेषु पापवर्जितेषु लग्नस्य छिद्रेऽष्टमस्थाने विकुजे कुजरहिते सति लग्नस्य सुखे चतुर्थे पापरहिते सति । सौभरिस्तु तेषां छिद्रे विकुज इति । तत्र निरुपाधिद्वितीयादिशुद्धौ लग्नस्यैव द्वितीयादिवाचको नान्यस्येति । तथाच सारावल्याम् " होराष्टमे क्षितिसुते म्रियते गर्भ. सहजनन्येति" ॥ सद्युक्तेष्विति। लग्नस्य त्रिकोणे नवपञ्चमे केन्द्रे चन्द्रे च शुभग्रहयुक्त इत्यर्थ. । अत्र च सौभरिणा सल्लग्नेष्विति पाठ कृत्वा सल्लग्नेषु चातुष्पदतल्लग्नेषु त्रिकोणकण्टकस्थेषु चन्द्रे,ष्विति व्याख्यातम् । एव च इन्द्राशनाभ्यासनप्रमादः । यतो राजमार्त्तण्डे "केन्द्रत्रिकोणेषु शुभस्थितेषु लग्ने शशाङ्के च शुभे समेते । पापैस्त्रिलाभारिगते प्रयायात्पुन्नमयोगेषु च सम्प्रयोगम् ॥"तथा बृहज्जातके–"शशाङ्कलग्नोपगते शुभग्रहैस्त्रिकोणजायार्थसुखास्पदस्थितै । तृतीयलाभारिगतैश्च पापै. सुखी च गर्भो रविणा निरीक्षित. ॥" इति । तथा पापग्रहे लग्नस्यायत्रिषष्ठगते सति युग्मरात्रौ यथा मनुः "ऋतु स्वाभाविकः स्त्रीणां रात्रय षोडश स्मृता । तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषा' स्यु. प्रशस्ता दश रात्रय. । युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ॥" तथा " पर्ववर्जं व्रजेच्चैना तद्व्रतो रतिकाम्यया " इति । गण्डसमय वर्जयित्वा पुंशुद्धित. पुंसश्चन्द्रशुद्धया सङ्गम. कार्यं इत्यर्थः । तथा सारावल्याम्–"उपचयभवने शशभृद्दृष्टो गुरुणा सुहृद्भिरथवासौ । पुसां करोति योग विशेषतः शुक्रसदृष्टः ॥ " इति ।

अथ गण्डपादवर्जनम्।

**मूलमघाश्विनीनामाद्यं ज्येष्ठान्त्यसार्पाणाम्।**
**अन्त्यं गण्डपदं त्यक्त्वा षोडशाहे ऋतौ व्रजेत् ॥ ७४ ॥**

अर्थ-अब गण्डनक्षत्रको कहते हैं। मूल, मघा और अश्विनीके प्रथम चरणको और ज्येष्ठा, रेवती और आश्लेषाके चतुर्थचरणको गण्डनक्षत्र कहतेहैं। गण्ड-नक्षत्र त्यागकरके सोलह रात्रियोंके मध्यमें गर्भाधान करै ॥ ७४ ॥

अशक्तौ तु भुजबलमाह।

**अन्त्यं पौष्णेन्द्रसर्पाणामाद्यं पित्र्यश्विमूलगम्।**
**गण्डं दण्डत्रयं ख्यातं सर्वकार्येषु गर्हितम् ॥ ७५ ॥**

इति भीमपराक्रमे।

अर्थ-अशक्त विषयमें भुजबल कहते हैं, भीमपराक्रममें लिखाहै कि, रेवती, ज्येष्ठा और आश्लेषाके अन्त्य ( शेष ) तीन दण्ड और मघा अश्विनी और मूलके आद्य ( प्रथम ) तीन दण्डको गण्डनक्षत्र कहतेहैं, इनको समस्त कार्यमेंही परित्याग करना चाहिये ॥ ७५ ॥

अथ फलबन्धनम्।

**रोहिण्यन्तकचित्राहिविशाखशतवर्जिते।**
**भे पुंग्रहाहे स्त्रीशुद्ध्या फलबन्धनमिष्यते ॥ ७६ ॥ (*)**

अर्थ-स्त्रियोंके प्रथम रजोदर्शन होनेसे ऋतुदानके बाद फलबन्धन करना चाहिये अब उसका शुभ दिन वर्णन करते हैं। रोहिणी, भरणी, चित्रा, आश्लेषा, विशाखा और शतभिषा इन समस्त नक्षत्रोंको छोडके अन्य नक्षत्रोंमें मङ्गल रवि और बृहस्पति वारमें स्त्रियोंके चन्द्रताराशुद्धि होनेसे प्रथम ऋतुस्नानके बाद फलबन्धन करै ॥ ७६ ॥

**पुमान्विंशतिवर्षश्चेत्पूर्णषोडशवर्षया।**
**स्त्रिया संगच्छते गर्भाशये शुद्धे रजस्यपि।**
**अपत्यं जायते भद्रं ततोन्यूनेऽधमं स्मृतम् ॥ ७७ ॥**

अर्थ-बीस वर्षका पुरुष यदि सोलह वर्षकी स्त्रीके साथ सम्भोग करै और

(*) प्रथम ऋतौ रजसि चोपगते ऋतुस्नानानन्तर फलबन्धनं क्रियते। तद्विधिमाह-रोहिणीति। रोहिण्यादिवर्जिते नक्षत्रे पुंग्रहस्याहनि वारे रविकुजगुरूणां स्त्रीशुद्ध्या: स्त्रीणां चन्द्रताराशुद्ध्या फलबन्धनमिष्यते। ऋतुस्नानन्तु चतुर्थदिने पुष्पादिभिः कार्यं यथा राजमार्तण्डे-"शुभसौमाग्यवृद्ध्यावेलाचम्पकसुमनचन्दनोपेतैः। सत्फलिनीफल-पुष्पैः पुष्पेषु निशात्रये स्नायात्॥" इति।

स्त्रीके गर्भाशयमें वा शोणितमें कोई दोष न होय तो उत्तम सन्तान उत्पन्न होती है, इसके इतर विशेष होनेसे अधम सन्तान उत्पन्न होती है ॥ ७७ ॥

अथ षोडशवर्षीयागर्भिणीचिन्ता ।

**प्रसूता षोडशे वर्षे तत्र या धृतगर्भिका ।**
**मृत्युस्तस्याः सपुत्रायाः पितुश्चापि च सम्मतः ॥ ७८ ॥**

अर्थ-जो नारी सोलह वर्षकी आयुमें प्रसव करे वा गर्भधारण करे, तो उसकी पुत्रके साथ मृत्यु होती है, और इस पुत्रके पिताकोभी मृत्यु होजाती है ॥७८॥

अथ पुंसवनम् ।

**कुर्यात्पुंसवनं सुयोगकरणे नन्दे सभद्रे तिथौ**
**भाद्राषाढनृभेश्वरेषु नृदिने वेधं विनेन्दौ शुभे ।**
**अक्षीणश्च त्रिकोणकण्टकगते सौम्येऽशुभे वृद्धिषु**
**स्त्रीशुद्धचा घटयुग्मसूर्यगुरुभेपूयत्सु मासत्रये ॥ ७९ ॥(*)**

अर्थ-अब पुंसवन कहते हैं । गर्भाधानके दिनसे गिनकर तीसरे मासमें, शुभयोगमें और शुभकरणमें, प्रतिपदा, एकादशी, षष्ठी, द्वितीया, द्वादशी और सप्तमी तिथिमें पूर्वाभाद्रपदा, उत्तराभाद्रपदा, पूर्वाषाढा, उत्तराषाढा, हस्त, मूल, श्रवण, पुनर्वसु, मृगशिर, पुष्य और आर्द्रा नक्षत्रमें; रवि, मङ्गल और बृहस्पतिवारमें, यामित्रवेध, युतिवेध और दशयोगभङ्ग न होनेसे शुभ चन्द्रमें, और पूर्ण चन्द्रमें, लग्नके त्रिकोण स्थानमें और केन्द्रस्थानमें शुभ ग्रह होवे और तीसरे, ग्यारहवें और छठे स्थानमें अशुभ ग्रह होनेसे स्त्रीके चन्द्रतारा शुद्धि होनेसे कुम्भ, मिथुन, सिंह, धन और मीन लग्नमें पुंसवन करना चाहिये ॥ ७९ ॥

(*) पुंसवनमाह-कुर्यादिति । शोभनयोगे शोभनकरणे च नन्दाभद्रातिथौ तथा च "नन्दा भद्रा भवेत्पुंसि स्त्रियां पूर्णा तथा जया । रिक्ता नपुंसकस्य स्यात्तस्मात्तां परिवर्जयेत् ॥" भाद्रपदाद्वये आषाढद्वये नृभे पुन्नामगणे हस्तमूलश्रवणपुनर्वसुमृगशिरःपुष्येषु ईश्वरे आर्द्रायाञ्च नृदिने पुंग्रहवारे रविकुजगुरुवारे अक्षीणे पूर्णे चन्द्रे वेधं यामित्रवेध दशयोगभङ्गवेधश्च विना शुभे गोचरशुद्धे सति लग्नात् केन्द्रत्रिकोणस्थे शुभग्रहे पापग्रहे च वृद्धिगे उपचयस्थे स्त्रीशुद्धचा स्त्रीणां चन्द्रताराशुद्धौ । तथा च ग्रन्थान्तरे "स्त्रीणां सर्वक्रियारम्भे भर्तुर्गोचरशुद्धितः । यात्रापुंसवनोद्वाहे विशुद्धिर्योपितः सदा ॥" इति । कुम्भमिथुनसिंहधनुर्मीनलग्नेषु मासत्रये पुंसवनं कुर्यात् । तृतीयमासेऽशक्तौ पष्ठाष्टमासेऽपि कार्यम् । तथाच "मासे षष्ठेऽष्टमे वापि शुद्धचा चन्द्रमसः सदा । अरिक्तायां तिथौ शुक्रे सेयं पुंसवनं हितम् ॥" एतत्प्रतिगर्भं कर्त्तव्यम् । यथा राजमार्त्तण्डे-" प्राग्वृतीयमासे स्फुरदिन्दुरुच्यकलापपक्षे च । पुंसवनं पुत्रेच्छुर्गर्भेगर्भे प्रकुर्वीत ॥" इति ।

अथ पञ्चामृतम् ।

**रेवत्यश्विपुनर्वसुद्वयमरुन्मूलानुराधामघा**
**हस्ताद्युत्तरफल्गुभेषु च भृगौ जीवार्कवारे तथा ।**
**लग्ने चोभयशुद्धिगे सुनियतं संत्यज्य रिक्तां तिथिं (१)**
**देयं मासि तु पञ्चमे शुभदिने पञ्चामृतं योषिताम् ॥८०॥(२)**

अर्थ-अब पञ्चामृतका शुभ दिन कहते हैं । रेवती, अश्विनी, पुनर्वसु, पुष्य, स्वाति, मूल, अनुराधा, मघा, हस्त और उत्तराफाल्गुनी नक्षत्रमें शुक्र, बृहस्पति और रविवारमें शुभलग्नमें स्त्री और पुरुषके चन्द्र तारा शुद्ध होनेसे रिक्ताभिन्न तिथिमें गर्भधारण करनेसे पाचव मासके शुभ दिनमें स्त्रियोंको पञ्चामृतपान करना चाहिये ॥ ८० ॥

अन्यच्च ।

**पञ्चामृतं पञ्चममास एव अजद्वये चाम्बुनि पञ्चषट्के ।**
**विरञ्चिपञ्चान्त्यचतुष्टयेषु शुक्रारसूर्येन्दुदिने शुभेन्दौ॥८१॥ (३)**

अर्थ-वचनान्तरमें पञ्चामृतके विषयमें कहा है कि, गर्भाधानके दिनसे पाचवें महीनेमें शुक्र, मंगल, रवि और सोमवारमें, पूर्वाभाद्रपदा, उत्तराभाद्रपदा, पूर्वाषाढा, मघा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी हस्त, चित्रा, स्वाति, रोहिणी, मृगशिर, आर्द्रा, पुनर्वसु, पुष्य, रेवती, अश्विनी, भरणी और कृत्तिका नक्षत्रमें चन्द्रशुद्धि होनेसे स्त्रियोंको पञ्चामृत पिलाना चाहिये ॥ ८१ ॥

अथ घटी ( चीरवस्त्र ) दानम् । (४)

**मघाष्टकेऽम्बुत्रितयेऽदितिद्वये पौष्णद्वये धातृयुगे गुरूदये । मासे**
**च षष्ठे च चतुष्टये स्त्रियां शुद्ध्या शुभन्दाहवहिर्घटी शुभा८२॥(*)**

अर्थ-अब घटीदान कहते हैं । मघा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, हस्त,

(१) लग्नर्क्षांडुपशोभनेषु इति पाठान्तरम् । (२) सुतरणे इति पाठान्तरम् ।

(३) पञ्चमे मासि गर्भदोहदार्थं पञ्चामृत दीयते तस्य विधिमाह-रेवत्यश्वीति । रेव त्यादिनक्षत्रेषु शुक्रगुरुरविवारे शुभे लग्ने उपचयशुद्धिगे पुस्त्रीशुद्धिगे च रिक्तां तिथिं त्यक्त्वा शुभदिने पञ्चममासे योषितां पञ्चामृत देयम् । याज्ञवल्क्य " दोहदस्याप्रदानेन गर्भो दोषमवाप्नुयात् । वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥" पञ्चामृतमुक्तं यथा "दुग्धं सशर्करं चैव घृतं दधि तथा मधु । पञ्चामृतमिदं प्रोक्तं विधेयं सर्वकर्मसु ॥ इति ।

(*) प्राचीनसंग्रहकृद्भिरलिखितत्वादप्रमाणमिव लक्ष्यते ।

(४) षष्ठे मासि गर्भरक्षार्थं ग्रन्थियुक्त हरिद्राक्त वस्त्रखण्ड घटीसंज्ञक वार्द्धदेशे निबध्यते तस्य विधिमाह-मघाष्टक इति । मघाद्यष्टनक्षत्रे पूर्वाषाढादि त्रितये पुनर्वसुपुष्ययोः रेवत्य-

चित्रा, स्वाती, विशाखा, अनुराधा, पूर्वाषाढा, उत्तराषाढा, श्रवण, पुनर्वसु, पुष्य, रेवती, अश्विनी, रोहिणी और मृगशिरनक्षत्रमें, धन और मीन लग्नमें, पांचवें वा छठे महीनेके गर्भसमय स्त्रियोंके चन्द्रतारादि शुद्धि होनेसे बुध और शनि भिन्न वारमें गर्भकी रक्षाके निमित्त हरिद्राक्तग्रन्थियुक्त वस्त्राञ्चल स्त्रियोंके कटिदेशमें बांधना चाहिये उक्त वस्त्राञ्चलकोही धटी कहते हैं ॥ ८२ ॥

अथ सीमन्तोन्नयनम् ।

षष्ठे मास्यष्टमेऽह्नीज्यकुजदिनकृतां नन्दभद्रे तिथौ च
मैत्रे मूले मृगाङ्के करपितृपवने पौष्णविष्णुत्रियुग्मे । ( १ )
तिष्याश्व्यादित्यरौद्रे युवतिहरिझषे वृश्चिके वापि लग्ने
चन्द्रे ताराऽनुकूले शुभमपि नियतं स्याच्च सीमन्तकर्म ॥ ८३ ॥

अर्थ-अब सीमन्तोन्नयनका मुहूर्त्त कहते हैं । गर्भाधानसे छठे वा आठवें महीनेमें बृहस्पति, मङ्गल और रविवारमें, प्रतिपदा, एकादशी, षष्ठी, द्वितीया, द्वादशी और सप्तमी तिथिमें; अनुराधा, मूल, मृगशिर, हस्त, मघा, स्वाति, रेवती, श्रवण, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, पूर्वाषाढा, उत्तराषाढा, पूर्वाभाद्रपदा, उत्तराभाद्रपदा, पुष्य, अश्विनी, पुनर्वसु और आर्द्रा नक्षत्रमें, कन्या, सिंह, मीन और वृश्चिक लग्नमें, चन्द्र तारा शुद्ध होनेसे सीमन्तोन्नयन करना चाहिये ॥ ८३ ॥

अन्यच्च ।

मृगाजरहिते लग्ने नवांशे पुंग्रहस्य च ।
केचिद्वदन्ति सीमन्तं तथा रिक्तेतरे तिथौ ॥ ८४ ॥

अर्थ-कोई २ पंडितोंने कहा है कि, मकर और मेषभिन्न लग्नमें, रवि, मङ्गल और बृहस्पतिवारके नवांशोंमें, रिक्ताभिन्न तिथियोंमें गर्भवती स्त्रियोंका सीमन्तोन्नयन करना चाहिये ॥ ८४ ॥

अपरञ्च ।

( २ ) मासेशे प्रबले शुभेक्षितविधौ मासे च षष्ठेऽष्टमे

---

--स्विन्यो रोहिणीमृगशिरसो गुरूदये धनुर्मीनलग्नेषष्ठे-चतुर्थे मासे स्त्रियाश्चन्द्रताराशुद्धया बुधशनिवारं त्यक्त्वा जप्टीदानकर्म शुभमित्यर्थः । इति ।

( १ ) मिथुनमे फाल्गुनीद्वये आषाढद्वये भाद्रपदद्वये चेत्यर्थः ।

( २ ) मासाधिपास्तु सितकुजगुरुरविशशिशनिसौम्यलग्नपशशिनाः।निषेकदिनसानधि मास गृहीत्वा मासाधिपा गणनीयाः ।

मैत्रे पुंसवनोदितर्क्षसहिते रिक्ताविहीने तिथौ ।
सीमन्तोन्नयनं मृगाजरहिते लग्ने नरांशोदये
योऽयं पुंसवनोदितं यदपरं तत्सर्वमत्रापि च ॥ ८५ ॥ (३)

इति दीपिकायाम् ।

अर्थ—मासाधिपति ( महीनोंके मालिक ) ग्रहोंके बलवान् होनेसे, चन्द्रपर शुभ ग्रहोंकी दृष्टि होनेसे, छठे वा आठवें महीनेमें अनुराधा और पुंसवनोदित नक्षत्रोंमें रिक्ताभिन्न तिथिमें, मकर और मेषभिन्न लग्नमें, मिथुन, तुला, कुम्भ और कन्या लग्नके नवांशोंमें, पुंसवनोक्त वारादिमें स्त्रियोंका सीमन्तोन्नयन करना चाहिये॥८५॥

## अथ जातकप्रकरणम् ।

तत्रादौ लग्नमानम् ।

वेदोऽगैः ४ । ७ खसुतैर्युगो ४ । ५० ग्रहभुजैर्बाणो ५ । २९ ऽश्विवेदैः ५ शरो ४१ बाणो वह्निगुणैः ५ । ३३ । शरो ग्रहभुजैः ५ । २९ शैलानलैः सायकः ५ । ३७ ॥ बाणः शून्यकृतैः ५। ४ शरोऽगशशिभि ५ । १७ वह्न्यग्निभिर्वेदको ४ । ३३ वह्निः सप्तशरै ३ । ५७ गुणे नगकृतै ३ । ४७ मेषादिमानं सताम् ॥ ८६ ॥

अर्थ—अब मेषादि लग्नका मान कहते हैं, मेषलग्नका मान ४ । ७ । चार दण्ड सात पल होता है, इसी प्रकार वृषका मान ४, । ५० चार दण्ड पचास पल, मिथुनका मान ५ । २९ । पांच घडी उन्तीस पल, कर्कका मान ५ । ४१ पांच घडी इकतालिस पल, सिंहका मान ५ । ३३ पांच घडी तेतिस पल, कन्याका मान ५।२९ पांच घडी उन्तिस पल, तुलाका मान ५ । ३७ पांच घडी सैंतीसपल,

( ३ ) मासेश इति,। गर्भमासाधिपः पूर्वोक्तः तस्मिन्प्रबले शुभदृष्टे चन्द्रे षष्ठेऽष्टमे वा मासे पुंसवनोक्तनक्षत्रे अनुराधायाञ्च रिक्तान्यतिथौ मकरमेषव्यतिरिक्ते लग्ने नरांशोदये नरराशौमिथुनतुलाघटकन्याराशेर्नवांशे सीमन्तोन्नयनं कार्यमित्यर्थः । यथा राजमार्तण्डे- " मासे षष्ठेऽष्टमे वा बलिनि तदधिपे शीतगौ चेष्टदृष्टे पुन्नामर्क्षोपयाने नरभवननवांशोदये कामिनीनाम् । कार्यं सीमन्तकर्म त्रिदशपतिगुरौ केन्द्रगे कोणगे वा क्रूरैः केन्द्रात्रिकोणव्ययनिधनबहिर्गर्भपुष्टिं करोति ॥ " यदपरं पुंसवनोदितं पुंग्रहवारादि तत्सर्वं सीमन्तोन्नयने कार्यमित्यर्थः । एतच्च प्रथमगर्भ एव कार्यं नान्यत्र । यथा " सकृत्सकृत्तु संस्काराः सीमन्तेन द्विजस्त्रियः । यं यं गर्भं प्रसूयन्ते स गर्भः शुद्धिमर्हति ॥ " देशादकरणे सपुत्रापि सत्कर्तव्या । यथा राजमार्तण्डे " नारी याऽकृतसीमन्ता प्रसवेच्च कदाचन । क्रोडे निधाय तत्पुत्रं पुनः संस्कारमर्हति ॥ " इति ।

पृथ्वीपतिः प्रसन्नः कृतापराधं यथा पुरुषम् ॥ ८९ ॥

इति सारावल्याम् ।

अर्थ-अब राहुका अरिष्टभङ्ग कहते हैं । जन्मसमयमें मेष, वृष वा कर्क लग्नमें राहु स्थित होनेसे जात बालक सब अरिष्टोंको दूर करदेता है, जिस प्रकार अपराधी मनुष्यको प्रसन्न होकर राजा छोड देता है ॥ ८९ ॥

इति राह्वरिष्टम् ।

अथ केत्वरिष्टम् ।

केतुर्यस्मिन्नृक्षेऽभ्युदितस्तस्मिन्प्रसूयते यस्तु ।
रौद्रे सर्पमुहूर्ते वा प्राणैः संत्यज्यते चाशु ॥ ९० ॥ (*)

अर्थ-अब केत्वरिष्ट कहते हैं । राशिचक्रके जिस नक्षत्रमें केतु ग्रह स्थित होय उस नक्षत्रमें, आर्द्रानक्षत्रके मुहूर्त्तमें वा आश्लेषा नक्षत्रके मुहूर्त्तमें यदि बालकका जन्म होय तो इस बालककी शीघ्रही मृत्यु होती है ॥ ९० ॥

इति केत्वरिष्टम् ।

अथ द्रेष्काणारिष्टम् ।

लग्ने ये द्रेक्काणा निगडाहिविहङ्गपाशधरसंज्ञाः ।
मरणाय सप्तवर्षैः क्रूरयुता न स्वपतिदृष्टाः ॥ ९१ ॥ (×)

अर्थ-अब द्रेक्काणका अरिष्ट कहते हैं । निगड, सर्प, पक्षी और पाशधरसंज्ञक द्रेक्काण लग्नगत होय और उनपर पापग्रहोंकी दृष्टि होय और उनके स्वामीगणकी उनपर दृष्टि न होय तो जात बालककी सातवर्षमें मृत्यु होती है ॥ ९१ ॥

इति द्रेक्काणारिष्टम् ।

अथ लग्नाधिपाद्यरिष्टम् ।

लग्नाधिपजन्मपती षष्ठाष्टमरिःफगौ प्रसवकाले ।
अस्तमितौ मरणकरौ राशिप्रमितैर्वदेद्वर्षैः ॥ ९२ ॥ (ऽ)

अर्थ-लग्नके स्वामी और राशिके स्वामीका अरिष्ट कहते हैं । जन्मसमयमें

---

(*) केत्वरिष्टमाह-केतुरिति । यस्मिन् नक्षत्रे केतुरभ्युदितः स्थितः तस्मिन् नक्षत्रे रौद्रे मुहूर्त्ते आर्द्रानक्षत्रमुहूर्त्ते आश्लेषानक्षत्रमुहूर्त्ते वा यः प्रसूयते स चाशु तत्क्षणादेव प्राणैर्विमुच्यते म्रियत इत्यर्थः ।

(×) द्रेक्काणारिष्टमाह-लग्नइति । ये निगडसर्पपक्षपाशधरसंज्ञा द्रेक्काणास्ते लग्नगताः क्रूरयुता न स्वपतिना दृष्टाः सप्तवर्षैर्मरणाय स्युः ॥ इति ।

(ऽ) लग्नजन्माधिपाद्यरिष्टमाह-लग्नाधिपजन्मपती इति । लग्नाधिपो जन्मपतिः राश्यधिपो वास्त गतः षष्ठाष्टमरिःफगः सन् राशिप्रतिमैर्वर्षैः षष्ठाष्टमद्वादशवर्षैर्मृत्युकरः स्यात् ।

लग्नका स्वामी ग्रह और राशिका स्वामी ग्रह यदि अस्तामित होकर लग्नके छठे आठवें वा बारहवें स्थानमें स्थित हों तब जात बालककी मृत्यु छठे वा आठवें वर्षमें होती है ॥ ९२ ॥

इति लग्नाधिपाद्यरिष्टम् ।

अथ सौम्यग्रहारिष्टम् ।

**सौम्याः षष्ठाष्टमगाः पापैर्वक्रोपसंयुतैर्दृष्टाः ।**
**मासेन मृत्युदास्ते यदि न शुभैस्तत्र संदृष्टाः॥ ९३ ॥ (ऽऽ)**

अर्थ-अब शुभ ग्रहोंका अरिष्ट कहते हैं । जन्मसमय यदि शुभग्रह लग्नके छठे वा आठवें स्थानमें होय और उनपर पापग्रहोंकी वा वक्र ग्रहोंकी दृष्टि होय और उनके प्रति अन्य शुभ ग्रहोंकी दृष्टि न होय तो जात बालककी एक महीनेके मध्यमें मृत्यु होती है ॥ ९३ ॥ इति सौम्यग्रहारिष्टम् ।

अथ पापादिग्रहारिष्टम् ।

**एकः पापोऽष्टमगः शत्रुगेही शत्रुवीक्षितो वर्षात् ।**
**मारयति नरं प्रसूतं सुधारसो येन पीतोऽपि ॥ ९४ ॥(ऽऽऽ)**

अर्थ-अब पापग्रहोंका अरिष्ट कहते हैं । यदि एक पापग्रह जन्मलग्नके आठवें स्थानमें स्थित होकर शत्रुग्रहगत होय अथच इस पापग्रहके ऊपर शत्रुग्रहकी दृष्टि होय तो जात मनुष्य अमृत पीनेसेभी एकवर्षके मध्यमें कालके गालमें जाताहै९४

**होरायाः सप्तमे सौरिर्हिबुकस्थश्च भास्करः ।**
**अस्मिन्योगे तु यो जातः सोल्पायुर्भवति प्रिये ॥ ९५ ॥**

अर्थ-होराधिपतिके सातवें स्थानमें शनैश्चर और चौथे स्थानमें सूर्य होनेसे इस योगमें जिसका जन्म होय उसकी थोडी आयु होती है ॥ ९५ ॥

**वसुषष्ठगते जीवे समसप्तगते शनौ ।**
**द्वादशस्थो यदा भानुर्वर्षमेकं न जीवति ॥ ९६ ॥**

अर्थ-जात बालककी जन्मलग्नसे आठवें वा छठे स्थानमें बृहस्पति समसप्तगत

(ऽऽ) सौम्यग्रहारिष्टमाह-सौम्येति । सौम्याः शुभग्रहाः षष्ठेऽष्टमे वा उभयत्र वा स्थिताः पापग्रहैः वक्रिग्रहैर्दृष्टाः सन्तः मासेन मृत्युकरा भवन्ति ते यदि शुभग्रहैर्न दृष्टाः शुभदर्शने तु योगभङ्ग इत्यर्थः । एतेन सर्वत्र एव शुभाः षष्ठाष्टमस्थाः यदि स्युरित्यर्थः ।

(ऽऽऽ) पापग्रहारिष्टमाह-एकइति । एको बलवान् पापः शत्रुगृहस्थः शत्रुदृष्टोऽष्टमस्थः सन् वार्षिकेणामृतभोजिनं नरं मारयति एतेन मरणावश्यकत्व सूचितम् ॥

शनि और बारहवें स्थानमें सूर्य होनेसे यह बालक एकवर्षभी नहीं जीसक्ताहै ९६॥

अथाशुभानि ।

**समसप्तगतो भौमो लग्ने भास्करचन्द्रकौ ।**
**गुरुर्भृगुर्यदा षष्ठे तदा कष्टं समादिशेत् ॥ ९७ ॥**

अर्थ-जन्मसमय यदि मङ्गल सम राशिमें स्थित होकर सातवें होय और लग्नमें सूर्य और चन्द्रमा स्थित होय और बृहस्पति और शुक्र छठी राशिमें स्थित होय तो जात मनुष्य अत्यन्त कष्ट पाता है ॥ ९७ ॥

अपिच ।

**अष्टमस्थौ शनिकुजौ भास्करः सोमजस्तथा ।**
**षष्ठे भार्गवदेवश्च भवेन्मृत्युस्तदाचिरात् ॥ ९८ ॥**

अर्थ-जन्मसमय आठवें स्थानमें शनि, मङ्गल, सूर्य और बुध यदि स्थित होय और छठे स्थानमें शुक्र होय तो जात बालक शीघ्रही यमालयको गमन करताहै९८

अन्यच्च ।

**शुभे लग्ने यदा चन्द्रो जातोऽष्टमनिशाकरः ।**
**शनैश्चरस्तु बन्धुस्थस्तृतीये मासि नश्यति ॥ ९९ ॥**

अर्थ-जन्मसमय चन्द्रमा लग्नमें वा लग्नके आठवें स्थानमें स्थित होय और शनैश्चर यदि चोथे स्थानमें स्थित होय तो जात बालककी तीन महिनेके मध्यमें मृत्यु होती है ॥ ९९ ॥

अपरश्च ।

**प्रमदस्था यदा पापाः सौम्या द्वादशमाश्रिताः ।**
**तदा मृत्युर्भवेज्जातो देवराजसमो यदि ॥ १०० ॥**

अर्थ-जन्मसमय पापग्रहगण सातवें स्थानमें और शुभग्रहगण बारहवें स्थानमें स्थित होय तो जात मनुष्य यदि इन्द्रके समान होय तोभी उसकी अकालमृत्यु होती है ॥ १०० ॥

प्रकारान्तरश्च ।

**पापत्रयगतः सूर्यो गुरुशुक्रविवर्जितः ।**
**पापिष्ठं कुरुते नित्यमल्पायुश्च न संशयः ॥ १ ॥**

अर्थ-जन्मसमय यदि सूर्य तीनों पापग्रहोंके साथ होय और उस स्थानमें बृहस्पति वा शुक्र न होय तो जात मनुष्य पापी और थोडी आयुवाला होताहै॥१॥

अन्यच्च ।

पापत्रयगतः सूर्यो गुरुशुक्रविवर्जितः ।
पापिष्ठं कुरुते नित्यं पण्डितोऽपि भवेद्यदि ॥ २ ॥

अर्थ–जन्मसमय तीनों पापग्रहोंकसाथ सूर्य होय और बृहस्पति और शुक्र उस स्थानमें स्थित न होय तब जात मनुष्य पण्डित होनेसेभी पापिष्ठ होता है ॥२॥

अपिच ।

कण्टकस्थो यदा सौरिः शुक्रग्रहविवर्जितः ।
रवियुक्तो विशेषेण खलो भवति नान्यथा ॥ ३ ॥

अर्थ–जन्मसमय यदि शनि केंद्रस्थानमें स्थित होकर सूर्यके साथमें स्थित होय और शुक्र उस स्थानमें न होय तो जात मनुष्यकी खल (दुष्ट) प्रकृति होती है॥३॥

अपरञ्च ।

लग्नचन्द्रव्ययस्थाने तिष्ठेत्पापग्रहो यदि ।
कृपणः स्यात्तदा जातो दाता सति शुभग्रहे ॥ ४ ॥

अर्थ–जन्मसमय लग्न और चन्द्रमाके बारहवें स्थानमें पापग्रह स्थित होनेसे जात मनुष्य कृपण होताहै और शुभग्रह होनेसे दाता होता है ॥ ४ ॥

अन्यच्च ।

चन्द्रसूर्यगृहे राहुश्चन्द्रसूर्ययुतो यदि ।
( १ ) मृत्युस्थानगतश्चैव पशुभिर्हन्यते ततः ॥ ५ ॥

अर्थ–जन्मसमय चन्द्रमा वा सूर्यके क्षेत्रमें राहु स्थित होकर यदि चन्द्रमा और सूर्यके साथ होय और यह स्थान जन्मलग्नके आठवें होय तो जात मनुष्यकी पशुद्वारा मृत्यु होती है ॥ ५ ॥

अपिच ।

शत्रुगेहे यदा सौम्यः शत्रुयुक्तो निरीक्षितः ।
षष्ठाष्टमगतश्चन्द्रो हन्यते जलजन्तुभिः ॥ ६ ॥

अर्थ–जन्मसमय बुध शत्रुके घरमें होकर शत्रुके साथ होय और उसपर शुक्रकी दृष्टि होय और चन्द्रमा छठे स्थानमें वा आठवें स्थानमें होय तब जात मनुष्यकी जलजन्तु द्वारा मृत्यु होती है ॥ ६ ॥

( १ ) मृत्युस्थो मदनस्थोऽपि इति पाठान्तरम् ।

प्रकारान्तरश्च।

**मृत्युस्थो यदि वा भौमः शत्रुगेही निरीक्षितः। (२)**
**एष नाशकरो योगो द्विजह्वान्नात्र संशयः ॥ ७ ॥**

अर्थ-जन्मसमय मङ्गल यदि आठवें स्थानमें रहकर शत्रुग्रहके क्षेत्रमें स्थित होय और उसके ऊपर शत्रुग्रहकी दृष्टि होय तो जातमनुष्यकी सर्पद्वारा मृत्यु होतीहै॥७

अथ छेदादियोग।

**भौमक्षेत्रगते लग्ने रविस्तत्र शनैश्चरः।**
**पापेन संयुतो वापि कर्णच्छेदी भवेन्नरः ॥ ८ ॥**

अर्थ-जन्मलग्न यदि मङ्गलका क्षेत्र होय और उसमें पापग्रहके साथ होकर सूर्य और शनैश्चर स्थित होय तो जात मनुष्यके कानमें छेद होताहै ॥ ८ ॥

अन्यच्च।

**पापयुक्तो भृगुसुतो रिपुस्थानगतो यदि।**
**जीवो भौमेन संदृष्टः कर्णच्छेदी भवेन्नरः ॥ ९ ॥**

अर्थ-जन्मसमय पापग्रहके साथ शुक्र यदि छठे स्थानमें स्थित होय और बृहस्पतिके ऊपर मङ्गलकी दृष्टि होय तो जात मनुष्यके कानमें छेद होताहै ॥ ९ ॥

अपिच।

**कंटकस्थो यदा सौरिः शशियुक्तो भवेद्यदि।**
**शुभग्रहा न पश्यन्ति खञ्जो भवति नान्यथा ॥ १० ॥**

अर्थ-जन्म लग्नके केन्द्रस्थानमें यदि चन्द्रमाके साथ शनैश्चर स्थित होय और उसपर शुभ ग्रहकी दृष्टि न होय तो जात मनुष्य खञ्ज (लोडा पंगु) होताहै१०

अपरश्च।

**शत्रुगेहे यदा सौरिः शत्रुयुक्तो निरीक्षितः।**
**एकपादकरच्छेदयोगोऽयं परिकीर्तितः ॥ ११ ॥**

अर्थ-शनि शत्रुके घरमें रहकर यदि शत्रुके साथ होय वा उसपर शत्रुकी दृष्टि होय तो जात बालकका एक पदच्छेदन और एक करच्छेदन होता है ॥ ११ ॥

प्रकारान्तरश्च।

**पापत्रययुतः सोमः शत्रुगेहे व्यवस्थितः।**
**शुभग्रहा न पश्यन्ति चक्षुर्नाशो भवेद्ध्रुवम् ॥ १२ ॥**

अर्थ-जन्मसमय चन्द्रमा यदि तीनों पाप ग्रहोंके साथ शत्रुग्रहके क्षेत्रमें

---

(२) शत्रुगेही सहेन्दुनेति क्वचित्पुस्तके पाठः।

स्थित होय और उसके ऊपर शुभ ग्रहकी दृष्टि न होय तो जात मनुष्यके नेत्रोंका नाश हो जाता है ॥ १२ ॥

अपिच ।

तनुस्थानस्थितो भौमः शनिराहुसुरान्वितः ।
नासाच्छेदकरो योगो मुनिभिः परिकीर्तितः ॥ १३ ॥

अर्थ-जन्मलग्नमें मङ्गल स्थित होकर यदि शनि राहु और सूर्यके साथ होय तब जात मनुष्यके नासिकामें छेद होताहै ॥ १३ ॥

अन्यच्च ।

मृत्युस्थानगतो भौमः शनिराहुविवर्जितः ।
नासाच्छेदो भवेद्योग इन्द्रवंशोद्भवस्य च ॥ १४ ॥

अर्थ-जन्मसमय यदि आठवें स्थानमें मङ्गल रहकर शनि और राहुयुक्त न होय तब जात मनुष्य इन्द्रके वंशमें उत्पन्न होनेसे भी उसकी नासिकामें छेद होताहै ॥ १४ ॥

अपरञ्च ।

अष्टमस्थो यदा सोमो राहुयुक्तो भवेद्यदि ।
शिरसश्छेदयोगोऽयं विष्णुना परिकीर्तितः ॥ १५ ॥

अर्थ-जन्मलग्नके आठवें स्थानमें राहुयुक्त होकर यदि चन्द्रमा स्थित होय तो जात मनुष्यका शिरश्छेद होता है, इस प्रकार विष्णुने कहाहै ॥ १५ ॥

अपिच ।

वज्राघातेन सर्पेण मृत्युस्थेऽर्के ज्वरेण वा ।
यमेन नर आक्रान्तस्तोये भूमौ विनश्यति ॥ १६ ॥

अर्थ-जन्म समय लग्नके आठवें स्थानमें यदि सूर्य होय तब जात मनुष्यकी वज्रघातसे, सर्पद्वारा वा ज्वररोगसे पीडित होकर जलयुक्त भूमिमें मृत्यु होती है ॥ १६ ॥

अन्यच्च ।

सूर्यः स्वगृहगतः शुभनिधनं निधनस्थः कुरुते ।
अन्यगृहे वहुदुःखं दत्त्वा प्राणानपहन्ति ॥ १७ ॥

अर्थ-जन्मसमय लग्नका आठवाँ स्थान सूर्यका घर होय और उसमें वह स्थित हो तो जात मनुष्यकी अनायाससे मृत्यु होती है किन्तु अन्यके क्षेत्रमें स्थित

होकर सूर्य अष्टमस्थानी होनेसे नानाप्रकारके कष्ट पाकर जात मनुष्यकी मृत्यु होती है ॥ १७ ॥

प्रकारान्तरम्।

**मदनस्थो यदा भानुः शनिभौमावलोकितः।**
**रिपुगेही विशेषेण कासरोगी न चान्यथा ॥ १८ ॥**

अर्थ-जन्मलग्नके सातमे स्थानमें सूर्य स्थित होकर यदि उनपर विशेष करके शनि और मंगलकी दृष्टि होय तो यह स्थान उसका रिपुगृह होता है तो जात मनुष्यको कासरोग होता है ॥ १८ ॥

अपिच।

**प्रतिपद्युत्तराषाढा नवम्यामेव कृत्तिका।**
**पूर्वाभाद्रपदाष्टम्यामेकादश्याश्च रोहिणी ॥ १९ ॥**
**द्वादश्याञ्च यदाश्लेषा त्रयोदश्यां यदा मघा।**
**एभिर्जातो न जीवेत यदि शक्रसमो भवेत् ॥ २० ॥**

अर्थ-प्रतिपदा तिथिमें उत्तराषाढा नक्षत्र, होय इसी प्रकार नवमीमें कृत्तिका, अष्टमीमें पूर्वाभाद्रपदा, एकादशीमें रोहिणी, द्वादशीमें आश्लेषा और त्रयोदशीमें मघा नक्षत्र होय तो इन तिथि नक्षत्रयोगमें जिस बालकका जन्म होय, वह इन्द्रके समान होनेसे भी नहीं जीसक्ता है ॥ १९ ॥ २० ॥

अथ पताकीवेधः।

**तिर्यगूर्ध्वगता रेखास्तिस्रो देयाः पताकया।**
**युताः कार्या वेदविदा सर्वसङ्गतरेखया ॥ २१ ॥**
**दक्षस्थोद्गतरेखातो रामं मेषाद्यराशयः।**
**पञ्चाष्टयुग्मविंशाश्च षड्दशेन्द्राग्निसागराः।**
**कर्कटान्मीनपर्यन्तमङ्का देया यथाक्रमम् ॥ २२ ॥ (क)**

अर्थ-अब पताकीवेधके देखनेकी रीति और उसके लिखनेकी प्रणाली कही जाती है। ऊर्ध्व दिशामें तीन रेखा खींचकर तिर्यग्भावसेभी तीन रेखा खींचना चाहिये अनन्तर इन समस्त रेखाओंके आगे पताकाका चिह्न बनाकर परस्परका वेध जानना चाहिये। ऊपरकी तीन रेखाओंके मध्यमें दक्षिण दिशाकी रेखाके

(क) "वेदाग्निमुनिदिक्कालविंशतिद्वयष्टमार्गगाः। मीनादिकर्कटान्ताश्च ह्यङ्का देया यथाक्रमम् ॥" इति सारसंग्रहे।

आगेसे बामावर्त्तमें मेषादिके चिह्न रक्खे, अनन्तर कर्कमें पांच, सिंहमें आठ, कन्यामें दो, तुलामें बीस, वृश्चिकमें छः, धनमें दश, मकरमें चौदा, कुम्भमें तीन और मीनमें चार इस प्रकारसे अङ्कयोजना करे ॥ २१ ॥ २२ ॥

पाठकगणके सुगमार्थ नीचे पताकीचक्र लिखागया है ।

पताकीचक्रम् ।



बालस्य जन्मकालीनग्रहलग्नमजादिषु ।
विन्यस्य चिन्तयेत्प्राज्ञः शुभाशुभं यथाक्रमम् ॥ २३ ॥
शुभदण्डयोगवेधैर्लेग्राद्बालस्य शोभनम् ।
पापदण्डयोगवेधैराश्यंकाद्रिष्टिकालवित् ॥ २४ ॥

अर्थ–बालकके जन्मसमय राशिचक्रके जिस घरमें जो ग्रह होय उनको पताकी चक्रमें रखकर अनन्तर बालकका शुभाशुभ फल जानना चाहिये । यदि बालक शुभ ग्रहोंके दण्डमें उत्पन्न होय और शुभ ग्रह वेधमें होय तो बालकको शुभ होता है और यदि अशुभ ग्रहोंके दण्डमें उत्पन्न होय और अशुभग्रहही वेधमें होय अब इस बालककी राशिका अङ्कपरिमित दिन, मास वा वर्षमें अरिष्ट होती है ॥ २३ ॥ २४ ॥

बलेऽधिके दिनं मध्ये मासो हीने च हायनम् ।
लग्नस्य दक्षिणे वामे सन्मुखे ग्रहसंस्थिते ॥ २५ ॥

अर्थ–यदि पापग्रह दण्डके स्वामी होकर बलवान् होय तो अङ्कपरिमित दिनमें, मध्यबल होनेसे अङ्कसंख्याक मासमें और हीनबल होनेसे अङ्कसंख्याक

वर्षमें आरिष्ट प्रदान करते हैं लग्नमें वा लग्नके दक्षिणमें वा वाममें अथवा सन्मुखमें पापग्रह स्थित होनेसे वेध होता है, वेधस्थानमें जो अङ्क होय, उन्हीं अङ्कसंख्याक दिनमें, मासमें वा वर्षमें बालकको आरिष्ट होता है ॥ २५ ॥

कर्के मीनधनुर्भ्याञ्च हरेः कीटघटेन च।
स्त्रियास्तौलिमृगाभ्याञ्च घटे मीनेन कन्यया ॥ २६ ॥
वृश्चिके कलशे चैव पञ्चास्ये कलशे तथा।
धनुषो मृगकार्किभ्यां मकरे धनुषा स्त्रिया ॥ २७ ॥
घटस्य कीटसिंहाभ्यां मीलनं कथितं बुधैः।
मीने कार्कितुलाभ्याञ्च मीनस्त्रीधनुषा त्वजे ॥ २८ ॥
तुलाकार्किमृगैर्द्वन्द्वे हरेः कीटघटे वृषे।
सिंहवद्वेध एतेषु वामदक्षिणसन्मुखे ॥ २९ ॥

*अर्थ*-पताकी वेधमें किस २ राशिके साथ किस २ राशिका वेध होता है अब उसको कहते हैं यथा;-कर्कका मीन और धन राशिके साथ वेध होता है; इसीप्रकार सिंहका वृश्चिक और कुम्भके साथ, कन्याका तुला मकरके साथ, तुलाका मीन और कन्याके साथ, वृश्चिकका कुम्भ और सिंहके साथ, धनका मकर और कर्कके साथ, मकरका धन और कन्याके साथ, कुम्भका वृश्चिक और सिंहके साथ और मीनका कर्क और तुलाके साथ वेध ( मिलन ) होता है पण्डितगणने इसप्रकार कहा है। अपर मेष राशिका मीन, कन्या और धनके साथ वेध होता है, इसीप्रकार वृषका सिंह, कुम्भ और वृश्चिकके साथ मिथुनका कर्क, तुला और मकरराशिके साथ वेध होता है । सिंहराशिका जिस प्रकार वाममें, दक्षिणमें और सम्मुखमें वेध होता है अन्यान्य राशिकाभी उसी प्रकारसे वेध होता है ॥ २६-२९ ॥

पताकीचक्रस्य शुभाशुभविवेचनात्प्रमाणीभूताङ्कपरिमाणम्।

एकोनविंशतिः कर्के सिंहे सप्तदशैव तु।
षट्त्रिंशदबलायान्तु पञ्चविंशतिस्तुलाधरे ॥ ३० ॥
वृश्चिके सिंहवज्ज्ञेयमूनत्रिंशच्छरासने।
पञ्चविंशं मकरे ज्ञेयं कुम्भे सप्तदश स्मृताः ॥ ३१ ॥
नवयुग्मे तथा मीने मेषे षड्दश एव च।

**वृषे सप्तदश प्रोक्ता युग्मेऽङ्कहरलोचने ॥**
**त्रितयाङ्कादियं संख्या दिनमासाब्दनिर्णये ॥ ३२ ॥**

अर्थ-पताकी वेधचक्रमें पूर्वोक्त तीन २ राशिका वेध होनेसे उन तीनों राशियोंके अङ्कयोग करनेसे जो संख्या होती है उतने संख्यक दिनमें, वा मासमें अथवा वर्षमें बालकका अरिष्ट होता है। इन तीनों राशियोंके मिलनाङ्कोंमें जो जो संख्या होती है अब उनको कहते हैं। कर्कके १९ ऊनविंशति, सिंहके १७ सप्तदश, कन्याके ३६ षट्त्रिंशत्, तुलाके २६ षड्विंशति, वृश्चिकके. १७ सप्तदश, धनके २९ ऊनत्रिंशत्, मकरके २६ षड्विंशति, कुम्भके १७ सप्तदश, मीनके २९ ऊनत्रिंशत्, मेषके १६ षोडश, वृषके १७ सप्तदश, और मिथुनके ३९ ऊनचत्वारिंशत् अङ्क होते हैं ॥ ३०-३२ ॥

**एकाङ्काद्विग्रहाङ्काद्वात्रिग्रहांकाच्च कुत्रचित् ।**
**पापदण्डे भवेद्दोषः शुभदण्डे शुभं भवेत् ॥ ३३ ॥**

अर्थ-पूर्वोक्त समस्त राशिके अङ्क जोड करके किसी स्थानमें एक राशिके अङ्कमें किसी स्थानमें दो राशियोंके अङ्कमें जोड करके उसमें और किसी स्थानमें पूर्वोक्त मिलनाङ्क संख्यक मासादिमें पापग्रहके दण्डमें बालक उत्पन्न होनेसे अरिष्ट होता है और शुभ ग्रहके दण्डमें बालकका जन्म होनेसे शुभ होता है।३३।

अथ पताकीचक्रे ग्रहवेधफलम् ।

**राहुकेत्वर्कसौरारैः पापैर्विद्धो युतोऽशुभः ।**
**तदन्यैर्युतो विद्धस्तु लग्नराशिः शुभप्रदः ॥ ३४ ॥**

अर्थ-जात बालकके लग्नमें वा लग्नके वेधस्थानमें राहु, केतु, सूर्य, शनि वा मङ्गलके स्थित होनेसे उस बालकको अशुभ होता है; और उक्त समस्त ग्रहभिन्न शुभग्रह होनेसे शुभ फल प्राप्त होता है, परन्तु चन्द्रमामें वा चन्द्रमाके वेधस्थानमें अशुभ होनेसे अशुभ और शुभग्रह होनेसे शुभ फल होता है ॥ ३४ ॥

अन्यच्च ।

**अशुभे दण्डसंयोगे सर्वत्र पुण्यवर्जिते ।**
**बालस्य मरणं शीघ्रं यदि पापैः समन्वितम् ॥ ३५ ॥**

अर्थ-जन्मसमय दण्डका स्वामी यदि अशुभ ग्रह होय और उसीका वेध होय और वेधस्थानमें पाप ग्रह होय तो जातक बालककी शीघ्रही मृत्यु होती है ॥ ३५ ॥

अपरश्च ।

अशुभग्रहदण्डे तु सर्वत्र पापवर्जिते ।
बालस्य कुशलं सर्वं शुभैर्यदि समन्वितम् ॥ ३६ ॥

अर्थ--पापग्रहोंके दण्डमें जन्म होनेसेभी वेधस्थानमें शुभग्रह यदि होंय तब बालकको शुभ होताहै ॥ ३६ ॥

अपिच ।

अशुभो दण्डनाथो हि वेधश्चेत्तेन लभ्यते ।
मरणं तत्र वक्तव्यं बालस्य नान्यथा भवेत् ॥ ३७ ॥

अर्थ–दण्डका स्वामी यदि पाप ग्रह होय और वेधस्थानमें भी पापग्रह होय तो जात बालककी मृत्यु होती है ॥ ३७ ॥

प्रकारान्तरश्च ।

पापस्य दण्डमात्रे तु तद्योगो वेधवर्जिते ।
बालस्य कुशलं तत्र शुभैर्यदि समन्वितम् ॥ ३८ ॥

अर्थ–पापग्रहके दण्डमें जन्म होकर पापग्रहका वेध न होय और शुभ ग्रहके साथ दण्डके स्वामीका वेध होय तो जात बालकको शुभ होताहै ॥ ३८ ॥

इति पताकीवेधः ।

अथ पुरुषगणनम् ।

यस्मिनृक्षे वसेद्भानुस्तदाद्त्रीणि मस्तके ।
मुखे त्रीणि प्रदेयानि एकैकं स्कन्धदेशयोः ॥ ३९ ॥
द्वेद्वे देये च बाहुभ्यां हस्ताभ्याञ्च द्वयं तथा ।
हृदये पञ्च भानि स्युस्तथैकं नाभिमण्डले ॥ ४० ॥
गुह्ये स्यादेकनक्षत्रं जानुभ्याञ्च द्वयं तथा ।
प्रतिपादे द्वयं कृत्वा जानीयाद्बालजन्मनि ॥ ४१ ॥

इति सारसग्रहे ।

अर्थ–अब जात पुरुषके गिननेकी रीति कहते हैं । बालकके जन्म समय सूर्य जिस नक्षत्रमें स्थित होय उस नक्षत्रसे तीन नक्षत्रोंको जात मनुष्यके मस्तकमें जानना चाहिये, इसी प्रकार तिसके बाद तीन नक्षत्र मुखमें, दो नक्षत्र स्कन्ध-

देशमें चार नक्षत्र दोनों भुजाओंमें; दो नक्षत्र हाथमें, पांच नक्षत्र हृदयमें, एक नक्षत्र नाभिदेशमें, एक नक्षत्र गुदामें, दो नक्षत्र जानुमें और प्रत्येक पादमें दोदो नक्षत्र योजना करे ॥ ३९-४१ ॥



अथ अङ्गविशेषे जन्मनक्षत्रपतनफलम्।

स्वल्पायुः पादयोर्जातो जानुनि स्याद्विदेशगः।
परदाररतो गुह्ये नर्त्तको नाभिमण्डले ॥ ४२ ॥
हृदये त्वीश्वरो जातो हस्तयोश्चैव तस्करः।
बाह्वोर्जातः सुशीलः स्यात्स्कन्धयोर्नृपतिर्भवेत्।
मुखेजन्मी च मिष्टाशी शिरसि स्यात्स भूपतिः ॥ ४३ ॥

इति सारसंग्रहे।

अर्थ-जात पुरुषके अङ्गविशेषमें जन्मनक्षत्रपतनका फल कहते हैं। जन्मनक्षत्र पुरुषके दोनों पैरोंमें पडनेसे जात बालककी अल्पायु ( थोडीउम्र ) होती है; इसी प्रकार जानुदेशमें पडनेसे विदेशगामी, गुह्यमें पडनेसे परदारासक्त, नाभिदेशमें पडनेसे नर्त्तक, हृदयमें पडनेसे धनशाली, हाथमें पडनेसे तस्कर ( चोर ), भुजाओंमें पडनेसे सुशील, स्कन्ध देशमें पडनेसे नृपति, मुखमें पडनेसे मिष्टान्नभोक्ता, और जात पुरुषके मस्तकमें जन्मनक्षत्र पडनेसे जात बालक भूपति ( राजा ) होताहै ॥ ४२ ॥ ४३ ॥

इति पुरुषगणनम्।

अथ बालानां दन्तोद्गमफलम्।

जातः सदन्तः पितृमातृहन्ता
तातं विहन्यात्प्रथमे तु मासे ॥
अम्बां द्वितीये सहजं तृतीये
मासे चतुर्थे शुभकारकः स्यात् ॥ ४४ ॥

मिष्टान्नभोजी सुभगः सुताख्ये
षष्ठे सुखी पण्डितकल्पबुद्धिः ।
ततोऽधिकः स्याद्बलवान्धनाख्ये ( १ )
मासेऽष्टमे वित्तसुखैर्विहीनः ॥ ४५ ॥
शूरः प्रतापी नवमे मृत्युश्च दशमे तथा । ( २ )
एकादशे द्वादशे च सुखी च सुभगो भवेत् ॥ ४६ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-अब जात बालकके दाँत निकलनेका फल कहते हैं-यदि दाँतोंके साथ बालकका जन्म होय तो पिता और माताकी मृत्यु होती है, प्रथम महीनेमें दाँत निकलनेसे बालकके पिताकी मृत्यु होती है; इसी प्रकार दूसरे महीनेमें माताकी, तीसरे महीनेमें दाँत निकलनेसे भाईकी मृत्यु होती है, चौथे महीनेमें शुभ, पांचवें महीनेमें मिष्टान्नभोजन करनेवाला और धनशाली होता है छठे महीनेमें सुखी और पण्डितके समान, सातवें महीनेमें बलवान् और आठवें महीनेमें बालकके दाँत निकलनेसे द्रव्यहीन और सुखहीन होता है और नववें महीनेमें, दाँत निकलनेसे वीर और प्रतापशाली होता है. दशवें महीनेमें मृत्यु ग्यारहवें और बारहवें महीनेमें दाँत निकलनेसे सुखी और सुभोगी होता है ॥ ४४-४६ ॥

अशुभदन्तजननप्रतीकारः ।

अष्टौ पुत्तलकान्कृत्वा सुगन्धैर्गन्धकैस्तथा ।
स्नातस्सु संक्रमे चापि स्नापयेच्छुक्लपुष्पकैः ॥ ४७ ॥
स्नानं संक्रमणस्याधः शम्भोर्दर्शनमन्ततः ।
होमं विप्रार्चनञ्चैवमशुभे दन्तदर्शने ॥ ४८ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-अब अशुभ दाँतोंके निकलनेका प्रतीकार कहते हैं । सुगन्धित गन्ध-द्वारा आठ पुतलाओंको बनवाकर संक्रमण कालमें स्नान कियेहुए जलसे सफेद फूलोंके साथ इन पुतलाओंको स्नान करावे तदनन्तर महादेवजीका दर्शन होम और ब्राह्मणोंका पूजन करनेसेही अशुभ दाँतोंका दोष दूर होजाताहै ॥ ४७ ॥ ४८ ॥

( १ ) ततोऽधिकः स्याद्बलवान्गुणाढ्य. इति पाठः ।
( २ ) "शूरः प्रतापी नवमे च मासे मृत्युश्च दशमे तथैकादशे द्वादशे मासि सौख्य इष्टोऽपि शान्तः सुतगो भवेच्च ॥" इति ग्रन्थान्तरे पाठः ॥

अथारिष्टभङ्गयोगः ।

**एकोऽपि केन्द्रभवने नवपञ्चमे वा**
**भास्वन्मयूखविमलीकृतदिग्विभागः ।**
**निःशेषदोषमपहृत्य शुभं प्रसूतं**
**दीर्घायुषं विगतरोगभयं करोति ॥ ४९ ॥ ( क )**

अर्थ-अब अरिष्टभङ्गयोग कहते हैं. अस्तादिदोषरहित कोई एक शुभग्रह यदि जन्मलग्नमें वा लग्नके चौथे, सातवें, दशवें, नववें, अथवा पांचवें स्थानमें स्थित होय तो जात बालकके समस्त अरिष्ट दूर होकर दीर्घायु और रोगभयप्रवृत्ति दूर होते हैं कोई २ आचार्य कहते हैं कि, केवल बृहस्पति उक्त समस्त स्थानोंमें रहनेसेभी यही फल होता है ॥ ४९ ॥

अन्यच्च ।

**राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सद्यः ।**
**नाशयति सर्वदुरितं मारुत इव तृणसंघातम् ॥ ५० ॥**

अर्थ-जन्मलग्नसे तीसरे,छठे वा ग्यारहवें यदि राहु होय और राहुपर शुभग्रहोंकी दृष्टि होय तो वायु जिस प्रकार तृणको दूर करदेती है उसी प्रकार जात बालकके सर्व दोष दूर होजाते हैं ॥ ५० ॥

**दिवा सूर्यो निशि शशी लग्नस्यैकादशे स्थितः ।**
**कोटिदोषं निहन्त्याशु गर्गस्य वचनं यथा ॥ ५१ ॥**

अर्थ-दिनमें जन्म होनेसे बालकके जन्मलग्नसे ग्यारहवें स्थानमें सूर्य और रात्रिमें जन्म होनेसे बालकके जन्मलग्नसे ग्यारहवें स्थानमें चन्द्रमाके स्थित होनेसे कोटि दोष यह सूर्य और चन्द्रमा दूर करदेते हैं; इस प्रकार गर्गमुनिने कहाहै ॥ ५१ ॥

---

(क) उक्तानां सर्वेषामरिष्टानां भङ्गमाह-एकोऽपीति । एकोऽपि शुभो गुरुर्वा शुक्रो वा बुधो वा भास्वन्मयूखविमलीकृतदिग्विभागः स्फुटकिरणप्रकाशीकृतदिग्विभागः । केन्द्रस्थो नवपञ्चमस्थो वा यदा भवेत् तदा निःशेषदोषं सर्वारिष्टं मपहृत्य दूरीकृत्य प्रसूतं जातं दीर्घायुषं विगतरोगभयं करोति । केचित्तु एकः शुभो गुरुरेवेत्याहुस्तदसत् एकपदस्य वैयर्थ्यादपि शब्दस्वरसाच्च । यत्तु सारावल्याम् । "सर्वानिमानतिबलः स्फुरदंशुजालो लग्नोपगः प्रशमयेत्सुरराजमन्त्री" इति । तदेकदेशकीर्तनपरमिति । अन्येरिष्टभङ्गाः सारावल्यामुक्ताः । राहुस्त्रिषष्ठलाभे लग्नात्सौम्यैर्निरीक्षितः सद्यः । नाशयति सर्वदुरितं मारुत इव तृणसंघातम् । शीर्षोदयेषु सर्वेगगनाधिवासिभिः सूते । प्रकृतिस्थैश्चारिष्टं विनीयते घृतमिवाग्निस्थम् ॥ " इति । प्रकृतिस्थैरविकृतैरस्तादिदोषरहितैरित्यर्थः ।

चन्द्रः सम्पूर्णतनुः सौम्यर्क्षगतः स्थितश्च शुभस्यांशे ।
प्रकरोत्यरिष्टभङ्गं विशेषतः शुक्रसंदृष्टः ॥ ५२ ॥

अर्थ-चन्द्रमा यदि जन्मसमयमें पूर्णरूपसे शुभग्रहके क्षेत्रमें होय वा शुभग्रहके अंशमें स्थित होय और शुभग्रहकी चन्द्रमापर दृष्टि होय तो निश्चयही अरिष्टभङ्ग होजाताहे ॥ ५२ ॥

सौम्यद्वयान्तर्गतः संपूर्णः स्निग्धमण्डलः शशभृत् ।
निःशेषरिष्टहन्ता भुजङ्गलोकस्य गरुड इव ॥ ५३ ॥

अर्थ-स्निग्धशील सम्पूर्ण चन्द्रमा यदि जन्मसमयमें दो शुभग्रहोंके मध्यमें स्थित होय तो गरुड जिस प्रकार नागोंका नाश करताहे उसी प्रकार जात बालकके संपूर्ण अरिष्ट चन्द्रमा विनाश करदेताहे ॥ ५३ ॥

शुक्रः पञ्चसहस्राणि बुधः पञ्चशतानि च ।
लक्षमेकन्तु दोषाणां हन्याचैवोदितो गुरुः ॥ ५४ ॥

अर्थ-शुक्रके पांच हजार दोष दूर होते हैं, बुधके पांचसौ दोष दूर होजाते हैं और बृहस्पतिके उदयकालमें लाख दोष दूर होजाते हैं ॥ ५४ ॥

सप्ताष्टमषष्ठाः शशिनः सौम्या घ्नन्ति कष्टफलम् ।
पापैरमिश्रचाराः कल्याणघृतं यथोन्मादम् ॥ ५५ ॥

अर्थ-जन्मसमय चन्द्रमाके सातवें आठवें और छठे स्थानमें यदि शुभ ग्रहगण स्थित होय तो कल्याणघृत जिस प्रकार उन्मादको नष्ट करताहे उसी प्रकार जात बालकके अरिष्टोंका नाश होजाताहे ॥ ५५ ॥

( १ ) कण्टकस्थो यदा जीवः सप्तमे यदि भार्गवः ।
बुधे च लग्नसंप्राप्ते शतं जीवति बालकः ॥ ५६ ॥

अर्थ-जन्मसमय लग्नके केन्द्रस्थानमें बृहस्पति सातवें स्थानमें शुक्र और बुध लग्नस्थानमें स्थित होय तो जातबालक सौवर्षतक जीताहे ॥ ५६ ॥

तृतीयैकादशे चैव नवमे पञ्चमे भृगौ ।
समसप्त गते जीवे जीवेदब्दशतं नरः ॥ ५७ ॥ ( २ )

अर्थ-जन्मलग्नके तीसरे, ग्यारहवें, नवें वा पांचवें शुक्र और समराशिगत होकर यदि बृहस्पति सातवें होय तो जात बालक सौवर्षतक जीताहे ॥ ५७ ॥

( १ ) कर्कटस्थः । इति पाठान्तरम् ।
( २ ) समराशौ यदि सप्तमः स्यात्तस्मिन्गते जीव इत्यर्थः ॥

सर्वैर्गगनभ्रमणैर्दृष्टे लग्ने भवेन्महीपालः ।
बलिभिः समस्तसौख्यो विगतभयो दीर्घजीवी च ॥ ५८ ॥

अर्थ-जन्मसमय समस्त बलवान् ग्रहोंकी दृष्टि लग्नपर होनेसे जातबालक राजा होताहै, और सर्व प्रकारके सुखोंका भोगनेवाला भयहीन और दीर्घजीवी होता है ॥ ५८ ॥

बुधो वा भार्गवो वापि गुरुर्वा केन्द्रसंस्थितः ।
शतायुर्बलवान्विज्ञो जातो गोत्राधिपो भवेत् ॥ ५९ ॥

अर्थ-बुध, शुक्र वा बृहस्पति यदि जन्मलग्नके केन्द्रस्थानमें स्थित हो तब जात बालक विज्ञ और गोत्राधिपति होकर सौवर्षपर्यंत जीता है ॥ ५९ ॥

चन्द्रं पश्येद्यदा शुक्रः शुक्रं पश्येद्दिवाकरः ।
दीर्घायुः स्वगुणैश्वर्यो धनवांश्चोपजायते ॥ ६० ॥

अर्थ-जन्मसमयमें शुक्र यदि चन्द्रमाको देखे और सूर्य शुक्रको देखता होय तो जात बालक दीर्घायुष्मान् और अपने गुणोंसे ऐश्वर्यशाली और धनवान् होता है ॥ ६० ॥

नवमस्थौ गुरुभृगू सप्तमस्थः कुजो यदि ।
बुधे लग्नगते चैव दीर्घायुश्च भवेत्तदा ॥ ६१ ॥

अर्थ-जन्मलग्नके नवमें स्थानमें बृहस्पति और शुक्र सातवें स्थानमें मङ्गल और बुध लग्नमें स्थित होनेसे जात बालककी दीर्घायु होती है ॥ ६१ ॥

गुरुर्लग्ने तथा शुक्रः समसप्तगतो बुधः ।
चन्द्रश्चैकादशे केन्द्रे आयुः सत्यो जितेन्द्रियः ॥६२॥ (*)

अर्थ-जन्मलग्नमें बृहस्पति और शुक्र समराशिस्थ स्थित सातवें स्थानमें बुध और ग्यारहवें वा केन्द्रस्थानमें चन्द्रमाके होनेसे जात बालक दीर्घायुयुक्त सत्यवादी और जितेन्द्रिय होता है ॥ ६२ ॥

गुरुशुक्रौ शुभैर्दृष्टौ भवेतां केन्द्रगौ यदा ।
तदा रिष्टानि भज्यन्ते दीर्घायुश्च नरो भवेत् ॥ ६३ ॥

अर्थ-जन्मसमय बृहस्पति और शुक्र लग्नके केन्द्रस्थानमें स्थित हों और उनपर शुभ ग्रहोंकी दृष्टि होय तो जात बालकके समस्त अरिष्ट दूर होकर दीर्घायु होता है ॥ ६३ ॥

(*) एकादश इति रात्रिजातपरम् । "दिवा सूर्यो निशि शशी लग्नस्थैकादशे स्थितः" इति वचनात् ।

नवपञ्चमगो जीवो भृगुः सप्तमगो यदा ।
बुधो लग्नगतश्चैव सुदीर्घायुस्तदा भवेत् ॥ ६४ ॥

अर्थ-लग्नके नवें पांचवें वा सप्तमराशिगत बृहस्पति वा शुक्र और लग्नस्थ बुध होनेसे जातबालक दीर्घायु होता है ॥ ६४ ॥

निधनारिगते चन्द्रे लग्नात्सञ्जायते यदि ।
अथ केन्द्रगते जीवे जीवेदब्दशतं नरः ॥ ६५ ॥

अर्थ-जन्मलग्नसे आठवें वा छठे चन्द्रमा और केन्द्रस्थानमें बृहस्पतिके होनेसे जात बालककी शतवर्षकी आयु होती है ॥ ६५ ॥

समस्तैर्बलिभिः सौम्यैर्लग्नं यदि समीक्षते ।
तदा विगतभीर्नूनं दीर्घजीवी च जायते ॥ ६६ ॥

अर्थ-जन्मसमय बलवान् समस्त शुभग्रह यदि लग्नको सम्यक् प्रकारसे देखते हों तो जात बालक भयहीन और दीर्घजीवी होता है ॥ ६६ ॥

लग्नात्षष्ठाष्टगाः सौम्याः पापैरयुतवीक्षिताः ।
जनयन्ति हि निर्भीतिं नीरोगं दीर्घजीविनम् ॥ ६७ ॥

अर्थ-जन्मलग्नके छठे वा आठवें स्थानमें शुभग्रहगण होय और पापग्रहके साथ न होय अथवा पापग्रहकी उनपर दृष्टि न होय तो जात बालक निर्भय निरोगी और दीर्घजीवी होता है ॥ ६७ ॥

उच्चस्थोऽपि यदा चन्द्रो गुरुभौमयुतो यदि ।
धनवान्गुणसम्पन्नो दीर्घायुर्मन्त्रविन्नरः ॥ ६८ ॥

अर्थ-जन्मसमय यदि बृहस्पति और मङ्गलके साथ चन्द्रमा अपने उच्च स्थानमें वास करता होय तो जात बालक धनाढ्य गुणवान् दीर्घायुसम्पन्न और मन्त्रज्ञ होता है ॥ ६८ ॥

*अथ गुरुचन्द्रयोगः ।*

गुरुक्षेत्रगते चन्द्रे चन्द्रक्षेत्रगते गुरौ ।
गुरुचन्द्रो भवेद्योगो देवानामपि दुर्लभः ॥ ६९ ॥

अर्थ-जन्मसमय बृहस्पतिके क्षेत्रमें ( धन वा मीनमें ) यदि चन्द्रमा होय और चन्द्रमाके क्षेत्रमें ( कर्कराशिमें ) बृहस्पति होय तो उसको गुरुचन्द्रयोग कहते हैं यह योग देवताओंकोभी दुर्लभ होता है ॥ ६९ ॥

अथ जीवयोगः ।

जीवात्सप्तमगश्चन्द्रोऽप्यथवा जीवसंयुतः ।
जीवयोगोऽयमित्याहुर्ज्योतिःशास्त्रपरायणाः ॥ ७० ॥

अर्थ-जन्मसमय बृहस्पतिसे सातवें स्थानमें चन्द्रमा अथवा बृहस्पतियुक्त होय तब उसको ज्योतिर्विद पण्डितगण जीवयोग कहते हैं ॥ ७० ॥

अथ जीवयोगफलम् ।

बहुविभवपरिच्छदोऽथ भोक्ता गुणपरिपूर्णोनृपपूजितः ।
बहुयुवतिरतोऽथ दानशीलो भवति चिरायुर्नरो जीवयोगे॥७१॥

अर्थ-जीवयोगमें मनुष्य उत्पन्न होनेसे अत्यन्त धनवान् परिच्छद ( वस्त्रभूषणादि ) सम्पन्न, भोक्ता गुणवान् राजसन्मानित अनेक युवतियोंके साथ प्रीति रखनेवाला दानशील और दीर्घायुयुक्त होता है ॥ ७१ ॥

इति जीवयोगफलम् ।

अपिच ।

सकलरिपुनिहन्ता सर्वसौख्योपभोक्ता
सकलगुणनिधिः स्यात्सर्वलोकप्रियो हि ॥
सकलकलुषहीनः सर्वविद्यासमर्थो
भवति गुणनिधानो जीवदृष्टे हिमांशो ॥ ७२ ॥

अर्थ-जन्मसमय चन्द्रमापर बृहस्पतिकी दृष्टि होनेसे जातबालक समस्त शत्रुओंका नाश करनेवाला, समस्त सुखोंका उपभोक्ता,सर्व गुणोंका आधार, समस्त लोकका प्रियपात्र, सर्व प्रकारके पापोंसे रहित और सर्वविद्याओंका जाननेवाला होता है ॥ ७२ ॥

अन्यच्च ।

तुङ्गी त्रिकोणी स्वगृही च जीवो युतो भवेद्वा यदि चन्द्रदृष्टः ।
तदा सुवीर्यः सुमतिः सुमूर्तिर्भवेन्नरोऽसौ गजवाजिपूर्णः ॥७३॥

अर्थ-जन्मसमयमें बृहस्पति चन्द्रमाके साथ होय वा बृहस्पतिपर चन्द्रमाकी दृष्टि होकर यदि तुङ्गस्थ, त्रिकोण ( नवें वा पांचवें ) हो, अथवा अपने घरमें ( धन वा मीनमें ) स्थित होय तो जातबालक अत्यन्त बलवान्, सुबुद्धिसम्पन्न, सुन्दराङ्गयुक्त और हाथी घोडा आदिका स्वामी ( मालिक ) होता है ॥ ७३ ॥




अपरश्च ।

**यत्र यत्र स्थितो भौमो गुरुणापि समन्वितः ।**
**तत्रोच्चं फलमाप्नोति स्यादुच्चे त्रिगुणं फलम् ॥**

अर्थ-जन्मसमय मंगल बृहस्पतिके साथ होकर जिस किसी राशिमें स्थित होय उसमेंही उच्चफल प्रदान करता है; और यदि बृहस्पतिके साथ उच्चस्थानमें स्थित होय तो उक्त फलका तिगुना फल होता है ॥ ७४ ॥

इति रिष्टभगयोगः ।

अथ दारिद्र्ययोगः ।

**लग्नस्य दशमे शून्ये खेरेकादशे तथा ।**
**चन्द्रस्य चाष्टमे शून्य त्रिशून्ये च दरिद्रता ॥ ७५ ॥**

अर्थ-अब दारिद्रयोग कहते हैं । यदि जन्मलग्नसे दशवें स्थानमें सूर्यसे ग्यारहवें स्थानमें और चन्द्रमासे आठवें स्थानमें यदि शून्य होय अर्थात् कोई ग्रह स्थित न होय तो जातमनुष्य दरिद्र होता है ॥ ७५ ॥

अन्यच्च ।

**शशिना सहितो मन्दः शुक्रभौमयुतो यदि ।**
**तेन दारिद्र्ययोगेन समुद्रमपि शोषयेत् ॥ ७६ ॥**

अर्थ-जन्मकालमें शनि ग्रह शुक्र, मङ्गल और चन्द्रमाके साथ होनेसे जात बालकका दारिद्र्ययोग होताहै उस दारिद्र्ययोगसे समुद्रभी सूख जाता है भावार्थ यह कि, ऐसे योगसे अतुलधनकाभी नाश होजाताहै ॥ ७६ ॥

अथ वंशनाशयोगः ।

**रविणा सहितो मन्दो राहुयुक्तो भवेद्यदि ।**
**वंशनाशकरो योगः कथितो मुनिपुङ्गवैः ॥ ७७ ॥**

अर्थ-अब वंशनाशक योग कहते हैं जन्मसमयमें यदि सूर्य, शनि और राहु एक राशिमें स्थित होंय तो जात मनुष्यका वंश नाश होजाताहै ॥ ७७ ॥

अथ वृक्षमरणयोगः ।

**सितासितगृहे भानुर्यदा मदनमृत्युगः ।**
**सितभौमार्किभिर्दृष्टो वृक्षान्मरणमादिशेत् ॥ ७८ ॥**

अर्थ-जन्मसमय सूर्य यदि शुक्र वा शनिके क्षेत्रमें स्थित होकर लग्नके सातवें

वा आठवें स्थानमें होय और उसके ऊपर शुक्र मङ्गल और शनैश्चरकी दृष्टि होय तो जात मनुष्यकी वृक्षपरसे गिरकर मृत्यु होती है ॥ ७८ ॥

अथ शून्यमृत्युयोगः ।

**लग्नपो धर्मपो नीचे दृश्यते च सुरारिणा ।**
**नेक्षते लग्नपो धर्ममाकाशे मरणं भवेत् ॥ ७९ ॥**

अर्थ–जन्मसमय यदि लग्नाधिपति और नवमाधिपति नीच घरमें स्थित होय और राहुकी इन दोनों ग्रहोंके ऊपर दृष्टि होय और लग्नाधिपति धर्मस्थानको न देखता होय तो जातमनुष्यकी आकाशमण्डलमें मृत्यु होती है ॥ ७९ ॥

अथ वर्त्ममृत्युयोगः ।

**लग्नपो व्ययपो नीचे नीचस्थग्रहवीक्षिते ।**
**नेक्षते लग्नपो लग्नं मृत्युः स्यात्पथि बन्धने ॥ ८० ॥**

अर्थ–जन्मसमय लग्नाधिपति और द्वादशाधिपति नीचस्थानमें स्थित हों और नीच स्थानमें स्थित ग्रहोंकी दृष्टि होय और लग्नाधिपति लग्नस्थानको न देखता होय तो जातमनुष्यकी मार्गमें बन्धनरूपसे मृत्यु होती है ॥ ८० ॥

अन्यच्च ।

**चरे च निधने तीर्थे स्थिरे च भृगुमण्डले ।**
**द्व्यात्मके लग्नसंयोगे म्रियते हट्टवर्त्मनि ॥ ८१ ॥**

अर्थ–चरराशिमें निधनस्थान होनेसे तीर्थ स्थानमें मृत्यु होती है स्थिर राशि आठवें होनेसे ऊँचे स्थानपरसे गिरकर मृत्यु होतीहै और द्व्यात्मक राशि मृत्यु स्थानमें होनेसे बजारमें वा मार्गमें मृत्यु होती है ॥ ८१ ॥

अथ नौकामृत्युयोगः ।

**लग्नपो धर्मपो द्वौ तु भवेतां पापसंयुतौ ।**
**नेक्षते मृत्युपो मृत्युं नौमध्ये मरणं भवेत् ॥ ८२ ॥**

अर्थ–जन्मसमय लग्नाधिपति और नवमाधिपति यदि पापग्रहोंके साथ होय और अष्टमाधिपति अष्टमस्थानको न देखता होय तो जात मनुष्यकी नौकामें मृत्यु होती है ॥ ८२ ॥

अथ कारागारेमृत्युयोगः।

**लग्नपो धर्मपो नीचे रिपुयुक्तो भवेद्यदि।**
**नेक्षते मृत्युपो मृत्युं कारागारे मृतिर्भवेत् ॥ ८३ ॥**

अर्थ-जन्मसमय लग्नका स्वामी और नववें स्थानका स्वामी नीच घरमें रहकर पाप ग्रहोंके साथमें होय और आठवें स्थानका स्वामी आठवें घरको न देखता होय तब जात मनुष्यकी कारागार ( जेलखाना ) में मृत्यु होती है ॥ ८३ ॥

अथ गृहे मृत्युयोगः।

**लग्नपो बन्धुपो वापि युतो दृष्टोऽथ खेचरैः।**
**नेक्षत मृत्युपो मृत्युं गृहमध्ये मृतिर्भवेत् ॥ ८४ ॥**

अर्थ-जन्मसमय लग्नका स्वामी और चौथे स्थानका स्वामी यदि शत्रु ग्रहके साथ हो वा उनपर शत्रुग्रहोंकी दृष्टि होय और आठवें स्थानका स्वामी आठवें स्थानको न देखता होय तो जात मनुष्यकी घरमें मृत्यु होती है ॥ ८४ ॥

अथ सपत्नीकमृत्युयोगः।

**जायेशो मृत्युपो द्वौ तु राशावेकत्र संस्थितौ।**
**मृत्युपो वीक्षते लग्नं म्रियते भार्यया सह ॥ ८५ ॥**

अर्थ-सातवें स्थानका मालिक और आठवें स्थानका मालिक यदि जन्मसमय एक राशिमें स्थित होय और आठवें स्थानका मालिक यदि लग्नको देखता होय तो जात मनुष्यकी भार्या ( स्त्री ) के साथ मृत्यु होती है ॥ ८५ ॥

अपिच।

**लग्नपः स्मरपश्चापि मृत्यौ स्यातामुभौ यदि।**
**स्थितौ द्रेक्काण एकस्मिन्म्रियते भार्यया सह ॥ ८६ ॥**

अर्थ-जन्मसमयमें लग्नका मालिक और सातवें स्थानका मालिक यदि आठवें स्थानके एक द्रेक्काणमें स्थित होय तो जात मनुष्यकी स्त्रीके साथ मृत्यु होती है ॥ ८६ ॥

अन्यच्च।

**मृत्युपो लग्नपश्चापि लग्ने स्यातामुभौ यदि।**
**स्थितौ द्रेक्काण एकस्मिन्म्रियते भार्ययासह ॥ ८७ ॥**

अर्थ-जन्मसमय यदि आठवें स्थानका मालिक और लग्नका मालिक जन्मलग्नके एक द्रेक्काणमें स्थित हों तो जात मनुष्यकी स्त्रीके साथ मृत्यु होनीहै८७॥

अपरश्च ।

**द्व्यात्मकं निधनं यस्य युग्मके निधनेश्वरः ।**
**सह मृत्युं व्रजेदेव नारी चेद्व्यभिरिणी ॥ ८८ ॥**

अर्थ-जात मनुष्यका यदि आठवाँ स्थान द्व्यात्मक लग्न होय और युग्मराशिमें आठवें स्थानका मालिक स्थित होय तब जात मनुष्यकी भार्या व्यभिचारीणी होनेसेभी पतिके साथ मृत्युको प्राप्त होती है ॥ ८८ ॥

प्रकारान्तरश्च ।

**चन्द्रात्सप्तमगः पापो यस्याः शुभयुतो भवेत् ।**
**सा तु नीचगृहस्था स्यान्म्रियते पतिना सह ॥ ८९ ॥**

अर्थ-जन्मकालमें चन्द्रमाके सातवें स्थानमें स्थित पाप ग्रह यदि शुभग्रह युक्त होय तो जात स्त्री नीच जातिकीभी होनेसे पतिके साथ मृत्युको प्राप्त होती है ॥ ८९ ॥

अथ तीर्थमृत्युयोगः ।

**धर्माधिपः पश्यति धर्मभावं लग्नाधिपः पश्यति लग्नभावम् ।**
**मृत्युं यदा पश्यति मृत्युनाथस्तदा सुतीर्थे नियतं मृतिः स्यात् ९० ॥**

अर्थ-जन्मसमय लग्नके नववें स्थानका मालिक ग्रह यदि धर्मभावको देखै लग्नका मालिक ग्रह यदि लग्नभावको देखै और आठवें स्थानका मालिक यदि आठवें स्थानको देखता होय तो जात मनुष्यकी निश्चयसे तीर्थमें मृत्यु होती है ९०

**उच्चगेहगते चन्द्रे दशमे जीववीक्षिते ।**
**मृत्यौ शुक्रे धने जीवे मृत्युस्तीर्थजलाशये ॥ ९१ ॥**

अर्थ-जन्मसमय चन्द्रमा यदि उच्च स्थानमें स्थित होय और बृहस्पति दशवें स्थानको देखता होय अथवा आठवें स्थानमें शुक्र और धन ( दूसरे ) स्थानमें बृहस्पति स्थित होय तो जात मनुष्यकी तीर्थजलमें मृत्यु होती है ॥ ९१ ॥

**निधनं गुरुणा युक्तं गुरुणा दृश्यतेऽथवा ।**
**एवं भृगुसुतेनापि तीर्थे च मरणं भवेत् ॥ ९२ ॥**

अर्थ-जन्मलग्नके आठवें स्थानमें यदि बृहस्पति वा शुक्र स्थित हो अथवा बृहस्पति वा शुक्रकी दृष्टि होय तो जात मनुष्यकी तीर्थस्थानमें मृत्यु होती है ९२

**येषां गुरुर्भृगुसुतः शशिनः क्षपेशो**
**दुश्चिक्यधर्मनिधनाधिपतिं प्रपश्येत् ।**

तेषामनन्तधनधर्मसुखानि नित्यं
दीर्घायुरन्तसमये खलु तीर्थलाभः ॥ ९३ ॥

अर्थ-जन्मसमय जिस मनुष्यकी लग्नके तीसरे स्थानमें और नववें स्थानमें बृहस्पति, शुक्र, बुध और चन्द्रमा स्थित होय अथवा आठवें स्थानके मालिकको यह समस्त ग्रह देखतेहों तो वह मनुष्य सर्वदा अत्यन्त धनका मालिक और अनेक प्रकारके धर्म कार्य कर दीर्घायु लाभकरके अन्तसमयमें तीर्थलाभ करता है ॥ ९३ ॥

आनृण्यं पितुरादत्ते तीर्थे मरणमेव च ।
नयेत्पितृकुलं पुण्यं बन्धुगे भृगुनन्दने ॥ ९४ ॥

अर्थ-जन्मसमयमें शुक्र लग्नके तीसरे चौथे स्थानमें होनेसे वह मनुष्य पिताको अनृणी करके पितृकुलका उद्धार करता है और उसकी तीर्थमें मृत्यु होती है ९४ ।

निधननिधननाथो धर्मपो मृत्युपो वा
शुभखगभवनस्थो यस्य वापि प्रपश्येत् ।
निवसति बहुकालं मानयुक्तः सुतीर्थे
विसृजति निजदेहं रामनाम प्रजल्पन् ॥ ९५ ॥

अर्थ-जिस मनुष्यके जन्मलग्नके आठवें स्थानमें आठवें स्थानका मालिक होय अथवा नववें स्थानका मालिक और आठवें स्थानका मालिक शुभग्रहके क्षेत्रमें स्थित हों वा देखतेहों तो वह मनुष्य चिरकालमें सन्मानके साथ तीर्थमें वासकरके रामनामका जप करते करते तीर्थस्थानमें ही प्राणको छोड देता है ॥९५॥

विधुर्वा सागरे यस्य कुजो वा यस्य युग्मके ।
निधनं पुण्यतीर्थेषु निधनेशो भवेद्यदि ॥ ९६ ॥

अर्थ-जन्मसमय चन्द्रमा यदि चौथे स्थानमें होय अथवा मङ्गल युग्मराशिमें स्थित होय और मृत्युका मालिक यदि मृत्युस्थानमें होय तो जात मनुष्यकी तीर्थस्थानमें मृत्यु होती है ॥ ९६ ॥

दशमे रविणा सौम्ये द्वितीये जीवसंयुते ।
मृत्युपो लग्नपो लग्ने मृतिस्तीर्थे निरामये ॥ ९७ ॥

अर्थ-जन्मलग्नके दशवें स्थानमें सूर्यके साथ बुध और दूसरे स्थानमें बृहस्पति होनेसे और आठवें स्थानका मालिक और लग्नका मालिक लग्नमें स्थित होनेसे जात मनुष्यकी तीर्थ स्थानमें मृत्यु होती है ॥ ९७ ॥

मृत्यो दृष्टे जीवशुक्रे लग्ने च सूर्यनन्दने ।
धर्मेशो वीक्षते लग्नं ब्रह्मपुत्रे मृतिर्भवेत् ॥ ९८ ॥

अर्थ-जन्मलग्नके आठवें स्थानमें यदि बृहस्पति और शुक्रकी दृष्टि होय और शनैश्चर लग्नके होय और नववें स्थानका मालिक लग्नको देखता होय तो जातमनुष्यकी ब्रह्मपुत्रमें मृत्यु होती है ॥ ९८ ॥

लग्नेशे ग्रहसंयुक्ते मृत्युस्थे रजनीकरे ।
जीवक्षेत्रगते मृत्यौ मृत्युः पुष्करसंज्ञिते ॥ ९९ ॥

अर्थ-जन्मलग्नका मालिक यदि अन्यग्रहके साथमें होय और चन्द्रमा आठवें स्थानमें होय और आठवाँ बृहस्पतिका क्षेत्र होय तो जातमनुष्यकी पुष्कर तीर्थमें मृत्यु होती है ॥ ९९ ॥

चरे यदि स्यान्निधनाधिनाथस्तस्याधिपः पश्यति चेद्विलग्नम् ।
तदा सुतीर्थे नियतश्च मृत्युर्धर्माधिपः पश्यति धर्मभावम् ॥ १०० ॥

अर्थ-जन्मसमयमें यदि लग्नके आठवें स्थानका मालिक चर राशिमें होय और लग्नके मालिककी लग्नपर दृष्टि होय और नववें स्थानका मालिक नववें स्थानको देखता होय तो जातमनुष्यकी निरन्तर सुन्दर तीर्थमें मृत्यु होती है ॥ १०० ॥

अथ गङ्गामृत्युयोगः ।

त्रयो ग्रहा यदेकत्र लग्नराशिविवर्जिताः ।
भुक्त्वा च विविधान्भोगान्म्रियते जाह्नवीजले ॥ १ ॥

अर्थ-यदि किसी मनुष्यके जन्मसमय लग्न और राशि भिन्न किसी घरमें तीन ग्रहोंका वासस्थान होय तो वह मनुष्य अनेक प्रकारके भोगोंसे काल व्यतीत करके अन्तसमयमें गङ्गाजीके जलमें उसका मृत्यु होता है ॥ १ ॥

वृषे सूर्ये गुरौ धर्मे लग्नस्थे दैत्यपुङ्गवे ।
मृत्यौ सौम्येक्षिते युक्ते म्रियते जाह्नवीजले ॥ २ ॥

अर्थ-जन्मसमय वृषराशिमें सूर्य, लग्नके नववें स्थानमें बृहस्पति, लग्नमें शुक्र और आठवें स्थानमें बुधकी दृष्टि वा बुधयुक्त होनेसे जातमनुष्यकी गङ्गाजलमें मृत्यु होती है ॥ २ ॥

चन्द्रे कुंभे हरौ लग्ने भौमक्षेत्रे बृहस्पतौ ।
मृत्युपापेक्षिते धर्मे म्रियते जाह्नवीजले ॥ ३ ॥

अर्थ-जिसका सिंहराशिमें जन्म होय उन मनुष्यके जन्म समय यदि चन्द्रमा

कुम्भराशिमें और बृहस्पति मङ्गलके घरमें स्थित होय और आठवें स्थानका मालिक यदि नववें स्थानको देखता होय तो जात मनुष्यकी मृत्यु गंगाजलमें होती है ॥ ३ ॥

गुरुणा सहिते चन्द्रे मृत्यौ दृष्टे शुभग्रहे ।
लग्नपो मृत्युपो धर्मे म्रियते जाह्नवीजले ॥ ४ ॥

अर्थ-जन्मसमयमें बृहस्पति और चन्द्रमाका एक घरमें वासस्थान होय और आठवें स्थानमें शुभग्रहोंकी दृष्टि होय और लग्नका मालिक और आठवें स्थानका मालिक नववें स्थानमें स्थित होय तो जात मनुष्यकी गङ्गाजलमें मृत्यु होती है४॥

केन्द्रगौ गुरुशुक्रौ तु मृत्यौ दृष्टे शुभग्रहे ।
चरेऽष्टमे गुरौ युक्ते म्रियते जाह्नवीजले ॥ ५ ॥

अर्थ-जन्मसमय यदि लग्नके केन्द्रस्थानमें बृहस्पति और शुक्र स्थित होय और आठवें स्थानमें शुभग्रहोंकी दृष्टि होय अथवा मृत्यु स्थान यदि चरराशि होय और उसमें बृहस्पति स्थित होय तो इस मनुष्यकी गङ्गाजलमें मृत्यु होती है ॥ ५॥

गुरुणा सहितश्चन्द्रो लग्नपो यदि पुण्यगः ।
स्मरपो व्ययपो लाभो मृत्युः स्याज्जाह्नवीजले ॥ ६ ॥

अर्थ-जन्मसमयमें यदि बृहस्पति और चन्द्रमा एक घरमें होय, लग्नका मालिक नववें स्थानमें स्थित होय और सातवें स्थानका मालिक और बारहवें स्थानका मालिक ग्यारहवें स्थानमें स्थित होय तो जात मनुष्य गङ्गाजलमें प्राण त्याग करताहै ॥ ६ ॥

लग्नपः पुण्यपश्चापि मृत्यौ स्यातामुभौ यदि ।
स्थितौ द्रेक्काण एकस्मिन्म्रियते जाह्नवीजले ॥ ७ ॥

अर्थ-जन्मकालमें लग्नका मालिक और नववें स्थानका मालिक यदि आठवें स्थानमें एक द्रेक्काणमें स्थित हों तब जात मनुष्यकी गङ्गाजलमें मृत्यु होती है॥७॥

स्वोच्चस्थे शुक्रजीवे तु द्वादशे भूमिजे गुरौ ।
लग्ने वा शुक्रजीवे तु म्रियते जाह्नवीजले ॥ ८ ॥

अर्थ-जन्मसमय शुक्र और बृहस्पति यदि उच्चस्थानमें हों अथवा बारहवें स्थानमें मंगल और बृहस्पति होय वा लग्नमें शुक्र और बृहस्पति स्थित होयँ तो जात मनुष्यकी गंगाजलमें मृत्यु होती है ॥ ८ ॥

लग्ने शुक्रे स्मरे जीवे धर्मस्थे रजनीकरे ।
मृत्युं पश्यति लग्नेशो म्रियते जाह्नवीजले ॥ ९ ॥

अर्थ-जन्मसमय लग्नमें शुक्र, सातवें बृहस्पति और नववें स्थानमें चन्द्रमा होय और लग्नका मालिक मृत्यु स्थानको देखता हो तो जात मनुष्यकी गङ्गा-जलमें मृत्यु होती है ॥ ९ ॥

धर्मे गुरौ सचन्द्रे च मृत्युपो वीक्षते मृतम् ।
दशमे जीवशुक्रे तु म्रियते सागरे जले ॥ १० ॥

अर्थ-जन्मसमय चन्द्रमाके साथ बृहस्पति यदि नववें स्थानमें होय और आठवें घरका मालिक आठवें घरको देखता होय अथवा बृहस्पति और शुक्र दशवें स्थानमें स्थित हों तो जात मनुष्यकी समुद्रके जलमें मृत्यु होती है ॥ १० ॥

लग्नस्य दक्षिणे चन्द्रे वामे चैव दिवाकरे ।
कृत्वा पुण्यसहस्राणि म्रियते जाह्नवीजले ॥ ११ ॥

अर्थ-जन्मसमय लग्नके दक्षिणभागमें चन्द्रमा और वामभागमें सूर्य होनेसे जातमनुष्य सहस्रपुण्य कर्म करके गंगाजलमें प्राण त्याग करताहै ॥ ११ ॥

पुण्यराशिगतः सूर्यो निधने चन्द्रमा यदि ।
कृत्वा पुण्यसहस्राणि म्रियते जाह्नवीजले ॥ १२ ॥

अर्थ-जन्मसयम यदि सूर्य नववें स्थानमें और चन्द्रमा आठवें स्थानमें स्थित होय तो जातमनुष्य हजारों पुण्य कर्म करके गंगाजलमें मृत्युको प्राप्त होताहै१२

पुण्यराशिगते सौम्ये निधने चन्द्रमा यदि ।
भुक्त्वा च सकलान्भोगान्म्रियते जाह्नवीजले ॥ १३ ॥

अर्थ-जन्मसमय शुभ ग्रह यदि पुण्यराशिमें हों और चन्द्रमा आठवें स्थानमें स्थित होय तो जातमनुष्य अनेक प्रकारके ऐश्वर्यादिकोंको भोग कर अन्तसमय गङ्गाजलमें प्राणत्याग करता है ॥ १३ ॥

मीने कुंभे मृगे चैव कुलीरे च विशेषतः ।
जीवयुक्तेऽथवा दृष्टे हरिपादोदके व्यसुः ॥ १४ ॥

अर्थ-जन्मसमय यदि मीन, कुम्भ, मकर वा कर्क राशिमें बृहस्पति स्थित होय अथवा उक्त समस्त राशियोंमें उसकी दृष्टि होय तो जातमनुष्यकी विष्णु-पादोदक गङ्गाजलमें मृत्यु होती है ॥ १४ ॥

निधनेशो यदा युग्मे गुरुस्तेन युतो यदि ।
भुक्त्वा च विविधान्भोगान्म्रियते जाह्नवीजले ॥ १५ ॥

अर्थ-जन्मसमय यदि आठवें स्थानका मालिक बृहस्पतिके साथ होकर युग्म राशिमें स्थित होय तो जात मनुष्य अनेक प्रकारके भोगोंको भोगकर अन्तसमय उसकी गङ्गाजलमें मृत्यु होती है ॥ १५ ॥

निधनेशो यदा युग्मे गुरुशुक्रावलोकितः ।
कृत्वा पुण्यसहस्राणि म्रियते जाह्नवीजले ॥ १६ ॥

अर्थ-जन्मसमय यदि आठवें स्थानका मालिक युग्मराशिमें होय और उसपर बृहस्पति और शुक्रकी दृष्टि होय तो जात मनुष्य हजारों पुण्य कर्म करता है और अन्तसमय उसकी गङ्गाजलमें मृत्यु होती है ॥ १६ ॥

कर्कटे जीवशुक्रौ च धर्मर्क्षे चन्द्रमा यदि ।
तस्य भाग्यं विजानीयाद्गङ्गायां मरणं भवेत् ॥ १७ ॥

अर्थ-जन्मसमयमें यदि बृहस्पति और शुक्र कर्क राशिमें होवें और चन्द्रमा यदि नववें स्थानमें होय तो उस मनुष्यकी गङ्गाजलमें मृत्यु होती है ॥ १७ ॥

( क ) बुधादित्यसमो योगो न भूतो न भविष्यति ।
चिरकालं सुखं भुक्त्वा म्रियते जाह्नवीजले ॥ १८ ॥

अर्थ-बुधादित्ययोगके समान दूसरा योग न हुआ और न होय जिस मनुष्यका बुधादित्य योगमें जन्म होय वह चिरकाल सुखोंको भोगकर अन्तसमय उसकी गंगाजलमें मृत्यु होती है ॥ १८ ॥

विनाशराशौ यदि पुण्यगेहे निशाधिपेनैव विलोकितः स्यात् ।
मृत्यौ भवेत्सौम्ययुतोऽपि नूनं प्राणांस्त्यजेज्जह्नुसुतासुनीरे ॥ १९ ॥

अर्थ-जन्मसमय आठवें स्थानका मालिक और नववें स्थानका मालिक यदि आठवें स्थान और नववें स्थानको देखते हों और शुभग्रह मृत्यु'स्थानमें स्थित हो तो उस मनुष्यकी गंगाजलमें मृत्यु होती है ॥ १९ ॥

पुण्याधिपः पुण्यगृहे च केन्द्रे केन्द्राधिपैर्योग इहैव नीतः ।
राजाधिराजो गुणिनां वरेण्यो गङ्गाजले मुञ्चति जीवितं सः॥२०

अर्थ-जन्मसमय मनुष्यकी लग्नसे नववें स्थानमें नववें स्थानका मालिक और

(क) "निरपेक्षो हि यद्राशौ रविः सौम्येन संयुतः । एकर्क्षे हि भवेद्योगो बुधादित्यः स एव हि ॥" इति बुधादित्ययोगकथनम् ।

केन्द्रस्थानमें केन्द्रस्थानका मालिक स्थित होय तो वह मनुष्य अत्यन्त गुणवान् और राजाधिराज होकर अन्तसमयमें गंगाजलमें मृत्युको प्राप्त होता है ॥२० ॥

चतुर्भिः सप्तभिर्वापि निधनं यदि दृश्यते ।
भुक्त्वा भोगान्भूतियुतानन्ते च जाह्नवीं लभेत् ॥ २१ ॥

अर्थ-जन्मलग्नके आठवें स्थानपर यदि चार ग्रहोंकी वा सात ग्रहोंकी दृष्टि होय तो जात मनुष्य अनेक प्रकारके ऐश्वर्यादिकोंको भोगताहै और अन्तसमय गंगाजलमें मृत्यु होती है ॥ २१ ॥

बुधे लग्नगते चैव दशमे रोहिणीपतौ ।
जाह्नव्यां हि तदा मृत्युर्नात्र कार्या विचारणा ॥ २२ ॥

अर्थ-जन्मलग्नमें बुध और लग्नके दशवें स्थानमें चन्द्रमाहोनेसे जात मनुष्यकी निश्चयही गंगाजलमें मृत्यु होतीहै ॥ २२ ॥

चरराशौ स्थिते सूर्ये लग्नस्थश्चन्द्रमा यदि ।
वसिष्ठादिमुनिवाक्यं गङ्गायां मरणं भवेत् ॥ २३ ॥

अर्थ-जन्मसमय यदि चरराशिमें सूर्य और लग्नमें चन्द्रमा स्थित होय तो जातमनुष्यकी गंगाजलमें मृत्यु होतीहै;इसप्रकारवसिष्ठादि मुनिगणने कहाहै॥२३॥

धर्मगेहे यदा चन्द्रो बुधशुक्रावलोकितः ।
ते धर्मचारिणो भूत्वा मज्जन्ति सुरदीर्घिकाम् ॥ २४ ॥

अर्थ-जन्मलग्नके नववें स्थानमें चन्द्रमा होय और उसको बुध और शुक्र देखते हों तो जातमनुष्य धार्मिक होकर अन्तसमय गङ्गालाभ करताहै ॥ २४ ॥

पुण्यराशिगतश्चन्द्रः पुष्करे च दिवाकरः ।
कृत्वा पुण्यसहस्राणि म्रियते जाह्नवीजले ॥ २५ ॥

अर्थ-जन्मसमय यदि चर-राशिमें चन्द्रमा और स्थिरराशिमें सूर्य स्थित होय ( नववीं राशिमें चन्द्रमा और दशवीं राशिमें सूर्य इस प्रकार भी किसी आचार्यने कहा है ) तो जातमनुष्य हजारों पुण्यका कर्मकरके गंगाजलमें अन्तसमय प्राण त्यागताहै ॥ २५ ॥

अथ काशीमरणयोगः।

लग्ने जीवे सशुक्रे च मृत्युयुक्ते निशाकरे।
मृतिं पश्यति लग्नेशो मृतिं काश्यामवाप्नुयात् ॥ २६ ॥

अर्थ–जन्मलग्नमें यदि बृहस्पति और शुक्र स्थित हों और आठवें स्थानमें चन्द्रमा होय और लग्नका मालिक मृत्युस्थानको देखता होय तो जात मनुष्य काशीधाममें मृत्युको प्राप्त होता है ॥ २६ ॥

लग्ने सिंहे शनौ षष्ठे मिथुने जीवसंयुते।
मृतिं पश्यति लग्नेशो वाराणस्यां मृतिर्भवेत् ॥ २७ ॥

अर्थ–जिस मनुष्यकी जन्मलग्न सिंह होय, लग्नके छठे स्थानमें शनि होय, मिथुनमें बृहस्पति होय और लग्नका मालिक आठवें स्थानको देखता हो तो जात मनुष्यकी काशीमें मृत्यु होती है ॥ २७ ॥

लग्नेशः पूर्णदृष्ट्या तु मृत्युभावं प्रपश्यति।
लग्नं वा रात्रिपो मृत्यौ काश्यां मृत्युं समादिशेत् ॥ २८ ॥

अर्थ–जन्म लग्नके मालिककी यदि आठवें स्थानमें वा जन्मलग्नमें सम्पूर्ण दृष्टि होय और चन्द्रमा यदि आठवें स्थानमें स्थित होय तो जात मनुष्यकी काशीमें मृत्यु होती है ॥ २८ ॥

सप्तमस्थे जीवशुक्रे दशमे रजनीकरे।
मृतिं पश्यति लग्नेशो वाराणस्यां मृतिर्भवेत् ॥ २९ ॥

अर्थ–जन्मलग्नके सातवें स्थानमें यदि बृहस्पति और शुक्र और दशमें स्थानमें चन्द्रमा स्थित होय और लग्नका मालिक आठवें स्थानको देखता होय तो जात मनुष्यकी काशीमें मृत्यु होती है ॥ २९ ॥

दशमे जीवशुक्रौ तु मृतिं पश्यति मृत्युपः।
लग्ने वा लग्नपो भौमः काश्यां मृत्युं समादिशेत् ॥ ३० ॥

अर्थ–जन्मसमय यदि दशवें स्थानमें बृहस्पति और शुक्र स्थित हों और आठवें स्थानका मालिक आठवें स्थानको देखता होय और लग्नमें लग्नका मालिक वा मङ्गल स्थित होय तो जात मनुष्यकी काशीमें मृत्यु होती है ॥ ३० ॥

जीवेन दृश्यते चन्द्रश्चन्द्रेण दृश्यते गुरुः।
तदा मृत्युं व्रजेदेव काशीक्षेत्रे न संशयः ॥ ३१ ॥

अर्थ–जन्मसमय यदि बृहस्पतिकी चन्द्रमापर और चन्द्रमाकी बृहस्पतिपर दृष्टि होय तो जात मनुष्यकी काशीमें मृत्यु होती है ॥ ३१ ॥

**निधने च स्थितो भौमो बुधक्षेत्रे भवेद्यदि ।**
**काशीवासो भवेत्तस्य शशी केन्द्रे विशेषतः ॥ ३२ ॥**

अर्थ–जन्मलग्नका आठवाँ स्थान यदि बुधका क्षेत्र होय और मङ्गल उस स्थानमें स्थित होय और चन्द्रमाका केन्द्रस्थानमें वासस्थान होय तो जात मनुष्यका काशीमें वास होता है ॥ ३२ ॥

अथ जन्ममरणयोर्मोक्षज्ञानम् ।

**षष्ठाष्टमकण्टकगो गुरुरुच्चे मीनसंज्ञे विलग्ने वा ।**
**शेषैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः ॥ ३३ ॥ (क)**

अर्थ–जन्मसमय वा मृत्यु समय यदि बृहस्पति छटे आठवें लग्नमें चौथे सातवें वा दशवें स्थानमें होकर उच्च स्थानमें स्थित होय अथवा मीनराशिमें होय और अन्य ग्रह हीनबल होय तो जात वा मृतक मनुष्यको मोक्ष प्राप्त होती है इस प्रकार विद्वानोंने कहा है ॥ ३३ ॥

अथ स्त्रीणां रूपादिनिरूपणम् ।

**स्त्रीपुंसोर्जन्मफलं तुल्यं किन्त्वत्र चन्द्रलग्नस्थम् ।**
**तद्बलयोगाद्वपुराकृतिश्च सौभाग्यमस्तमये च ॥ ३४ ॥ (ख)**

अर्थ–अब स्त्रियोंके रूपादिको वर्णन करते हैं स्त्री और पुरुषके जन्मफलके

---

(क) मोक्षगतिनिर्णयमाह- षष्ठेति । उच्चे स्थितो गुरुः षष्ठेऽष्टमे कण्टके केन्द्रे स्थितो यदि जन्मकाले मरणकाले वा स्यात्तदा ज्योतिर्विदो मोक्षगतिमाहुः । यदि भावसानान्तलग्ने वा इति पाठस्तदा भावसानराश्यन्तो मीनराशिः तस्मिन् लग्ने स्थितो गुरुः । यदि स्यात्तदा शेषग्रहैरबलैर्जन्मनि मरणे वा मोक्षगतिमाहुः । अत्र च गुरूच्चो मीनलग्नश्च यदि स्यादिति सौभरेः ॥ प्रलापो हेय एव तथा लग्न इति प्रथमान्तनिर्देशस्यैवोचितत्वात् । पञ्चमषष्ठाष्टमकेन्द्रे ग इत्यनेनैव सिद्धे भावसानलग्ने इत्यस्य वैयर्थ्यापत्तेश्च । तथा बृहज्जातके–गुरुरथ रिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थ उदयति भवनान्त्यसौम्यभागे च मोक्षः । यदि भवति बलेन प्रोज्झितास्तत्र शेषाः प्रलपति यदि जीवस्तस्य निर्वाणमोक्षः ॥ इति ।

(ख) इदानीं स्त्रीजातकमाह–स्त्रीपुंसोरिति । जन्मफलं स्त्रीपुंसोस्तुल्यं पुंसो यत्फलमुक्तं स्त्रिया अप्येतत् इत्यर्थः । अत्र स्त्रीषु यदसम्भव राजयोगादि तत्तत्पतिषु वाच्यम् । तथाच लघुजातके "पुञ्जन्मफलं यदसम्भवे न स्त्रीषु पतिषु तत्तासाम्" इति । किन्तु चन्द्रलग्नस्थं तद्बलयोगादिति वपुः शरीर शरीरस्य रूपशीलादि ज्ञातव्यं तथाचाकृतिराकारोऽवयवः लग्नचन्द्रस्था ज्ञातव्या तयोर्मध्ये यो बली तद्बलाद्वाच्या इत्यर्थः । तथा लग्नादस्तसमये सप्तमे सौभाग्यं ज्ञातव्यं पतिश्च ज्ञातव्यः । अत्र केचिल्लग्नवत् चन्द्रादपि सर्वं वाच्यमिति वदन्ति । तन्न केवलं वपुर्मात्रं लग्नचन्द्रस्थमित्युक्तंनान्यत अन्यच सामान्य-

समान अर्थात् पुरुषके जो समस्त फल कहे हैं स्त्रियोंकेभी प्रायः उसी प्रकार होते हैं किन्तु विशेष यही है कि चन्द्रमा और लग्नके बलानुसार शरीरका रूप और शीलादि और सातवें स्थानमें सौभाग्यका विचार करना चाहिये ॥ ३४ ॥

अथ सप्तमस्थपापग्रहफलम्।

**बाल्ये विधवा भौमे पतिसंत्यक्ता दिवाकरेऽस्तस्थे।**
**सौरे पापदृष्टे कन्यैव जरां समुपयाति ॥ ३५ ॥ (ग)**

अर्थ–अब कन्याके सातवें स्थानमें स्थित पापग्रहोंका फल कहते हैं स्त्रियोंके जन्मसमयमें लग्नके सातवें स्थानमें मङ्गल होनेसे बाल्यावस्थामें विधवा होजाती है सूर्य सातवें स्थानमें होनेसे जात स्त्रीको पति त्यागकर देता है और शनैश्चरको यदि पाप ग्रह देखते होंय तो जात कन्या अविवाहिताही वृद्ध होजातीहै ॥३५॥

अथ वैधव्यादियोगः।

**क्रूरेऽस्ते विधवा भवति पुनर्भूः शुभाशुभैर्नारी।**
**क्रूरेऽष्टमे च विधवा स्यात्तत्स्वथे सा स्वयं म्रियते ॥३६॥ (घ)**

अर्थ–पापग्रह लग्नके सातवें होनेसे जात नारी विधवा होती है, शुभाशुभ ग्रह सातवें होनेसे पुनर्भू होती है अर्थात् उस नारीका दूसरीवार विवाह होता है और पापग्रह आठवें स्थानमें होनेसेभी जात कन्या विधवा होती है, किन्तु दूसरे

–प्राबल्येन लग्नेनैव सम्बन्धः अत एव शीलाकृतीत्यादि वपुर्गुणमात्र लग्नेन्दुतो वक्ष्यते। ओजे लग्नेन्दोरित्यादिना नहि सर्वमेव स्त्रीजातकं रिष्टायुर्दाय राजयोगादि लग्नवच्चन्द्रादपि ज्ञातव्यम्। तथा बृहज्जातके। "तासान्तु भर्तृमरणं निधने वपुस्तु लग्नेन्दुगं शुभगतास्त-मये पतिश्च" इति। एवं वक्ष्यमाणेऽपि लग्नादेव सर्वं बोद्धव्यम्। इति।

(ग) सप्तमस्थे पापग्रहे फलमाह–बाल्य इति। भौमे लग्नादस्तस्थे सप्तमस्थे बाल्ये शैशवे विधवा स्यात्। दिवाकरे सप्तमस्थे पतिसंत्यक्ता स्यात्। शनौ तु पापदृष्टे सप्तमस्थे कन्या अनूढैव जरां प्राप्नोति जरावस्थायामपि तस्या विवाहो न स्यादित्यर्थः। पापैर्दृष्ट इति शशिनैव सम्बन्धः। तथा बृहज्जातके–"उत्सृष्टा तरणौ कुजे तु विधवा बाल्येऽस्त राशिस्थिते कन्यैवाशुभवीक्षितेऽर्कतनये द्यूने जरां गच्छति॥" इति।

(घ) सप्तमाष्टमस्थफलमाह–क्रूरेति। बहुभिः क्रूरैः सप्तमस्थैः विधवा मिश्रैः शुभाशुभैः सप्तमस्थैः पुनर्भूः द्विरूढा स्यात् तथाष्टमस्थे क्रूरग्रहे विधवा स्यात् अत्र चाष्टमाधिपो यस्य नवांशे स्थितः तस्य ग्रहस्य वयसि वैधव्यं ज्ञातव्यम्। ग्रहाणां वयस्तु देवज्ञवल्लभायामुक्तम्। "वयांसि तेषां स्तनपानबाल्यव्रतस्थिता यौवनमध्यवृद्धाः। अतीव वृद्धा इति चन्द्रभौमज्ञशुक्रजीवार्कशनैश्चराणाम्" इति। तथा बृहज्जातके "क्रूरेऽष्टमे विधवता निधनेश्वरांऽशे यस्य स्थितो वयसि तस्य तु सा प्रदिष्टा। सत्यर्थगेऽपि मरणं स्वयमेव तस्याः कन्यालिगोक्षिषु चाल्पसुतत्वमिन्दौ। अस्मिन्नेव योगेऽष्टमस्थे क्रूरे सत्सु शुभग्रहेषु द्वितीयस्थितेषु सा कन्यैव स्वयं म्रियते न तु वैधव्यमित्यर्थः। कश्चिदसत्तु इति व्याचष्टे तदशुद्धः सत्स्वर्थगेऽपि मरणमित्यादिलिखितबृहज्जातकवचनात्। इति।

स्थानमें यदि शुभग्रह होंय तो उस स्त्रीकीही मृत्यु होजाती है ॥ ३६ ॥

अपिच ।

**ओजे लग्नेन्द्वोः स्त्री दुःशीला शीलयुता युग्मे ।**
**शून्ये बले कदर्यः पतिश्चरेऽस्ते प्रवासी स्यात् ॥ ३७ ॥ ( ङ )**

अर्थ–स्त्रियोंका जन्म योज अर्थात् अयुग्म लग्नमें होनेसे अथवा जन्मचन्द्रमा

---

( ङ ) चन्द्रलग्नस्थ वपुराकृतिश्चेति यदुक्तं तत्फलमाह–ओज इति । ओजेविषमगृहस्थितयोर्लग्नेन्द्वोः सतोः स्त्रीदुःशीला पुरुषप्रकृतिः स्यात् युग्मलग्नेन्द्वोःशीलयुता स्वभावस्था स्यात् मिश्रे मिश्रफलमूहनीयम् तथा लघुजातके "युग्मर्क्षे लग्नेन्द्वोः प्रकृतिस्था रूपशीलगुणयुक्ता ओजे पुरुषाकारा दुःशीला दुःखिता चैव" इति । अत्रच शुभपापदर्शनात् गुणयुक्ता गुणहीना च ज्ञातव्या । सप्तमस्थानात्पतिज्ञानमाह-शून्य इति। ग्रहशून्ये बलरहिते चास्ते सप्तमस्थाने पतिः कदर्यः कापुरुषः स्यात् चरे च सप्तमस्थाने पतिर्नित्यप्रवासी स्यात् अत्रच शुभग्रहदर्शने शुभफलं स्यात् । तथा बृहज्जातके "शून्ये कापुरुषोऽबलेऽस्तभवने सौम्यग्रहावीक्षिते क्रूरेऽस्ते बुधमन्दयोश्चगृहे नित्य प्रवासाश्रितः" इति । अत्रच सौभरेः प्रलापः प्रहसनमेवेति । अत्र च लग्नस्य यावन्नवांशः सप्तमगृहस्य तावति नवांशे शुभग्रहसम्बन्धिनि सति सुभगा स्यात् । सप्तमे पापग्रहनवांशे पापवीक्षिते व्याधियोनिर्दुर्भगा स्यात् । तथा बृहज्जातके "कोजेऽस्ते हमे सौरिणाव्याधियोनिश्चारुश्रोणी वल्लभा सद्ग्रहांशे ।" अत्र च द्रेक्काणात्स्त्री पुमान बृहज्जातके उक्त तन्म्लरूप मयोच्यते । " आद्यत्रिभागे मेषस्य कण्ठा शुक्लपटावृतः । क्रोधनो रक्तनेत्रश्च पुमान्कृष्णो दुरासदः । मेषे द्वितीये नारी स्यात्सञ्ज्ञा भक्ष्येषु लोलुपा कुम्भाकृतिर्वाजिमुखी तृषार्त्ता लोहिताकृतिः । मेषे तृतीये कर्मार्थी दारुणे निर्भयः पुमान् । कलाज्ञः कपिलः क्रूरः सत्पर्शाचर्यविवर्जितः॥१॥ वृषस्य प्रथमे नारी तृषार्त्ता स्यात्पतिव्रता । स्थूलोदरी दग्धपटा स्वल्पकेशी प्रियम्वदा । द्वितीये छागवदनस्तृषार्त्तो मलिनाम्बरः । वृषस्कन्धः कलाभिज्ञः कुशलः सर्वकर्मसु । वृषस्यान्ते हस्तितुल्यशरीरः पिङ्गलः पुमान् । उच्चपादः सूक्ष्मदन्तो मृगलोमाकुलाश्रयः ॥ २॥ मिथुनप्रथमे नारी कुर्वती कर्म निष्फलम् । हीनप्रजोच्छ्रितभुजा सतीरूपान्विता भवेत् । द्वितीये पुरुषः शूरो धनुष्मान्गरुडाननः । अन्ते धनुष्मान्नृत्यादिकलाज्ञो रत्नवान्सुधीः ॥ ३ ॥ कर्कटाद्ये हस्तिकायः शूकरास्यः फलान्विभृत् । कुटिलोग्रिहयग्रीवः पुरुषो जायते महान् । द्वितीये कर्कशा पद्मार्चिता नारी वनस्थिता । अन्ते प्रियश्चिपीटास्यो नौवाणिज्यपरः पुमान् ॥ ४ ॥ सिंहाद्ये जम्बुकाकारो गृध्रकुक्कुरनिःस्वनः । मातापितृपरित्यक्तः पुरुषो मलिनाम्बरः । द्वितीये स्याकृतिकृष्णाजिनकम्बलवान्पुमान् । रक्ताग्रनासो धन्वी च सिंहवत्स्याद्दुरासदः । अन्ते पुमान् ऋक्षमुखो वानरोपमचेष्टितः । दीर्घश्मश्रुर्दण्डधरो भवेत्कुञ्चितमूर्धजः ॥५॥ कन्याद्ये सह कन्याभिर्गच्छन्ती मलिनाम्बरा । पुष्पप्रकीर्णकुम्भेन लक्षिता कन्यका भवेत् । मध्यस्कन्धशिरायामो लेखको लोमशः पुमान् । अन्ते गौरी पुत्रहीना धौतवस्त्रसमन्विता ॥ ६ ॥ तुलाद्ये मानकुशलस्तुलावान्मूलचिन्तकः । वीथीमध्यगतोमार्गो विपिन्यपुरुषो भवेत् । मध्ये क्षुधार्तस्तृषितः गृध्रास्यः नरशान्वितः । अन्ते धनुष्मान्दीर्घास्यो अचिणो

अयुग्मराशिमें होनेसे वह दुःशीला होतीहै सातवाँ स्थान ग्रहशून्य वा बलशून्य होनेसे पति कापुरुष होता है चरराशि सातवें स्थानका होनेमें स्त्रीका पति नित्य प्रवासी होता है ॥ ३६ ॥

अथ ग्रहाणां गोचरभोगकालकथनम् ।

हरिर्मासं निशानाथः सपादंदिवसद्वयम् ।
पक्षत्रयं भूमिपुत्रो बुधोऽष्टादश वासरान् ॥
वर्षमेकं सुराचार्यश्चाष्टाविंशद्दिनं भृगुः ।
शनिश्चार्द्धद्वयं वर्षं स्वर्भानुः सार्द्धवत्सरम् ॥ ३८ ॥
एवं प्रमाणात्सकलाः स्वराशिं भुञ्जते ग्रहाः ।
वक्रशीघ्रगतिश्चेत्स्याद्भौमादि पञ्चकेऽन्यथा ॥ ३९ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–अब ग्रहोंके गोचरमें रहनेका समय कहते हैं,सूर्य एक राशिमें एक महीनेतक रहता है,इसी प्रकार चन्द्रमा सवादो दिन,मङ्गल पैंतालिस दिन,बुध अठारह दिन, बृहस्पति एकवर्ष, शुक्र अट्ठाईस दिन, शनैश्चर अढाई वर्ष और राहु डेढ वर्षतक एक राशिमें रहता है। ग्रहोंका स्वाभाविक नियम उक्त प्रकारसे एक एक राशिमें जानना चाहिये,किंतु मङ्गल बुध,बृहस्पति,शुक्र, और शनि इन पाँच ग्रहोंकी वक्रगति और शीघ्रगति द्वारा कभी २उक्त समयसेन्यूनाधिक होजाताहै॥३८–३९॥

–रत्नभूषित ॥ ७ ॥ वृश्चिके प्रथमे नारी वस्त्रालङ्कारवर्जिता । स्थानच्युता नदीं तीर्णा एव माता मनोहरा । मध्ये स्थान सुख लिप्सुर्नारी कूर्मघटाकृति । अन्ते वृहच्चिपीटास्यश्वर पश्वादिभीषण ॥ ८ ॥ धनुष प्रथमे धन्वी मनुष्यास्योऽश्वतनुः । मध्ये स्वरूपा गौरी स्यान्नारी भद्रासनास्थिता । धनुस्तृतीये गौराङ्ग श्मश्रुश्च दण्डधारक । कौषेयवर्जवधरो विक्रयी पुरुषो भवेत् ॥ ९ ॥ मकरप्रथमो रौद्रमुखो रज्जुधर पुमान् । रोमशो मकराकारदन्त शूकरतनुः । मध्येकलाजादिधाक्षी श्यामला लोहभूषणा । अन्ते धन्वी दीर्घमुख सपट कम्बलान्वित ॥ १० ॥ कुम्भस्य प्रथमे खर स्नेहसत्याकुलीकृत । कौषेयवासा गृध्रास्य स्थिरबुद्धि पुमान्भवेत् । द्वितीये मूर्ध्नि भाण्डाढ्या नारी स्यान्मलिनाम्बरा । तृतीये श्यामल श्मश्रु सारामश्रवण पुमान् ॥ ११ ॥ मीनस्य प्रथमे रत्नप्रियो भूषणभूषित । स्रग्भाण्डपाणिर्नौकाभि क्रीडाकृत्पुरुषो भवेत् । द्वितीये सुन्दरी गौरी कुल यान्ती च नौकया । तृतीये वस्त्रहीन स्याद्दुष्टव्यालकरेक्षण । स्त्रीभागे तु भवेन्नारी पुभागे पुरुषो भवेत् । स्त्रीद्रेकाणेऽवले नापि पग्रहस्थितिदर्शने । भवेत् पुमांस्तथा नारी स्त्रीगृहस्थितिदर्शने । पुमानेऽप्यवले द्वापि गुप्तमेतन्मयोदितम् । अत्रच प्रश्नद्रेकाणानुरूपश्चौरो ज्ञातव्य । तथा ' द्रेकाणैश्चौररूपा स्मृता " इति ।; जातकसागरसंग्रहे " मुह्यन्ति नेव विद्वांस । सन्निपेण यत्न लिखितवान् मुदितां वृत्तिभि " इति ।

## अथ ग्रहणां गोचरफलम् ।

तत्रादौ रवेः ।

स्थानं जन्मनि नाशयेद्दिनकरः कुर्याद्द्वितीये भयम्
दुश्चिक्ये श्रियमातनोति हिबुके मानक्षयं यच्छति ।
दैन्यं पञ्चमगः करोति रिपुहा षष्ठेऽर्थहा सप्तमः
पीडामष्टमगः करोति नितरां कान्तिक्षयं धर्मगः ॥ ४० ॥

इति रत्नकोषे ।

अर्थ–अब ग्रहोंके गोचरका फल कहते हैं जन्मराशिमें सूर्य स्थित होनेसे मनुष्यका स्थान भ्रष्ट होजाताहै; इसी प्रकार दूसरे स्थानमें होनेसे भय, तीसरे स्थानमें श्रीलाभ, चौथे स्थानमें मानहानि, पांचवें स्थानमें दैन्य, छठे स्थानमें स्थित होनेसे शत्रुओंका नाश, सातवें स्थानमें अर्थनाश, आठवें स्थानमें होनेसे पीडा और नववें स्थानमें सूर्य स्थित होनेसे कान्ति क्षय होती है ॥ ४० ॥

कर्मं वृद्धि जनकस्तु कर्मगो वित्तवृद्धिकृदथायसंस्थितः ।
द्रव्यनाशजनितांमहापदं यच्छति व्ययगतो दिवाकरः ॥ ४१ ॥

इति रत्नकोषे ।

अर्थ– सूर्य जन्म राशिसे दशवें स्थानमें होनेसे कार्यकी वृद्धि होती है, ग्यारहवें स्थानमें होनेसे सम्पत्तिकी वृद्धि होती है और गोचरके बारहवें स्थानमें सूर्य स्थित होनेसे मनुष्यकी सम्पत्तिका नाश होताहै और घोरतर विपद होती है॥४१॥

इति रवेर्गोचरफलम् ।

अथ चन्द्रस्य ।

जन्मन्यर्थं दिशति हिमगुर्वित्तनाशं द्वितीये
दद्याद्द्रव्यं सहजभवने कुक्षिरोगं चतुर्थः ।
कार्यभ्रंशं तनयगृहगो वित्तलाभञ्च षष्ठे
द्यूने द्रव्यं युवतिसहितं मृत्युसंस्थोऽपि मृत्युम् ॥ ४२ ॥

इति रत्नकोषे ।

अर्थ–जन्मराशिमें चन्द्रमा स्थित होनेसे मनुष्यको अर्थलाभ होताहै, इसी प्रकार दूसरे स्थानमें वित्तनाश तीसरे स्थानमें होनेसे द्रव्यलाभ चौथे स्थानमें होनेसे उदरमें पीडा होती है पांचवीं राशिमें होनेसे कार्यका नाश छठे स्थानस्थित होनेसे वित्त-

लाभ, सातवें स्थानमें होनेसे द्रव्य और स्त्री प्राप्त होती है और आठवें स्थानमें होनेसे मनुष्यकी मृत्यु होती है ॥ ४२ ॥

नृपभयं कुरुते नवमः शशी दशमधामगतस्तु महत्सुखम् ।
विविधमायगतः कुरुते धनं व्ययगतस्तु रुजं सधनक्षयम् ॥ ४३ ॥

इति रत्नकोषे ।

अर्थ—चन्द्रमा जन्मराशिसे नववें स्थानमें स्थित होनेसे मनुष्यको राज्यभय होता है इसी प्रकार दशवें स्थानमें होनेसे अत्यन्त सुख ग्यारहवें स्थानमें होनेसे धनकी वृद्धि होती है और बारहवें स्थानमें चन्द्रमा स्थित होनेसे मनुष्य रोगी होता है और उसके धनका नाश हो जाता है ॥ ४३ ॥

इति चन्द्रस्य गोचरफलम् ।

अथ मङ्गलस्य ।

प्रथमगृहगः क्षोणीसूनुः करोत्यरिजं भयं
क्षपयति धनं वित्तस्थाने तृतीयगतोऽर्थदः ।
अरिभयकरः पाताले मृत्युं क्षिणोति च पञ्चमो
रिपुगृहगतो धत्ते वित्तं शुचं मदनस्थितः ॥ ४४ ॥

इति रत्नकोषे ।

अर्थ—मङ्गल जन्मराशिमें स्थित होनेसे शत्रुका भय मनुष्यको होता है, इसी-प्रकार दूसरे स्थानमें होनेसे धनका नाश, तीसरे स्थानमें होनेसे अर्थलाभ, चौथे स्थानमें होनेसे शत्रुका भय, पाँचवें स्थानमें होनेसे मृत्यु, छठे स्थानमें होनेसे वित्तलाभ और सातवें स्थानमें मङ्गल स्थित होनेसे मनुष्यको शोक प्राप्त होता है ॥ ४४ ॥

जनयति मरणस्थः शत्रुधारां धराजो
दिशति च नवमस्थः कार्यपीडामतीव ।
शुभमपि दशमस्थो लाभगो भूमिलाभः
व्ययभवनगतोऽसौ व्याध्यनर्थार्थनाशम् ॥ ४५ ॥

इति रत्नकोषे ।

अर्थ—मंगल जन्मराशिसे आठवें स्थानमें होनेसे अस्त्राघात होता है, इसी प्रकार नववें स्थानमें होनेसे कार्यका नाश दशवें स्थानमें होनेसे मंगल होता है ग्यारहवें

स्थानमें होनेसे पृथ्वीलाभ होता है और गोचरके मंगल बारहवें स्थानमें स्थित होनेसे रोग अर्थनाश और अमंगल होता है ॥ ४५ ॥

इति कुजस्य गोचरफलम् ।

अथ बुधस्य ।

बुधः प्रथमधामगो दिशति बन्धमर्थं धनं
वधारिपुभयान्वितं सहजगश्चतुर्थेऽर्थदः ।
अनिर्वृतिकरो भवेत्तनयगोऽरिगः स्थानदः
करोति मदनस्थितो बहुविधां शरीरापदम् ॥ ४६ ॥

इति रत्नकोषे ।

अर्थ–जन्मराशिमें बुधके स्थित होनेसे बन्धन होता है इसी प्रकार दूसरे स्थानमें होनेसे धनलाभ तीसरेमें मृत्युकी शङ्का और शत्रुका भय चौथेमें अर्थलाभ, पाँचवें स्थानमें होनेसे आनन्दका अभाव, छठे स्थानमें प्राप्ति और गोचरके सातवें स्थानमें बुध होनेसे मनुष्यको अनेक प्रकारकी शारीरिक पीडा होतीहै।४६।

अष्टमे शशिसुते धनलब्धिर्धर्मगेऽतिमहतीं तनुपीडाम् ।
कर्मगे सुखमथायगतेऽर्थदो द्वादशगे भवति वित्तसुलाभः॥४७॥

इति रत्नकोषे ।

अर्थ–बुध जन्मराशिसे आठवें स्थानमें होनेसे धनका लाभ होता है. इसी प्रकार नवें स्थानमें होनेसे अत्यन्त शारीरिक पीडा दशवें स्थानमें होनेसे सुख ग्यारहवें स्थानमें होनेसे अर्थलाभ और गोचरके बुध बारहवें स्थानमें होनेसे मनुष्यको द्रव्य प्राप्त होता है ॥ ४७ ॥

इति बुधस्य गोचरफलम् ।

अथ बृहस्पतेः ।

भयं जन्मन्यार्यो जनयति धनस्थोऽर्थमतुलं
तृतीयोऽङ्गक्लेशं दिशति च चतुर्थोऽर्थविषमम् ।
शुभं पुत्रस्थाता शुभमपि च कुर्यादरिगृहे
द्युने भूभृत्पूजां धननिचयनाशञ्च निधने ॥ ४८ ॥

इति रत्नकोषे ।

अर्थ–बृहस्पति गोचरके जन्मराशिमें स्थित होनेसे भय होता है इसी प्रकार दूसरे स्थानमें होनेसे अतुल धनका लाभ तीसरे स्थानमें होनेमे शारीरिक क्लेश

चौथे स्थानमें होनेसे धनका नाश पाँचवें स्थानमें होनेसे शुभ, छठे स्थानमें होनेसे अशुभ, सातवें स्थानमें होनेसे राजपूज्य और आठवें स्थानमें बृहस्पति स्थित होनेसे मनुष्यके धनका नाश होजाता है ॥ ४८ ॥

**धर्मगतो धनवृद्धिकरः स्यात्प्रीतिहरो दशमोऽमरपूज्यः ॥**
**स्थानधनानि ददाति स चाये द्वादशगस्तनुमानसपीडाम् ॥ ४९ ॥**

इति रत्नकोषे

अर्थ-बृहस्पति जन्मराशिसे नववें स्थानमें स्थित होनेसे धनकी वृद्धि होती है, इसी प्रकार दशवें स्थानमें होनेसे प्रीतिभंग, ग्यारहवें स्थानमें होनेसे स्थान और धनप्राप्ति होती है और गोचरमें बृहस्पति बारहवें स्थानमें स्थित होनेसे मनुष्यको मानसिक और शारीरिक पीडा होती है ॥ ४९ ॥

अन्यच्च ।

**आद्याष्टमे बन्धुवियोगदुःखमस्ते चतुर्थे धनहानितापम् ॥**
**षष्ठे च रोगं कलहं तृतीये सर्वस्वनाशं दशमस्तु जीवः ॥ ५० ॥**

इति ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमें लिखा है कि, बृहस्पति गोचरमें जन्मराशिमें स्थित होनेसे वा आठवें स्थानमें स्थित होनेसे मनुष्यका बान्धवोंसे वियोग होता है, इसी प्रकार बारहवें वा चौथे होनेसे धनहानि, छठे होनेसे रोग, तीसरे होनेसे कलह और गोचरमें बृहस्पति दशमें स्थानमें स्थित होनेसे मनुष्यका सर्वस्वनाश होजाता है ॥ ५० ॥

इति गुरोर्गोचरफलम् ।

अथ शुक्रस्य ।

**जन्मन्यारिक्षयकरो भृगुजोऽर्थदोर्थे ।**
**दुश्चिक्यगः सुखकरो धनदश्चतुर्थे ॥**
**स्यात्पुत्रदस्तनयगोऽरिगतोऽरिवृद्ध्यै ।**
**शोकप्रदो मदनगो निधनेऽर्थदाता ॥ ५१ ॥**

इति रत्नकोषे ।

अर्थ-शुक्र जन्मराशिमें स्थित होनेसे शत्रुहीन होजाता है, इसी प्रकार दूसरे स्थानमें होनेसे अर्थलाभ, तीसरे स्थानमें होनेसे सुख, चौथे स्थानमें धनलाभ, पाँचवें स्थानमें पुत्रलाभ, छठे स्थानमें शत्रुकी वृद्धि, सातवें स्थानमें शोक और शुक्र गोचरके आठवें स्थानमें स्थित होनेसे मनुष्यको धन प्राप्त होता है ॥ ५१ ॥

जनयति विविधाम्बराणि धर्मे ।
न शुभकरो दशमस्थितस्तु शुक्रः ॥
धननिचयकरस्तु लाभसंस्थितो ।
व्ययभवनेऽपि धनागमं करोति ॥ ९२ ॥

इति रत्नकोपे ।

अर्थ-शुक्र जन्मराशिसे नवें स्थानमें स्थित होनेसे मनुष्यको अनेक प्रकारके वस्त्र प्राप्त होते हैं, दशवें स्थानमें होनेसे अशुभ ग्यारहवें स्थानमें होनेसे विपुल धनलाभ होता है और शुक्र बारहवें स्थानमें स्थित होनेसे मनुष्यको धन प्राप्त होता है ॥ ९२ ॥

इति शुक्रस्य गोचरफलम् ।

अथ शनेः ।

वित्तभ्रंशं सदाहं दिनकरतनयो जन्मराशिप्रसन्नः
चित्ते क्लेशं द्वितीयो रिपुहनकृतं वित्तलाभं तृतीयः ॥
पाताले शत्रुवृद्धिं सुतभवनगतः पुत्रभृत्यार्थनाशं
षष्टस्थानेऽर्थलाभं जनयति मदने दोषसंघातमार्किः ॥९३॥

इति रत्नकोपे ।

अर्थ-शनि जन्मराशिमें स्थित होनेसे वित्तनाश और सन्ताप होता है, इसी प्रकार दूसरे स्थानमें होनेसे चित्तको क्लेश होता है, तृतीय स्थानमें होनेसे शत्रुका नाश और धन प्राप्त होता है, चौथे स्थानमें स्थित होनेसे शत्रुओंकी वृद्धि होती है, पाँचवें स्थानमें होनेसे पुत्र भृत्य और धनका नाश होजाता है, छठे स्थानमें होनेसे अर्थलाभ होता है और सातवें स्थानमें शनैश्चर स्थित होनेसे मनुष्यको अनेक प्रकारका अनिष्ट होता है ॥ ९३ ॥

होनेसे मानसिक उद्वेग, ग्यारहवें स्थानमें होनेसे वित्तलाभ और बारहवें स्थानमें शनैश्चर स्थित होनेसे मनुष्यका अत्यन्त अमंगल होता है ॥ ५४ ॥

इति शनेर्गोचरफलम्।

अथ राहोर्गोचरफलम्।

जन्मान्त्यपञ्चवसुरन्ध्रचतुर्द्विसप्त
राशौ स्थितो यदि भवेदसुरः कदाचित्।
अर्थक्षयं रिपुभयं बहुकार्यहानिं
रोगप्रवासमरणाग्निभयं करोति ॥ ५५ ॥ इति रत्नकोषे।

अर्थ राहु गोचरमें जन्मस्थ बारहवें पांचवें आठवें नववें चौथे, दूसरे सातवें स्थानमें स्थित होनेसे मनुष्यका अर्थक्षय शत्रुभय, बहुकार्यहानि रोग प्रवास मृत्यु और अग्निका भय होता है ॥ ५५ ॥ इति राहोर्गोचरफलम्।

अथ केतोर्गोचरफलम्।

एकादशत्रिदशषष्ठगतोनराणां
सन्मानभोगनृपमानसुखार्थदाता।
आज्ञाकराश्च पुरुषाः प्रमदाश्च नित्यं
सौख्योदयं दिशति पुण्यचयञ्च केतुः ॥ ५६ ॥

इति रत्नकोषे।

अर्थ-केतु गोचरमें जन्मराशिसे ग्यारहवें तीसरे, दशवें अथवा छठे स्थानमें स्थित होनेसे मनुष्यको सन्मान भोग राजसन्मान सुख और धन प्राप्त होता है ५६

इति केतोर्गोचरफलम्।

अथ गोचरफलकालकथनम्।

दिनकररुधिरौ प्रवेशकाले
गुरुभृगुजौ भवनस्य मध्यपातौ ॥ ५७ ॥
रविसुतशशिनौ विनिर्गमस्थौ।
शशितनयः फलदस्तु सर्वकालम् ॥ ५८ ॥ (१)

अर्थ-अब ग्रहोंके गोचरफलका समय कहते हैं दीपिकामें लिखा है कि, सूर्य और मंगल राशीके प्रवेशकालमें शुभाशुभ फल प्रदान करते हैं इसी प्रकार बृहस्पति और शुक्र मध्यसमयमें, शनैश्चर और चन्द्रमा शेष समयमें और बुध

इति दीपिकायाम्।

---

(१) राशित्रिभागात्फल शेषमिति ज्योतिस्तत्त्वे स्मार्त्तेनोक्तम्।

समस्त समयमेंही शुभाशुभ फल प्रदान करता है ॥ ५७ ॥ ५८ ॥

इति गोचरकालफलकथनम् ।

अन्यच्च ।

**गोचरपीडायामपि राशिर्बलिभिःशुभग्रहैर्दृष्टः ।**
**पीडां न करोति तथा क्रूरैरेवं विपर्यासः ॥ ५९ ॥ ( × )**

इति ग्रन्थान्तरे ।

अर्थ–ग्रन्थान्तमें लिखा है कि; मनुष्यकी जन्मराशिसे गोचर पीडित होकर यदि बलवान् शुभग्रहोंकी दृष्टि होय तो पीडा नहीं होती है अर्थात् जन्मराशिसे जो जो पीडा कही है वह नहीं होसक्ती है गोचरमें यदि शुभग्रह होय और उनपर शुभग्रहोंकीही दृष्टि होय तो अधिक शुभफल प्रदान करते हैं और पापग्रहोंकी दृष्टि होनेसे गोचरमें शुभग्रह होनेसेभी शुभफल नहीं होता है और गोचरमें पापग्रह होय और जो उनपर पाप ग्रहोंकीही दृष्टि होय तो अत्यन्त अशुभफलही न होता है ॥ ५९ ॥

अथ चन्द्रचारवशाद्ग्रहशुद्धिकथनम् ।

**यादृशेन शशाङ्केन ग्रहः सञ्चरते नृणाम् ।**
**तादृशं फलमाप्नोति शुभं वा यदि वाऽशुभम् ॥६०॥ (❀)**

अर्थ–सञ्चारकालमें मनुष्यका चन्द्रमा शुद्ध होनेसे ग्रहोंके गोचरफलके न्यूना

( × ) गोचरापवादमाह–गोचरेति गोचरपीडायां सत्यां जन्मराशिर्यदि बलिभिःशुभग्रहैर्दृष्टः स्यात्तदा जन्मराशिः पीडां न करोति जन्मराशेः सकाशात् या पीडा उक्ता सा न भवतीत्यर्थः । एवञ्च गोचरे शुभे सति शुभैर्दृष्टो जन्मराशिरधिकं शुभं करोति क्रूरैर्दृष्टो जन्मराशिः शुभोऽपि शुभं न जनयति अशुभश्चेदधिकमेवाशुभं करोति पापदृष्टः। इति।

( ❀ ) केतूपर्वेरयादिनोक्त गोचरस्याष्टवर्गगोचरस्य च द्वयोरेव चन्द्रचारवशेनापवादमाह–यादृशेनेति । चन्द्राजितो यः कश्चिद्ग्रहो नृणां यादृशेन चन्द्रेण सञ्चरते तादृशं शुभमशुभं वा फलं नरः प्राप्नोति । शुभफलदेन सप्तमोपचयादिस्थेन चन्द्रेण ग्रहाणां सञ्चारः शुभफलदः । अशुभफलदेन चन्द्रेण सञ्चारोऽशुभ फलद इत्यर्थः । सञ्चरत इति समस्तृतीया युक्त इति रुचादित्वादात्मनेपदम् । अत्र कश्चित् " यादृशेन हिमरश्मिमालिना सक्रमो भवति तिग्मरोचिषः । तादृशं फलमवाप्यते नरैः साध्वसाध्वपि वशेन शीतगोः ॥ " इति रत्नमालावचनमालोक्य ग्रहो रविरेवेति प्रल्पति तदशुद्धं सामान्येन सर्वग्रहाणामेव गोचरमुक्त्वा सामान्येनैव तदपवाद उच्यते पश्चाच्च सामान्येनैव ग्रहपताकावार वक्ष्यति अतो न रविमात्रस्यैतत्। तथाच राजमार्तण्डे "आश्रित्य चन्द्रस्य बलाबलानि ग्रहाः प्रयच्छन्ति शुभाशुभानि । मनः समेतानि यथेन्द्रियाणि कर्मण्यतो यान्ति न केवलानि । "यथा च दशाप्रवेशे चन्द्रस्य शुभाशुभेन ग्रहाणां शुभाशुभफलस्य दर्शनम् । बृहज्जातके " मित्रस्योपचयत्रिकोण मदने पारेश्यस्य स्थित-

धिक कहते हैं । यदि चन्द्रमा भिन्न ग्रहोंके सञ्चारसमयमें मनुष्यका चन्द्रमा गोचरमें शुभ होता है अर्थात् शुक्ल और कृष्ण इन दोनों पक्षमें शुभफलप्रदान करता है जन्मराशिसे सातवें तीसरे ग्यारहवें छठे दशवें और जन्मका होनेसे और कृष्णपक्षमें दूसरे पांचवें और नवमस्थानमें चन्द्रमा होय तब ग्रहोंके गोचरमें अशुभ होनेसेभी शुभफल प्रदान करता है और यदि ग्रहोंके सञ्चारसमय चन्द्रमा शुद्ध न होय तो अत्यन्त अशुभ फल होता है और गोचरमें ग्रह शुभद होनेसे यदि सञ्चार कालमें चन्द्रमा शुद्ध होय तो अत्यन्त शुभफल होता है॥६०॥

अथ तारादिशुद्धया ग्रहशुद्धिकथनम् ।

**तारावलादिन्दुरथेन्दुवीर्यो दिवाकरःसंक्रममाण उक्तः ॥**
**ग्रहाश्च सर्वे सवितुर्बलेन महीसुताद्याः क्रमशः प्रशस्ताः ॥६१॥**

इति रत्नमालायाम् ।

अर्थ-चन्द्रमाके सञ्चारकालमें ताराशुद्धि होनेसे गोचरमें चन्द्रमा अशुभ होनेसेभी शुभफल प्रदान करता है इसी प्रकार सूर्यके सञ्चारसमय गोचरमें चन्द्रमा-शुद्ध होनेसे सूर्य गोचरमें अशुभ होनेसेभी शुभफल प्रदान करते हैं और मंगल बुध, बृहस्पति, शुक्र और शनैश्चर इन पांच ग्रहोंके सञ्चार समय यदि सूर्य गोचरमें शुद्ध हो तो गोचरमें यदि उक्त पांचों ग्रह अशुभ होनेसेभी शुभफल प्रदान करते हैं ॥ ६१ ॥

अथ नाक्षत्रिकीदशाफलम् ।

**षट्सूर्यस्य दशा ज्ञेया शशिनो दशपञ्च च ।**
**अष्टावङ्गारके प्रोक्ता बुधे सप्तदश स्मृताः ॥ ६२ ॥**
**शनैश्चरे दश प्रोक्ता गुरोरेकोनविंशतिः ।**
**राहोर्द्वादश वर्षाणि भृगोरप्येकविंशतिः ॥ ६३ ॥**

इति सत्याचार्यः ।

अर्थ-अब नाक्षत्रिकी दशा भोगनेका समय कहते हैं सूर्यकी दशाका परिमाण ६ छः वर्षका होता है इसी प्रकार चन्द्रमाकी १५ वर्षकी मंगलकी ८ वर्षकी बुधकी १७ वर्षकी शनैश्चरकी १० बृहस्पतिकी १९ वर्षकी राहुकी १२ वर्षकी और शुक्रकी दशाका परिमाण २१ इकीस वर्षका होता है । इसी दशाको अष्टो

—श्चन्द्रः सत्फल बोधनानि कुरुते पापानि चातोऽन्यथा । " इत्यादि रत्नमालावचनन्तु रविसंक्रमणप्रकरणोक्तमेकदेशकीर्तनपरमेव नत्वन्यग्रहस्य चन्द्रचारवशेन शुभाशुभत्वं न भवतीति तस्यार्थ इत्यलं बहुना ॥ इति ।

त्तरी दशा कहते हैं कृष्णपक्षमें जात मनुष्यकी उक्त दशा द्वारा शुभाशुभ फल जानना चाहिये ॥ ६२ ॥ ६३ ॥

अथ दशानिरूपणम् ।

कृत्तिकादित्रये सूर्यः सोमो रौद्रचतुष्टये ।
मघादित्रितये भौमो बुधो हस्ताच्चतुष्टये ॥ ६४ ॥
अनुराधात्रये सौरिर्गुरुः पूर्वाचतुष्टये ।
धनिष्ठादित्रये राहुः शेषे शुक्रः प्रकीर्त्तितः ॥ ६५ ॥

अर्थ–किस नक्षत्रमें जात मनुष्यको किस ग्रहकी दशा पहिले होती है॰ अब उसको वर्णन करते हैं यथा; कृत्तिका, रोहिणी और मृगशिर नक्षत्रमें जात मनुष्यको प्रथम सूर्यकी दशा होती है इसी प्रकार आर्द्रा, पुनर्वसु, पुष्य और आश्लेषा नक्षत्रमें चन्द्रमाकी दशा होती है मघा,पूर्वाफाल्गुनी और उत्तराफाल्गुनी नक्षत्रमें मंगलकी दशा होती है हस्त, चित्रा, स्वाती और विशाखा नक्षत्रमें बुधकी दशा होती है, अनुराधा, जेष्ठा और मूल नक्षत्रमें शनैश्चरकी दशा होती है पूर्वाषाढा उत्तराषाढा अभिजित् ( १ ) और श्रवणनक्षत्रमें बृहस्पतिकी दशा होती है धनिष्ठा शतभिषा और पूर्वाभाद्रपदा नक्षत्रमें राहुकी दशा होती है और उत्तर भाद्रपदा रेवती, अश्विनी और भरणी नक्षत्रमें जात मनुष्यको पहिले शुक्रकी दशा होती है दशा जाननेके समय देखना चाहिये कि, किस २ नक्षत्रमें किस ग्रहकी दशा होती है प्रत्येक नक्षत्रमें कितनी वर्ष कितने दिनतक दशा रहती है और नक्षत्रका परिमाण कितने दण्ड होता है और जन्मसमयमें इन नक्षत्रोंका भुक्त कितने दण्ड होते हैं इन सबको सूक्ष्म प्रकारसे देखकर दशाकालका भुक्तभोग्य जानना चाहिये ॥ ६४ ॥ ६५ ॥

अथ दशाफलकथनम् ।

सूर्योपप्लवभौमार्किदशातिकष्टदा नृणाम् ।
गुरुज्ञचन्द्रशुक्राणां यथेप्सितफलप्रदा ॥ ६६ ॥

अर्थ–सूर्य राहु मंगल और शनिकी दशा मनुष्यको अत्यन्त कष्ट देती है और बृहस्पति, बुध, चन्द्रमा और शुक्रकी दशा मनुष्यको अभीष्ट फल प्रदान करती है ॥ ६६ ॥

( १ ) उत्तराषाढानक्षत्रके शेष चतुर्थांशका और श्रवणके प्रथम चार दण्डका नाम अभिजित है बृहस्पतिकी दशाके समयको चार भाग करके एक भाग पूर्वाषाढामें, अन्य तीन भागको त्र्यंशीश करके उत्तराषाढाका और श्रवणका होता है । प्रमाण यथा । " गुरोर्दशं चतुर्भागं पूर्वाषाढे भागकम् । अन्यत्रिभागं द्विः कृत्वा दशायां विनियोजयेत् ॥ " इति सारसंग्रहे ।

अथ दशाफलनिर्णयः।

**आदौ शीर्षोदये राशावन्ते पृष्ठोदये ग्रहाः।**
**उभयोदये मध्यस्थाः फलं दद्युर्बलाबलात् ॥ ६७ ॥ (२)**

अर्थ-ग्रह शीर्षोदय राशिमें स्थित होनेसे दशाके प्रथमभागमें फल होता है, पृष्ठोदय राशिमें स्थित होनेसे शेष भागमें फल होता है और शीर्षोदय और पृष्ठोदय इन दोनों राशिमें स्थित होनेसे ग्रहगण दशाके मध्यभागमें बलाबलवशद्वारा शुभाशुभ फल प्राप्त होता है ॥ ६७ ॥

अथाष्टमचन्द्रादिदशाफलम्।

**अष्टमेन्दोर्दशा मृत्युं बन्धमस्तमितस्य च।**
**शुभस्य वक्रिणो राज्यं पापस्य व्यसनाटने ॥ ६८ ॥ (३)**

अर्थ-जात मनुष्यकी जन्मलग्नसे आठवें स्थानमें चन्द्रमा स्थित होनेसे चन्द्रमाकी दशामेंही मृत्यु होती है जन्मसमय आठवें स्थानमें जो ग्रह स्थित होय तो इसकी दशामें बन्धन होता है, वक्री शुभग्रहोंकी दशामें राज्यप्राप्त होता है और वक्री पाप ग्रहोंकी दशामें व्यसन, अटन, विपत्ति और विदेशभ्रमण होताहै॥६८॥

अथ शिरश्छेदादिकारकदशाकथनम्।

**अङ्गप्रत्यङ्गानां छेदं विदधाति षष्ठ शत्रुदशा।**
**द्यूनारिदशा कोणं निधनारिदशा शिरश्छेदम् ॥ ६९ ॥(४)**

अर्थ-जात मनुष्यकी जन्मलग्नसे छठे स्थानमें स्थित लग्नकी मालिकके शत्रुग्रहकी दशामें हाथ कान इत्यादि अङ्ग प्रत्यङ्गादिमें छेद होता है, सातवें स्थानमें स्थित लग्नाधिपतिके शत्रुग्रहोंकी दशामें मनुष्य पङ्गु होताहै और आठवें स्थानमें स्थित लग्नके मालिकके शत्रुग्रहोंकी दशामें मनुष्यका शिरच्छेद होताहै ॥ ६९ ॥

---

(२) दशापाक फलमाह-आदाविति। शीर्षोदयराशौ स्थिता ग्रहा दशादिपाके फलं दद्युः। पृष्ठोदयस्थास्तु दशान्तकाले उभयोदयस्थास्तु दशामध्यकाले बलाबलाच्छुभाशुभफलं दद्युः ॥ इति।

(३) अष्टमचन्द्रादि दशावशेनानियतारिष्टमाह-अष्टमेन्दोरिति। अष्टमचन्द्रदशा मृत्युं करोति इति सर्वत्राध्याहारः। अस्तगतस्य ग्रहस्य दशा बन्धन करोति वक्रिणः शुभग्रहस्य दशा राज्य करोति वक्रिणः पापग्रहस्य तु दशा व्यसनाटने विपत्ति विदेशभ्रमणे करोति। इति।

(४) इदानीं छिद्रकारकदशामाह-अङ्गेति। लग्नात् षष्ठस्थस्य लग्नाधिपशत्रोर्दशा अंगानां हस्तादीनां प्रत्यंगानाम् अंगुलीकर्णादीनां छेदं विदधाति सप्तमस्थस्य लग्नाधिप शत्रोर्दशा कोण पंगुं करोति अष्टमस्थस्य लग्नाधिपशत्रोर्दशा शिरच्छेद करोति। इति ॥

अथ दशारिष्टम् ।

क्रूरराशौ स्थितः पापः षष्ठे च निधने तथा ।
तत्स्थिते नारिणा दृष्टः स्वपाके मृत्युदो ग्रहः ॥७०॥ (५)

अर्थ-मनुष्यकी जन्मलग्नसे यदि छठे वा आठवें पापग्रह स्थितहों और वही स्थान पापग्रहोंका घर होय तब अथ च पापग्रहोंके क्षेत्रमें स्थित उक्त ग्रहोंके शत्रुओंकी उनमें दृष्टि होय तब उसी ग्रहकी दशामें मनुष्यकी मृत्यु होती है ॥७०॥

अथ पापग्रहान्तर्दशाकथनम् ।

पापग्रहदशायान्तु पापस्यान्तर्दशा यदि ।
अरियोगे भवेन्मृत्युर्मित्रयोगे च संशयः ॥ ७१ ॥ (६)

अर्थ-पापग्रहोंकी दशामें यदि पापग्रहोंकी ही अन्तर्दशा होय और दशाके मालिकके साथ अन्तर्दशाके मालिककी शत्रुता होय तो मनुष्यकी मृत्यु होती है, पापग्रहोंकी दशामें अन्तर्दशाका मालिक पापग्रह होनेसेभी यदि मित्रहों तब मृत्युके समान पीडा होती है ॥ ७१ ॥

अपिच ।

विलग्नाधिपतिःशत्रुर्लग्नस्यान्तर्दशांगतः ।
करोत्यकस्मान्मरणं सत्याचार्यः प्रभाषते ॥ ७२ ॥ (क)

अर्थ-मनुष्यकी जन्मलग्नके मालिक ग्रहका शत्रु यदि जन्मलग्नके मालिक ग्रहकी अन्तर्दशामें होय तो मनुष्यकी अकस्मात् मृत्यु होती है इस प्रकार सत्याचार्यने कहा है ॥ ७२ ॥

अथ दशान्तर्दशयोरपवादः ।

प्रवेशे बलवान्खेटः शुभैर्वा संनिरीक्षितः ।
सौम्याधिमित्रवर्गस्थो मृत्यवे न भवेत्तदा ॥ ७३ ॥ (ख)

अर्थ-अब दशादिके रिष्टभंग कहते हैं दशा वा अन्तर्दशाके प्रवेशसमय दशाका

(५) पापग्रहदशारिष्टमाह-क्रूरेति क्रूरराशौ पापग्रहराशौ लग्नात् षष्ठेऽष्टमे वा स्थितः पापः तत्स्थितेन पापग्रहराशिस्थितेन शत्रुग्रहेण शुभेनाशुभेन वा दृष्टः स्वपाके स्वदशाकाले मृत्युं करोति-इति ॥

(६) अन्तर्दशारिष्टमाह-पापग्रहेति । अत्रपापाः शनि रवि भौमाःपापग्रहदशायाम्॥ अन्यान्यपापग्रहस्य शत्रोरन्तर्दशा चेत्तदा मृत्युः पापदशाया पापस्य मित्रस्यान्तर्दशा चेत्तदा संशय इत्यर्थः । इति ।

(क) लग्नान्तर्दशारिष्टमाह-विलग्नेति । स्पष्टार्थम् । इति ।

(ख) दशान्तर्दशारिष्टमाह-प्रवेश इति । दशाप्रवेशकाले अन्तर्दशाप्रवेशकाले वा

मालिक वा अन्तर्दशाका मालिक ग्रह बलवान् होय वा उसे शुभग्रह देखते हों अथवा अधिमित्रादि शुभग्रहोंके वर्गादिमें स्थित होय तो उसी दशामें मनुष्यको मृत्युके समान पीडा होती है ॥ ७३ ॥

अथ रिष्टप्रतीकारः ।

**गोचरे वा विलग्ने वा ये ग्रहा रिष्टसूचकाः ।**
**पूजयेत्तान्प्रयत्नेन पूजिताः स्युः शुभावहाः ॥ ७४ ॥ ( ग )**

अर्थ-अब अरिष्टका प्रतीकार कहते हैं मनुष्यके गोचरमें अथवा लग्नमें यदि कोई ग्रह अरिष्ट होय तो यत्नपूर्वक उस ग्रहकी पूजादि करै कारण पूजन करनेसे ग्रह शुभफल करते हैं ॥ ७४ ॥

---

दशापतिर्वाबलवान्स्यादशुभदृष्टोवास्यात् शुभवर्गेऽधिमित्रवर्गे वा स्थितः स्यात्तदा मृत्युरेव न भवेत्किन्तु सशय एव स्यादित्यर्थः ।तथा पाकस्वामिनि लग्न इत्यादिना. यदुक्तं तस्मिन् योगे सति मृत्युर्न भवेदित्यर्थः । तथाच श्रीपतिः-"दशापतिर्लग्नगतो यदि स्यात्रिषड्दशैकादशगश्च लग्नात् " इति । एतच्च सावनमानेनेव दशान्तर्दशादिकं कार्यं तच्चातीव गुप्तं सावनशोधनं मया स्वबुद्ध्या स्फुटीक्रियते । " खलाभ्रनागाष्टकैर्ग्रहायुर्गुण्यं नगाभ्राक्षिकराङ्गनेत्रैः । विभज्यवर्षादिकलब्धमेतज्ज्ञेयं बुधैः सावनशुद्धमायुः ॥" वर्षं प्रति दिनानि ६ । १० । २९ मासं प्रति दण्डाः २६ । दण्डान्प्रति विपलानि १२ । एतत्सावनशुद्धं वर्षमासदिनदण्डात्मकमायुः जन्मकालीनकलियुगवत्सरमासदिनदण्डपलेषु मिश्रयेत् ततो वर्षेषु तावन्मासेषु तावद्दिनेषु तावद्दण्डेषु तावत्पलेषु दशाप्रवेशः ततः एतस्येव वर्षमासादेरहर्गणनं कृत्वा तात्कालिकाः सर्वे ग्रहाः कार्याः । लग्नं षड्वर्गादिकञ्च कार्यं ततो विचार्य दशान्तर्दशादिषु शुभाशुभं वदेदेव एतेषु वर्षादिषु सावनशुद्धमन्यदशान्तर्दशादिकं निश्चित्यान्यदशाप्रवेशकालं ज्ञात्वा शुभाशुभं वदेत् । अत्र च जन्मकोष्ठ्या प्रवेशे गृहप्रवेशे सञ्चारकाले खेटो यदि बलवान् इति सौभेरेरुन्मादप्रलपितम् । इति ॥

( ग ) रिष्टप्रतिकारमाह-गोचर इति । अष्टवर्गाद्युक्तो गोचरो लग्नसम्बन्धियोगजरिष्टमनियतं दशान्तर्दशारिष्टञ्च गोचरयोगदशान्तर्दशाया वा ये ग्रहा रिष्टकारिणः तान् ग्रहान् पूजयेत् प्रयोगानुसारेण पूजाहोमादिकं कार्यम् । ततस्ते पूजया होमेन च .तुष्टाः शुभावहाः स्युः । एतेन परमायुर्दशान्तर्दशादिफलमुक्तम् । अत्र यदि चन्द्रो बलवान् तदा नाक्षत्रिकदशा फलसम्पादिनी स्यात् ततो नाक्षत्रिकी दशा पञ्चभिरार्याभिर्मयोच्यते । " अष्टाविंशतिभिर्भाम्त्रिभिश्चतुर्भिश्च कृत्तिकाक्रमतः । रविशशिकुजबुधशनयो जीवतमो भार्गवा दशापतयः ॥ रसतिथिवसुमित्रकाष्टोर्नाविंशति. सूर्यैकविंशतिवर्षाणि । अनुपातैर्जन्मदशा कार्या नक्षत्रभोगेन ॥ अन्तर्दशाशवर्षैर्दशेशवर्षाणि गुणयित्वा । नवभिर्लब्धं तत्स्यान्मासाद्यन्तर्दशाकालः ॥ अन्तर्दशादिनेभ्यःषष्ट्या लब्धं यथाक्रमं भवति । प्रत्यन्तरं श्रुतिगजेन्द्रियनवरसदिङ्मुनीश्वरैर्गुणितम् ॥ दशान्तर्दशाफलमुक्तमेव जातकचन्द्रिकादौ । राहुदशाफलन्तु लिख्यते " राहुदशा कष्टफला तत्र ज्ञसितौ शुभौ परेऽनिष्टाः॥ शुक्रदशायां राहुः शुभदोऽनिष्टप्रदोऽन्यासु ॥ " इति ।

अथ ग्रहदोषेद्रव्यधारणविधिः ।

सूर्यादिदोषशान्त्यै धार्याणि भुजेन ताम्रशंखौ च ।
सकाञ्चनमुक्तारजतत्रपुलोहराजपट्टानि ॥ ७५ ॥ (१)

अर्थ-अब ग्रहोंकी दोषशान्तिके अर्थ धारण करनेका द्रव्य कहते हैं सूर्यके विरुद्ध होनेसे ताम्र धारण करना चाहिये, इसी प्रकार चन्द्रमा विरुद्ध होनेसे शङ्ख, मङ्गल विरुद्ध होनेसे प्रवाल, बुध विरुद्ध होनेसे काञ्चन, बृहस्पति विरुद्ध होनेसे मुक्ता, शुक्र विरुद्ध होनेसे चांदी, शनैश्चर विरुद्ध होनेसे सीसक, राहु विरुद्ध होनेसे लोह और केतुके विरुद्ध होनेसे राजपट्ट ( मणिविशेष ) धारण करना चाहिये ॥ ७५ ॥

अन्यच्च ।

माणिक्यं विगुणे सूर्ये वैडूर्यं शशलांछने ।
प्रवालं भूमिपुत्रे च पद्मरागं शशाङ्कजे ॥ ७६ ॥
गुरौ मुक्तां भृगौ वज्रमिन्द्रनीलं शनैश्चरे ।
राहौ गोमेदकं धार्यं केतौ मरकतं तथा ॥ ७७ ॥ (२)

अर्थ-अब अन्य प्रकारसे कहते हैं । सूर्य विरुद्ध होनेसे माणिक्य धारण करना चाहिये इसी प्रकार चन्द्रमाके विरुद्ध होनेसे वैडूर्यमणि, मङ्गलके विरुद्ध होनेसे प्रवाल, बुधके विरुद्ध होनेसे पद्मराग, बृहस्पतिके विरुद्ध होनेसे मुक्ता, शुक्रके विरुद्ध होनेसे हीरक, शनैश्चरके विरुद्ध होनेसे इन्द्रनील, राहुके विरुद्ध होनेसे गोमेदक और केतुके विरुद्ध होनेसे मरकतमणिको धारण करै ॥ ७६ ॥ ७७ ॥

अपरञ्च ।

सूर्ये ताम्रं विधौ शंखः प्रवालं भूमिनन्दने ।
बुधे च काञ्चनं देयं गुरौ मुक्तां विदुर्बुधाः ॥ ७८ ॥
रजतं भृगुपुत्रे च सूर्यसूनौ त्रपुस्तथा ।
राहौ लोहं राजपट्टं केतौ स्याद्धारणीयकम् ॥ ७९ ॥

इति जातकचन्द्रिकायाम् ।

अर्थ-जातकचन्द्रिकामें भी ग्रहोंके दोषोंकी शान्तिके अर्थ धारण करनेके

(१) धार्यधातूनाह-सूर्य इति ताम्र, शङ्खः, प्रवाल, काञ्चन, मुक्ता, रजतम्, त्रपु, सीसक, लोह, राजपट्ट ग्रहाणां दोषे एतानि यथाक्रमेण धार्याणि ॥

(२) यथाशक्ति धार्यरत्नान्याह-वैडूर्यमिति । गुणानिति । नीलः इन्द्रनीलः वज्र हीरम् । इति ॥

द्रव्य कहे हैं यथा-सूर्य विरुद्ध होनेसे ताम्र धारण करना चाहिये इसी प्रकार चन्द्रमा विरुद्ध होनेसे शंख, मङ्गल विरुद्ध होनेसे प्रवाल, बुध विरुद्ध होनेसे काञ्चन, बृहस्पति विरुद्ध होनेसे मुक्ता, शुक्र विरुद्ध होनेसे चाँदी, शनैश्चर विरुद्ध होनेसे सीसक, राहु विरुद्ध होनेसे लोह और केतु विरुद्ध होनेसे राजपट्ट ( मणिविशेष ) धारण करै ॥ ७८ ॥ ७९ ॥

प्रकारान्तरश्च ।

दोषो न स्याद्ग्रहाणामशिशिरकिरणे ताम्रमिन्दौ च शंखः
पृथ्वीपुत्रे प्रवालं शशधरतनये शातकुम्भं भुजेन ।
देवाचार्ये च मुक्तामणिरसुरगुरौ सीसकं सूर्यसूनौ
राहौ सारं गिरीणां कमलजतनये राजपट्टं विधार्यम् ॥ ८० ॥

अर्थ-राजमार्तण्डमेंभी ताम्रादि धारण करनेका प्रमाण कहा है जिस मनुष्यके सूर्य विरुद्ध हो वह ताम्र धारण करै तो दोष दूर होजाता है, इसी प्रकार चन्द्रमा विरुद्ध होनेसे शंख धारण करै, मङ्गल विरुद्ध होनेसे प्रवाल, बुध विरुद्ध होनेसे सुवर्ण, बृहस्पति विरुद्ध होनेसे मुक्ता, शुक्र विरुद्ध होनेसे मणि, शनैश्चर विरुद्ध होनेसे सीसक, राहु विरुद्ध होनेसे लोह और केतु विरुद्ध होनेसे राजपट्ट ( मणिविशेष ) धारण करै तो दोष दूर होता है ॥ ८० ॥ इति राजमार्तण्डे ।

अपिच ।

यद्यद्ग्रहस्य यद्द्रव्यं तत्तस्मिन्विषमे स्थिते ।
दद्यात्सत्कृत्य विप्रेभ्यः स्वयञ्च बिभृयात्ततः ॥ ८१ ॥

अर्थ-जिस ग्रहके विरुद्ध होनेमें जो द्रव्य धारण करनेको कहा है, वह द्रव्य ग्रहोंकी दोषशान्तिके अर्थ पहिले ब्राह्मणको दान करके देवे पीछेसे धारण करना चाहिये ॥ ८१ ॥

अथ ग्रहदोषमूलादिधारणविधिः ।

मूलं धार्यं त्रिशूल्याः सवितरि विगुणे क्षीरिकामूलमिन्दौ
जिह्वाहेर्भूमिपुत्रे रजनिकरसुते वृद्धदारस्य मूलम् ।
भार्ङ्ग्या जीवेऽस्य शुक्रे भवति शुभकरं सिंहपुच्छस्य मूलं
वाट्यालं चार्कपुत्रे तमसि मलयजं केतुदोषेऽश्वगन्धम् ।८२(३)

अर्थ-ग्रहोंके दोषशान्तिके अर्थ जो मनुष्य ताम्रादि धारण नहीं करसक्ते हैं

(३) ग्रहदोषशान्त्यर्थं भुजधार्याण्मूलान्याह-मूलमिति । त्रिशूली विल्वः क्षीरिका प्रसिद्धो वृक्षः अहिजिह्वा नागजिह्वेति वृद्धदारः प्रसिद्धस्तन्मूलमित्यर्थः भार्ङ्गी ब्राह्मणयष्टिका सिंहपुच्छा रामनासकः इति प्रसिद्धः मलयज चन्दनम् अश्वगन्धम् अश्वगन्धामूलमित्यर्थः ॥ इति ।

वे मूलादि ( वृक्षोंकी जड ) को धारण करै । यथा । सूर्यके विरुद्ध होनेसे बेलकी जडको धारण करै इसी प्रकार चन्द्रमाके विरुद्ध होनेसे क्षीरिका ( खिन्नी ) वृक्षकी जड, मङ्गल विरुद्ध होनेसे नागजिह्वा लताकी जड, बुधके विरुद्ध होनेसे वृद्धदारु वृक्षकी जड, बृहस्पतिके विरुद्ध होनेसे ब्राह्मणयष्टि वृक्षकी जड, शुक्रके विरुद्ध होनेसे सिंहपुच्छ ( चित्रपर्णिका ) वृक्षकी जड; शनैश्चरके विरुद्ध होनेसे वाट्याल ( खिरेंटी ) वृक्षकी जड, राहुके विरुद्ध होनेसे श्वेतचन्दन और केतुके विरुद्ध होनेसे दोषशान्तिके अर्थ अश्वगन्धा ( असगन्ध ) वृक्षकी जड धारण करना चाहिये ॥ ८२ ॥

अन्यच्च ।

त्रिशूलीं क्षीरिकामूलं गोजिह्वां वृद्धदारकम् ।
ब्रह्मयष्टीं सिंहपुच्छं वाट्यालं चन्दनं सितम् ॥ ८३ ॥
अश्वगन्धं क्रमात्सूर्याद्याद्दोषोपशान्तये ।
ताम्रादीनामभावे तु स्वयं च दक्षिणे भुजे ॥ ८४ ॥

अर्थ-बुद्धि प्रकाशमेंभी लिखा है कि, ग्रहोंकी शान्तिके अर्थ जो मनुष्य ताम्रादिके धारण करनेमें अशक्त हैं अर्थात् नहीं धारण कर सक्ते हैं वे सूर्य-ग्रहके विरुद्ध होनेसे बेलवृक्षकी जड अपनी दहनी भुजामें धारण करै । इसी प्रकार चन्द्रमाके विरुद्ध होनेसे क्षीरिका ( खिन्नी ) वृक्षकी जड, मङ्गलके विरुद्ध होनेसे अनन्तमूल ( नागफणीकी जड ) बुधके विरुद्ध होनेसे वृद्धदारु वृक्षकी जड, बृहस्पतिके विरुद्ध होनेसे श्वेत ब्रह्मयष्टिकी जड, शुक्रके विरुद्ध होनेसे सिंहपुच्छ ( चित्रपर्णिका ) वृक्षकी जड, शनैश्चरके विरुद्ध होनेसे वाट्याल ( खिरेंटी ) वृक्षकी जड, राहुके विरुद्ध होनेसे श्वेतचन्दन और केतुग्रहके विरुद्ध होनेसे मनुष्य अपनी दहनी भुजामें अश्वगन्धा ( असगन्ध ) वृक्षकी जडको धारण करै ॥ ८३ ॥ ८४ ॥ इति बुद्धिप्रकाशे ।

अथ ग्रहदोषे स्नानविधिः ।

सिद्धार्थलोध्ररजनीद्वयमुस्तधान्यं
लामज्जकं सफलिनी सवचा च मांसी ।
स्नानं कुरु ग्रहगणप्रशमाय नित्यं
सर्वे रविप्रभृतयः सुमुखीभवन्ति ॥ ८५ ॥ (*)

अर्थ-अब ग्रहोंके विरुद्ध होनेमे उनकी शान्तिके निमित्त स्नान कहते हैं सफेद

(*) औषधिस्नान यदुक्तं तदाह-सिद्धार्थेति । सिद्धार्थः श्वेतसर्षपः रजनीद्वयं हरिद्रा दारुहरिद्रा च धान्यं धान्याकं लामज्जकमुशीरं वीरणमूलम् । तथा चामरः । ' स्यादीरणं

सरसों, हल्दी, दारुहल्दी, मुस्ता, नागरमोथा, धनिया, खसकी जड, पीपल, वच और बालछड इन सब चीजोंको जलमें मिलाकर उस जलद्वारा स्नान करनेसे विरुद्ध ग्रहोंका दोष दूर होजाता है ॥ ८९ ॥

इति वंशबरेल्यतर्वर्तिकान्यकुब्जकुलभूषणभारद्वाजगोत्रत्रिपाठ्युपनामकेन पण्डित बाँकेलालात्मजेन श्यामसुन्दरशर्मणा सम्पादिते भाषाटीकाविभूषिते च ज्योतिषतत्त्वसुधार्णवे नवग्रहागमनादिजातकान्तस्तृतीयस्तरङ्गः ॥ ३ ॥

# चतुर्थस्तरङ्गः ।

अथ जातकर्मकथनम् ।

**प्राङ्नाभिवर्द्धना ( १ ) त्पुंसो जातकर्म विधीयते ।**
**मन्त्रवत्प्राशनश्चास्य हिरण्यमधुसर्पिषाम् ॥ १ ॥**

इति मनुः ।

अर्थ-अब जातकर्म कहते हैं भगवान् मनुजीने कहा है कि, बालकके नाडी छेदनके ( नार काटनेके ) पूर्वमें जातकर्म करना चाहिये मन्त्रपूर्वक सुवर्णयुक्त घृत और मधु बालकके मुखमें लगानेका नाम जातकर्म है ॥ १ ॥

अपिच ।

**जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।**
**दैवादतीतः कालश्चेदतीते सूतकं भवेत् ॥ २ ॥' ( २ )**

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, बालकके जन्मसमय नार कटनेके पहिले विधिपूर्वक जातकर्म करना चाहिये दैवयोगसे पहिले यदि बालकका नार कट-जाय तो सूतक होजाता है अत एव कालान्तरके सिवाय उक्त बालकका जात कर्म नहीं होसक्ता है ॥ २ ॥ इति ज्योतिस्तत्त्वे ।

अन्यच ।

**मृदुध्रुवचराक्षिप्रभेष्वेषामुदयेऽपि वा ।**

वीरतर मूलैस्योशीरमञ्जिषामालामज्जक लघुलयमर्दाहेऽष्टरापये॥"इति।प्रियगुः फलिनी मांसी जटामांसीत्यर्थः । एभिर्नस्तामिर्ग्रहगणप्रशमाय ग्रहदोषोपशमनाय शुभ वाञ्छन् स्नान कुरु तदा सर्वे ग्रहाः विमुखा अपि सुमुखीभवन्ति प्रसन्नमुखा. प्रीता भवन्तीत्यर्थः ।

( १ ) नाभिवर्द्धनान्नाभिसम्बन्धिनाडीच्छेदनात् । "वर्द्धन छेदनेऽथ द्वे" इत्यमरः ।

( २ ) सूतिकावासनिलया जन्मदानामदेवताः । तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्तिता ॥ इति विष्णुधर्मोत्तरे । अत्र यागनिमित्तार्थमित्युपादानात्तत्कर्मण्येव शुद्धिर्नान्यस्मिन् । इति ॥

गुरुशुक्रेऽथवा केन्द्रे जातकर्म च नाम च ॥ ३ ॥ (+)

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, चित्रा, अनुराधा, मृगशिर, रेवती, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, स्वाति, पुनर्वसु, श्रवण, धनिष्ठा, शतभिषा, पुष्य, अश्विनी और हस्तनक्षत्रमें अथवा इन समस्त नक्षत्रोंके मुहूर्तमें बृहस्पति वा शुक्र केन्द्रस्थानमें स्थित होनेसे जातकर्म और नामकरण करना चाहिये ॥ ३ ॥ इति ज्योतिस्तत्त्वे ।

अथ नामकरणम् ।

ध्रुवचरमृदुवर्गे वाजिहस्तासमेते
क्षणमुदयमथैषां सत्सु केन्द्रस्थितेषु ।
दिगधिशिवशताहे तत्कुलाचारतो वा
शुभदिनतिथियोगे नाम कुर्यात्प्रशस्तम् ॥ ४ ॥ (क)

अर्थ-अब नामकरण कहते हैं-उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा,

---

(+) इति ज्योतिःशास्त्रोक्त देवात्कालेऽकार्ये वेदितव्यम् । अनुक्तेऽपि नक्षत्रा विनियमो न नैमित्तिकस्य निमित्तान्तर्भावित्वेनु निरवकाशत्वात् । इति ज्योतिस्तत्त्वे स्मार्त्तेनाभिहितम् ॥

(क) नामकरणमाह-ध्रुवेति । ध्रुववर्गे १२ । २१ । २६ । ४ मृदुवर्गे १ । ४ । २७ । ९ । २७ । चरवर्गे १५ । ७ । २२ । २३ । २४ । अश्विन्यां हस्तायाञ्च । अथ पक्षान्तरे एषामभावे एषां क्षण मुहूर्तम् उदय लग्न व्याप्य कालकर्मणि द्वितीया एषां मुहूर्ते लग्नं कुर्वेत्यर्थः । लग्नात्केन्द्रेषु शुभग्रहेषु सत्सु दिगहे दशाहे अविर्मेषः मेषाद्या राशयो द्वादशेति केचित् । वस्तुतस्तु अविः सूर्यः ' अश्मयः शैलमेषार्काः ' इत्यमरः । द्वादशेति द्वादशाहे शिवाहे एकादशाहे शतपूरणे दिने तत्कुलाचारतः षष्ठमासादौ वा नाम कुर्यात् अत्र च दशाह इति विधिर्नेयथ्येवशादाशौचेऽपि कर्तव्यम् । केचित्तु दशाहे गते एकादशाहे इति व्याचचक्षिरे तदशुद्धम् । यथा राजमार्त्तण्डे " दशमे द्वादशके वा शुभवारेऽथवा यथाचारम् " तथा पारस्करः " दशम्यामुत्थाप्य ब्राह्मणान्भोजयित्वा पिता नाम करोति " अत्र चानेकमुनिवचने गत इत्यध्याहारो न युज्यते दशम इत्यादौ पूरणप्रत्ययवैयर्थ्याच्च । दिगहे गत इतिवद्द्वादशाहे गत इत्यध्याहारेण न त्रयोदशाहेऽपि करणप्रसङ्गात् शास्त्रेलाक्योर्विरुद्धता च स्यात् इति । अत्र प्रशस्तमित्यनेन देवतानामाश्रित्य मङ्गल समाक्षरं सुखोच्चार्यं घोषवदक्षरान्तञ्च नाम कार्यम् । यथा पारस्करः " द्व्यक्षरचतुरक्षर वा घोषवदक्षरान्तञ्च नाम कुर्यात् । ओजाक्षर मकठोवान्त नाम स्त्रियै हितम् " इति । तथा राजमार्तण्डे "नार्थहीनं न चाशस्त नापशब्दयुत तथा । नामंगल्य जुगुप्स्यं वा नाम कुर्यात्समाक्षरम्।नातिदीर्घ न ह्रस्व वा नातिगुर्वक्षरान्वितम् । सुखोच्चार्य च तन्नाम कुर्यान्न प्रणवाक्षरम् । बीभत्सचण्डनाम्नी च कीर्त्तितानिष्टदाह्वना ।" इति ॥

रोहिणी, स्वाति, चित्रा अनुराधा, मृगशिर, रेवती, पुनर्वसु, श्रवण, धनिष्ठा शतभिषा, अश्विनी और हस्त नक्षत्रमें अथवा इन समस्त नक्षत्रोंके असम्भव होनेसे इनके मुहूर्तमें लग्न स्थिर करके उसके केन्द्रस्थानमें शुभग्रह होनेसे दशवें बारहवें ग्यारहवें वा शत ( सौ ) दिनमें अथवा कुलाचारहेतुक षष्ठमासादिमें शुभदिन शुभतिथि और शुभ योगमें बालकका नामकरण करना चाहिये ॥ ४ ॥

आपिच।

आदौ घोषवदक्षरं यवरलान्मध्ये पुनः स्थापये-
दन्ते दीर्घविसर्जनीयरहितं नाम प्रयत्नात्कृतम्।
ऋक्षे तिष्यकराश्विसौम्यवसुभे चित्राऽनुराधोत्तरे
पौष्णे वादितिरोहिणीषु शुभकृत्पुंसां समैरक्षरैः ॥ ५ ॥

इति गर्गः।

अर्थ-गर्गमुनिने कहा है कि, नामके आदिमें घोषवन्त वर्ण मध्यमें यवरल और अन्तमें दीर्घ वर्ण और विसर्जनीय वर्णको छोडकर अक्षरोंको मिलाकर नाम रक्खै पुष्य, हस्त, अश्विनी, मृगशिर, धनिष्ठा, चित्रा, अनुराधा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रेवती, पुनर्वसु और रोहिणी यह समस्त नक्षत्र नामकरणमें शुभ हैं पुरुषका नाम सम ( युग्म ) अक्षरयुक्त रखना चाहिये ॥ ५ ॥

अन्यच्च।

नामकरणं स्थिरे लग्ने केन्द्रपञ्चनवमास्थिते सौम्ये।
त्र्यायषष्ठसमाधिष्ठितपापे जीवशुक्रशशिसौम्यदिनेषु ॥ ६ ॥

इति नारायणपद्धतौ।

अर्थ-नारायणपद्धतिमें लिखा है कि, स्थिरलग्नमें लग्नके केन्द्रस्थानमें, पांचवें और नववें शुभग्रह स्थित होनेसे तीसरे ग्यारहवें और छठे स्थानमें पाप ग्रह होनेसे बृहस्पति, शुक्र, सोम और बुधवारमें नामकरण प्रशस्त है ॥ ६ ॥

अपरञ्च।

उत्तरात्रयरोहिण्यौ श्रवणं स्वातिरश्विनी।
अनुराधा मृगशिरो रेवती च पुनर्वसुः ॥ ७ ॥
धनिष्ठा शुभदा लग्ने यस्य केन्द्रे शुभग्रहाः।

शशीज्यसौम्यशुक्राहे नाम कुर्याच्छुभे तिथौ ॥ ८ ॥

इति ज्योतिःसारे ।

अर्थ--ज्योतिःसारमें लिखा है कि, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, श्रवण, स्वाति, आश्विनी, अनुराधा, मृगशिर, रेवती, पुनर्वसु और धनिष्ठा नक्षत्रमें लग्नके केंद्रस्थानमें शुभग्रह होनेसे सोम बृहस्पति, बुध, और शुक्रवारमें शुभ तिथिमें नामकरण प्रशस्त है ॥ ७ ॥ ८ ॥

प्रकारान्तरञ्च ।

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च ।
गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ ९ ॥

अर्थ--नामकरणके समय ब्राह्मणके नामके अन्तमें शर्मा पदका प्रयोगकर करै इसी प्रकार क्षत्रियके नामके अन्तमें वर्मा, वैश्यके नामके अन्तमें गुप्त और शूद्रके नामके अन्तमें दासपदका प्रयोग करे ॥ ९ ॥

अथ निष्क्रामणम् ।

आर्द्राधोमुखवर्जितानुपहतेष्वृक्षेष्वरिक्ते तिथौ
वारे भौमशनीतरे घटतुलाकन्यामृगेन्द्रोदये ।
सद्दृष्टेऽथ चतुर्थमासि यदि वा मासे तृतीये शशि- (*)
न्यक्षीणे शुभदे शिशोरभिनवं निष्क्रामणं कारयेत् ॥ १० ॥

अर्थ--अब निष्क्रामण कहते हैं--आर्द्रा, आश्लेषा, कृत्तिका, भरणी, मघा, विशाखा, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा और शतभिषा इन सब नक्ष-

(*) निष्क्रामणमाह--आर्द्रेति । आर्द्रा अधोमुखगणः ९ । ३ । २ । १० । १६ । ११ । २० । २५ । २४ । एभिर्वर्जितेष्वन्येषु नक्षत्रेष्वनुपहतेषु उत्पातपापग्रहाद्यपीडितेषु रिक्तावर्जितेषु तिथिषु मंगलशनिव्यतिरिक्तेषु वारेषु कुम्भतुलाकन्यासिंहलग्नेषु शुभग्रहदृष्टे तृतीये चतुर्थे वा मासि चन्द्रेऽक्षीणे गोचरशुभदेऽपि शिशोर्गृहात् प्रथम निष्क्रामण कारयेत् । इति अधोमुखमानि "आश्लेषार्द्रयमपित्र्यविशाखयुक्तं पूर्वात्रयं शतभिषाच तथाप्यमूनि । एतान्यधोमुखगणानि शिवानि नित्यं विद्यार्थभूमिमिथुनेषु च भूषितानि॥" चतुर्थे मासीति ऋग्वेदियजुर्वेदिनोः । यदाह विष्णुः--"चतुर्थमास्यादित्यदर्शनम्" इति । शौनकोऽपि "चतुर्थे मासि पुण्यर्क्षे शुक्ले निष्क्रमणं शिशोः । " पारस्करः--"चतुर्थे मासि निष्क्रमणिका सूर्यमुदीक्षयति तच्चक्षुरिति" इति । मासे तृतीये इति तु छन्दोगानां गोभिलेन जननानन्तरं तृतीयशुक्लपक्षतृतीयायां चन्द्रदर्शनरूपनिष्क्रामणविधानात् । यथा गोभिलः--"जननाद्यस्तृतीयो ज्यौत्स्नस्तत्तृतीयायाम्" इत्यादि । ज्यौत्स्नः शुक्ल पक्षः । अत्रैव कृत्याचिन्तामणिः--स्वस्तिवाचनतोऽर्कं शशिनेऽर्घ्यं दापयेत् । इति ज्योतिस्तत्त्वे ।

त्रोंको छोडकर अन्य समस्त नक्षत्रोंमें औत्पादिक वा पापग्रहोंके पीडा करनेका आधिकार न होनेसे रिक्ताभिन्न-तिथिमें, मङ्गल और शनिभिन्न वारमें, कुम्भ, तुला, कन्या और सिंहलग्नमें ( शुभग्रहोंकी दृष्टि होनेसे ) चौथे महिनेमें वा तीसरे महीनेमें क्षीण चन्द्रमा न होनेसे और चन्द्रमा गोचरमें शुद्ध होनेसे आनन्द-पूर्वक बालकको घरसे पहिले बाहर निकाले ॥ १० ॥

अपिच ।

**चतुर्थे मासि कर्तव्यं शिशोर्निष्क्रमणं गृहात् ॥ ११ ॥**

इति विष्णुधर्मोत्तरे ।

अर्थ-विष्णुधर्मोत्तरमें लिखा है कि, चौथे महीनेमें बालकको पहिले घरसे बाहर निकालना चाहिये ॥ ११ ॥

अथ ताम्बूलप्राशनम् ।

**विगतवरुणनाथाधोमुखाद्रान्यभेषु**
**त्रिभवरिपुगपापैः केन्द्रकोणस्थसौम्यैः ।**
**विकुजरविजवारे सार्द्धमासद्वये स्या-**
**द्वृपझपबुधसौरक्षोंदये पूगदानम् ॥ १२ ॥ ( १ )**

अर्थ-अब ताम्बूलदान कहते हैं-आश्लेषा, कृत्तिका, भरणी, मघा, विशाखा, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा और आर्द्रा नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें, लग्नके तीसरे ग्यारहवें और छठे स्थानमें पापग्रह और केन्द्र और त्रिकोण स्थानमें शुभग्रह होनेसे मङ्गल और शनिभिन्न वारमें जन्मदिनसे अढाई महीनेके मध्यमें वृष, मीन, मिथुन, कन्या, मकर और कुम्भ लग्नमें बालकको पहिले ताम्बूल ( पान ) खिलाना चाहिये ॥ १२ ॥

अथ भूम्युपवेशनम् ।

**ब्रह्मोत्तरेन्द्रमृगमैत्रकराश्विनीषु वारेषु सप्तसु विशिष्य कुजस्य वारे ।**

---

( १ ) अथ ताम्बूलदानमाह-विगतेति । विगतवरुणनाथो यत्राधोमुखे नक्षत्रगणे ८।३।२।१०।१६।११।२०।२५ आर्द्रा च तदन्येषु भेषु वर्जनद्वयेन शतभिषाया ग्रहणम् । तथा च राजमार्तण्डे-" मूलस्वातिधनेन्दुमित्रवरुणज्येष्ठाश्विनीरोहिणी पौष्णर्क्षे रविजीवशुक्ररजनीनाथात्मजाना दिने । कन्यामीननृयुग्मगोसमुदये शस्तेषु चन्द्रादिषुप्राक्पूगाशनमिष्यते शिशुजनस्यान्नाशन वापि च ॥"तथा " मूलादितिश्रवण पुष्यकरोत्तरेषु पौष्णाशिवचित्ररजनीकरशक्रभेषु । वारेषु जीवशशिसूर्यसितेन्दुजाना ताम्बूल भक्षणविधिः कथितः शिशूनाम् ॥ " सौभगिणा तु अन्तभोऽपीति पाठ कृत्वा अशुभमेव व्याख्यातम् । लग्नात्तृतीयैकादशपष्ठगैः पापैः केन्द्रत्रिकोणगैः शुभैः कुजशनिवर्जितेषु वारेषु सार्धमासद्वये वृषमीनकन्यामिथुनमकरकुम्भलग्ने ताम्बूलदान प्रशस्तं स्यात्।

**मासेऽथ पञ्चम इह प्रतिमुच्य रिक्तां**
**शस्तं शिशोर्भवति भूम्युपवेशनं प्राक् ॥ १३ ॥ ( २ )**

अर्थ--अब बालकको पहिले पृथ्वीपर बिठलानेका मुहूर्त कहते हैं--रोहिणी, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, ज्येष्ठा, मृगशिर, अनुराधा, हस्त और अश्विनी नक्षत्रमें रविप्रभृति सातों वारोंमें विशेषकरके मंगलवारमें, पांचवें महीनेमें रिक्ताभिन्नतिथिमें बालकको पहिले भूमिपर बिठलाना चाहिये ॥ १३ ॥

अथान्नप्राशनम् ।

**पूर्वेशान्तकसर्पमूलरहितेष्वृक्षेष्वरिक्ते तिथौ**
**षष्ठे मासि सितेन्दुजीवदिवसे गोऽङ्गर्क्षमीनोदये ।**
**केन्द्राष्टान्त्यत्रिकोणभैः शुभयुतैस्तैरेव पापोज्झितै-**
**र्हित्वेन्दुं रिपुरंध्रगं शिशुजनस्यान्नाशनं शोभनम् ॥१४॥(३)**

अर्थ--अब बालकके अन्नप्राशनका मुहूर्त कहते हैं--पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, आर्द्रा, भरणी, आश्लेषा और मूल इन सब नक्षत्रोंको छोडकर अन्य समस्त नक्षत्रोंमें रिक्ताभिन्न तिथिमें छठे महीनेमें, शुक्र, सोम, बृहस्पति, रवि और बुधवारमें, वृष, मिथुन, कन्या और मीन लग्नमें लग्नके केन्द्रस्थानमें आठवें, बारहवें और त्रिकोणमें शुभ ग्रहोंके होनेसे और लग्नके उक्त समस्त स्थानोंमें पापग्रह न होनेसे लग्नसे छठे और आठवें चन्द्रमाको छोडकर, बालकका अन्नप्राशन करना चाहिये ॥ १४ ॥

अपिच ।

**एकादश्याश्च सप्तम्यां द्वादश्यां पञ्चपर्वसु ।**
**बलमायुर्यशो हन्याच्छिशूनामन्नभक्षणम् ॥ १५ ॥**

इति दीपिकायाम् ।

अर्थ--दीपिकामें लिखा है कि, एकादशी, सप्तमी, द्वादशी और पञ्चपर्वमें बाल-

---

( २ ) प्रथमं शिशोः पृथिव्यामुपवेशनमाह- ग्रहेति स्पष्टोऽर्थः ।

( ३ ) अन्नप्राशनमाह पूर्वे इति । पूर्वात्रयमार्द्रा भरणी आश्लेषामूलम् एतद्वर्जितेष्व-न्येषु नक्षत्रेषु सितेन्दुजीवदिवसे इत्युपलक्षणं रविबुधवारेऽपि यथा राजमार्तण्डे-" वारे-ष्विन्दुजभार्गवेन्दुदिनकृद्वाचस्पतीनां शिशोरन्नप्राशनमङ्गलं मिथुनगोमीनोदये शोभनम् ।" तथा सारावल्याम् " दीप्तानलः कमलबन्धुदिने मनुष्यो मन्दानलः शशिरगो च कुजे रुजार्तः ॥ सौम्ये वली विपुलभोगसुखः सुरेज्ये शुक्रेऽतिभिक्षयुतस्तरणितो गतायुः । " इत्यनेन सोमवारे विधिनिषेधयोः श्रवणाच्चन्द्रस्य पूर्णक्षीणत्वभेदेन व्यवस्थापनमिति । गौर्वृषः स्त्री बुधगृहम् इति मिथुनकन्ये मीनश्च एतस्मिँल्लग्ने लग्नात्केन्द्राष्टमद्वादशनवप-ञ्चमराशिभिः शुभग्रहयुते. सद्भिस्तैरेव केन्द्राष्टान्त्यत्रिकोणभे पापवर्जितैः शिशोरन्नप्रा-शनं कार्यम् लग्नात् षष्ठाष्टमगं चन्द्रं वर्जयित्वेत्यर्थः । एतच्च कृष्णपक्षे न कर्तव्यम् ।

कको अन्न खिलानेसे उस बालकका बल आयु और यश नष्ट होजाता है ॥१५॥

पञ्चपर्वकथनम् ।

**अष्टमी पौर्णमासी च अमावास्या चतुर्दशी ।**
**पञ्च पर्वाण्यमून्याहुरार्याः संक्रमणं रवेः ॥ १६ ॥** दीपिकायाम् ।

अर्थ-अष्टमी, पूर्णिमा, अमावास्या, चतुर्दशी और सूर्यकी संक्रान्तिको पण्डितगण पञ्चपर्व कहते हैं ॥ १६ ॥

अन्यच्च ।

**ततोन्नप्राशनं षष्ठे मासि कार्यं यथाविधि । ( × )**
**अष्टमे वाथ कर्त्तव्यं यद्वेष्टं मङ्गलं कुले ॥ १७ ॥** ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, बालकका अन्नप्राशन छठे महीनेमें विधिपूर्वक करना चाहिये, आठवें महीनेमेंभी हो सक्ता है अथवा जिनके पूर्वापर जिस प्रकार कुलका नियम है, उसी समयमेंही अन्नप्राशन होसक्ता है किन्तु स्मार्त्तभट्टाचार्यने ज्योतिस्तत्त्वमें छठे महीनेकोही मुख्य समय कहा है वर्त्तमान पण्डित मण्डलीके मध्यमेंभी अनेक पण्डितोंका यही मत है, परन्तु कोई २ विद्वान् आठवें महीनेकोही मुख्य समय कहते हैं ॥ १७ ॥

अपरञ्च ।

**अन्नस्य प्राशनं कार्यं मासि षष्ठेऽष्टमे बुधैः ।**
**स्त्रीणान्तु पञ्चमे मासि सप्तमे प्रजगौ मुनिः ॥ १८ ॥**

अर्थ-कृत्यचिन्तामणिमें लिखा है कि, बालकका अन्नप्राशन छठे वा आठवें महीनेमें करना चाहिये-और कन्याका अन्नप्राशन पांचवें वा सातवें महीनेमें करै, इस प्रकार मुनियोंने कहा है ॥ १८ ॥ इति कृत्यचिन्तामणौ ।

प्रकारान्तरञ्च ।

**द्वादशीसप्तमीनन्दारिक्तासु पञ्चपर्वसु ।**
**बलमायुर्यशो हन्याच्छिशूनामन्नभक्षणम् ॥ १९ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, द्वादशी, सप्तमी, प्रतिपदा, एकादशी, षष्ठी,

---

यथा राजमार्तण्डः-षष्ठे मासि शुभे चन्द्रे पक्षे वाप्यासितेतरे ।अन्नस्य प्राशन कुर्याद्वितीय प्रथमं शिशोः ॥ " इति ॥

( × ) षष्ठ इति मुख्यकल्पः असमर्थस्य क्षेमायोगादिति न्यायात् इति ज्योतिस्तत्त्वे स्मार्तेनाभिहितम् ।

रिक्तातिथि और पंचपर्वमें बालकको अन्नप्राशन करनेसे उसका बल आयु और यशका नाश होता है ॥ १९ ॥

अन्यच्च ।

**षष्ठे मासि निशाकरे शुभकरे रिक्तेतरे वा तिथौ**
**सौम्यादित्यसितेन्दुजीवदिवसे पक्षे च कृष्णेतरे ।**
**प्राजेशादितिपौष्णवैष्णववसुगैर्हस्त्वादिपद्मकोत्तरैः-( क )**
**राग्नेयाप्यांतिपित्र्यभैश्च नितरामन्नादिभक्ष्यं शुभम् ॥ २० ॥**

इति भुजबलभीमे ।

अर्थ-भुजबलभीमने लिखा है कि, छठे महीनेमें चन्द्रमा शुद्ध होनेसे रिक्ताभिन्न तिथिमें बुध, रवि, सोम, और बृहस्पतिवारमें, शुक्लपक्षमें, रोहिणी, मृगशिर, पुनर्वसु, पुष्य, रेवती, अश्विनी, श्रवण, धनिष्ठा, हस्त, चित्रा, स्वाति, विशाखा, अनुराधा, ज्येष्ठा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, कृत्तिका, शतभिषा और मघा नक्षत्रमें बालकका अन्नप्राशन शुभ होता है अन्नप्राशनमें विद्ध ऋक्ष ( दशयोगभंग ) देखना चाहिये ॥ २० ॥

अपरश्च ।

**वृषद्वन्द्वधनुर्मीनकन्यालग्नेऽन्नभक्षणम् ।**
**त्रिकोणाष्टकयुग्मान्त्यग्रहायद्वत्तथा फलम् ॥ २१ ॥ ( ख )**

अर्थ-वृष, मिथुन, धन, मीन और कन्या लग्नमें अन्नप्राशन करना चाहिये, किन्तु इन सब लग्नोंके मध्यमें जिस २ लग्नमें बालकको अन्न खिलावें उसके नववें, पांचवें, आठवें, दूसरे और बारहवें स्थानमें जो ग्रह जिस प्रकारसे स्थित हों उसी प्रकार फल होता है अर्थात् शुभ ग्रहोंके होनेसे शुभ फल और पापग्रहोंके होनेसे अशुभ फल होता है ॥ २१ ॥

प्रकारान्तरञ्च ।

**दुष्टः शशधरो लग्नात्षष्ठाष्टमस्थोऽन्नभक्षणे ॥ २२ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, अन्नप्राशनमें लग्नसे छठे और आठवें चन्द्रमा दूषित होता है अतएव छठे और आठवें चन्द्रमाको परित्याग करना चाहिये ॥२२॥

इत्यन्नप्राशनम् ।

---

( क ) युगैरिति-प्राजेशादौ प्रत्येकं सम्बध्यते । अत्रापि तिथ्यादिविद्धमृक्षं विवर्जयेत् ।
( ख ) यद्वत्तथा फलमिति शुभयोगे शुभफलं पापयोगेऽशुभफलमित्यर्थः ॥

अथ चूडाकरणम् ।

**चूडा माघादिषट्के लघुचरमृदुभे मैत्रहीने सशक्रे**
**नानंशे सत्सु केन्द्रेष्वशुभगगनगैर्वृद्धिगैर्विष्णुबोधे ।**
**नो रिक्ताद्यष्टषष्ठान्त्यतिथिषु नयमाराह्युग्माब्दमासे**
**नो जन्मर्क्षेन्दुमासे विघटकुजशशीनर्क्षलग्नेऽर्कशुद्धौ ॥ २३ ॥ (ग)**

अर्थ—अब चूडा करणका मुहूर्त्त कहते हैं—माघसे आदि लेकर छः महीनोंमें पुष्य, अश्विनी, हस्त, स्वाति, पुनर्वसु, श्रवण, धनिष्ठा, शतभिषा, चित्रा, मृगशिर, रेवती और ज्येष्ठा नक्षत्रमें, ग्रहोंके अनंश दिनमें अर्थात् संक्रान्तिभिन्नदिनमें केन्द्रस्थानमें शुभग्रह और तीसरे, ग्यारहवें और छठे स्थानमें पापग्रह होनेसे हरिशयनभिन्न कालमें, रिक्ता, प्रतिपदा, अष्टमी, षष्ठी और पूर्णिमाको छोडकर अन्य तिथियोंमें, शुक्लपक्षमें, शनि मंगलको छोडकर अन्य वारोंमें, युग्म वर्षमें युग्म मास, जन्म नक्षत्र, जन्मके चन्द्रमा और जन्मके महीनेको छोडकर अन्य महीनेमें तुला, मेष, वृश्चिक, कर्क और सिंह लग्नको छोडकर अन्य लग्नोंमें सूर्य शुद्ध होनेसे चूडाकर्म करना चाहिये ॥ २३ ॥

---

( ग ) चूडाकरणमाह–चूडेति । माघादिषु मासेषु चूडा कार्या अत्र च पट्सख्याश्रवणाच्चैत्रेऽपि चूडा कार्या । चैत्रनिषेधस्तु नित्यक्षौरपरः । तथा च वक्ष्यते । ' नेष्टो हरिज्यभवनोपगतोऽत्र सूर्यः' इति । लघुगणः । ८ । १ । १३ । चरगणः १५ । ७ । २२ । २३ । २४ । मैत्रहीने अनुराधावर्जिते मृदुगणे १४ । ५ । २७ । सशक्रे ज्येष्ठायाश्चेत्यर्थः । नानशे ग्रहैर्निरंशीकृते दिने चूडा कार्या इत्यर्थः । केन्द्रेषु शुभग्रहेषु सत्सु गगनगो ग्रहः अशुभगगनगैरशुभग्रहैर्वृद्धिगैरुपचयस्थैः सद्भिः विष्णुबोधे च चूडा कार्येत्यर्थः । तथाच राजमार्तण्डे–"क्षौरर्क्षेषु कुलोद्भवेन विधिना चूडा विधेया बुधैर्लग्नस्थे भृगुजे चतुष्टयगते जीवेऽथवा बोधने । मन्दार्कावनिनन्दनैश्च शशिना क्षीणेन युक्तेषु च लाभारातितृतीयभेषु विहिते राश्युद्गमे सर्वदा ॥ " इति । सौभरिणा तु अशुभैर्गगनगैर्दशमस्थैः वृद्धिगैरेकादशस्थैरिति प्रकल्पितम् । विष्णुबोध इत्यनेनापाढेपि हरिशयनानन्तरं न कर्त्तव्यमित्यर्थः । रिक्तातिथौ आद्ये प्रातिपदि अष्टम्यां षष्ठ्यांचान्त्यतिथौ पौर्णमास्यां च न चूडा अमावस्यायान्तु कृष्णपक्षे विधानाभावादेव निषेधः । तथा च राजमार्तण्डे-" चन्द्रे च सप्तोपचयाद्यसंस्थे तिथावरिक्तेऽपि च शुक्लपक्षे । प्राचीमुखः सौम्यमुखोऽपि भूत्वा कुर्यान्नरः क्षौरमनुत्कटस्थे " इति । नयमाराह्युग्माब्दमासि शनिमंगलवारे न चूडा तथा रविवारेऽपि दोषः । तत्रापि प्रतीकारानन्तरं कार्यामिति । राजमार्त्तण्डे–" वागीशशुक्रशनिशाकराणां वारे प्रशस्तं मुनयो वदन्ति । क्षौरं दिने तीक्ष्णरुचेश्च चैत्रमासेऽथवा सन्निहिते हुताशे ' ॥ अथ युग्माब्दे युग्ममासे च न चूडा । अत्र त्रिंशद्दिनात्मकमासव्यवस्थायां युग्मविचारः कार्यः । तथा जन्मादौ सान्नो मत इति तथा जन्मनक्षत्रे जन्मचन्द्रे

चूडाकर्मद्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे (❀) तृतीये वा कर्त्तव्यं स्मृतिचोदनात् ॥२४॥

इति मनुः ।

अर्थ–भगवान् मनुने कहाहै कि; ब्राह्मणादि सबकोही पहिले वर्षमें वा तीसरे वर्षमें बालकका चूडाकर्म ( मुंडन ) करना चाहिये ॥ २४ ॥

अयुग्माऽब्दे तथा मासि चूडा भौमशनीतरे ।
अर्केन्दुकालशुद्धौ च जन्ममासेन्दुभेतरे ॥
रिक्तादर्शाष्टमीषष्ठीप्रतिपद्वर्जिते सिते ॥ २५ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–अयुग्मवर्षमें, अयुग्ममहीनेमें मंगल और शनिवारको छोडकर अन्य वारोंमें सूर्य चन्द्रमा और कालशुद्धि होनेसे, जन्मका महीना, जन्मका चन्द्रमा और जन्मके नक्षत्रको छोडकरके रिक्ता अमावस्या, अष्टमी, षष्ठी और प्रतिपदा तिथिको छोडकर अन्यतिथियोंमें शुक्लपक्षमें बालकका चूडाकर्म ( मुण्डन ) कराना चाहिये ॥ २५ ॥

षष्ठयष्टमीपञ्चदशी पक्षद्वयचतुर्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥ २६ ॥ (१)

इति दक्षः ।

अर्थ–दक्षमुनिने कहा है कि, षष्ठी, अष्टमी, पूर्णिमा और दोनों पक्षोंकी चतुर्दशी इन समस्त तिथियोंमें तैल लगानेसे, मांस, खानेसे स्त्रीगमन करनेसे और क्षौरकर्म करानेसे ( हजामत बनवानेसे ) पातक लगता है ॥ २६ ॥

मेषसिंहतुलाकर्किवृश्चिकेतरलग्नके ।

---

जन्ममासे च न चूडा कार्या । विषटकुजशशिनिर्क्षेलग्ने घटस्तुला कुजर्क्षे मेषवृश्चिकौ । चन्द्रर्क्षे कर्कटः । इनः सूर्यः तद्गृह सिंहः । एतद्व्यतिरिक्ते लग्ने गोचरशुद्धे रवौ चूडा कार्या । इति ॥

( ❀ ) नात्र अशक्तस्य क्षेमायोगादिति न्यायात्प्रथमाब्दस्य प्राधान्य किन्तु तृतीयाब्दस्य तथा च ' चूडाकार्ये तृतीयाब्दः सर्वगृह्यादिसम्मतः । तत्कालेऽशौचवृद्धश्च मुख्य इत्यवगम्यते ' इति स्मार्ताः । शङ्खलिखितौ । " तृतीयवर्षे चूडाकरणं पञ्चमे वा " " पुनश्चूडाकृते माता यदि सा गर्भिणी भवेत । शस्त्रेण मृत्युमाप्नोति तस्माच्चौलं विवर्जयेत् । सूनोर्मातरि गर्भिण्यां चूडाकर्म न कारयेत । पञ्चवर्षात्प्राक्तदूर्ध्वं गर्भिण्यामपि कारयेत । गर्भे मातुः कुमारस्य न कुर्याच्चौलकर्म तु । पञ्चमासादधः कुर्यादत ऊर्ध्वं न कारयेत ॥ इति ग्रन्थान्तरे ।

( १ ) सामान्यतो दोषमाह–षष्ठयष्टमीति ।

श्रवणादित्रयस्वातीचित्रापुष्याश्विचन्द्रभे ।
आदित्यरेवतीहस्तज्येष्ठामूले च चौडकम् ॥ २७ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, मेष, सिंह, तुला, कर्क और वृश्चिक, इन लग्नोंको छोडकर अन्य लग्नोंमें श्रवण, धनिष्ठा, शतभिषा, स्वाती, चित्रा, पुष्य, अश्विनी, मृगशिर, पुनर्वसु, रेवती, हस्त, ज्येष्ठा और मूल नक्षत्रमें चूडाकर्म ( मुंडन ) कराना चाहिये ॥ २७ ॥

क्षौरं प्रशस्तं मृगचापकन्याकुम्भेषु मीने मिथुने वृषे च ।
लग्ने धनं बुद्धिविवर्द्धनञ्च शेषेषु रोगो भयमर्थनाशः॥ २८ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखाहै कि, मकर, धन, कन्या, कुम्भ, मीन, मिथुन और वृषलग्नमें हजामत बनवानेसे धन और बुद्धिकी वृद्धि प्राप्त होती है। उक्त लग्नोंमें न बनवानेसे रोग, भय और द्रव्यका नाश होजाता है ॥ २८ ॥

पौष्णाश्विपुष्यवसुवासववासुदेव-
ब्रह्मार्कचन्द्रवरुणादितिचित्रभेषु ।
वारेषु सोमबुधवाक्पतिभार्गवाणां
क्षौरं करोति कुशलं खलु मानवानाम् ॥ २९ ॥ ( २ )

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, रेवती, अश्विनी, पुष्य, धनिष्ठा, श्रवण, रोहिणी, हस्त, मृगशिर, शतभिषा, पुनर्वसु और चित्रा नक्षत्रमें, सोम, बुध, बृहस्पति और शुक्रवारमें मनुष्यको क्षौरकर्म करानेसे ( हजामत बनवानेसे ) मङ्गल होता है ॥ २९ ॥

सूर्ये दक्षिणमार्गगामिनि हरौ सुप्ते निरंशे रवौ
क्षीणे शीतरुचौ महीजयमयोर्वारे निशासन्ध्ययोः ।
भुक्तेऽभ्यक्ततनौ निषिद्धसमयेऽलङ्कारयुक्ते शिशौ
क्षौराद्रोगभयं वदन्ति यवना मृत्युं तथान्ये जगुः ॥ ३० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, दक्षिणायनमें, हरिशयनमें, संक्रान्तिमें

---

( २ ) अत्रापि तिथ्यादीन्निद्धमृक्षं वर्जयेदिति स्मार्ताः ।

क्षीण चन्द्रमामें, मङ्गल और शनिवारमें, रात्रि और सन्ध्याकालमें भोजनके अन्तमें अभ्यंग अर्थात् तेल लगाकर और निषिद्ध कालमें अलङ्कार ( आभूषण ) पहनकर हजामत बनवानेसे रोगभय होता है, इसप्रकार यवनमुनिका मत है किंतु अन्यान्य मुनियोंके मतसे इस समय वा उक्त प्रकारसे हजामत बनवानेमें मनुष्यकी मृत्यु होती है ॥ ३० ॥

**मानं हरेत्क्षौरमिहायुषोर्कः शनैश्चरः पञ्च कुजस्तथाष्टौ ।**
**आचार्यभृग्विन्दुबुधाः क्रमेण (*) दद्युर्दशैकादशसप्तपञ्च॥३१॥**

इति राजमार्त्तण्डे ।

अर्थ--राजमार्तण्डमें लिखा है कि रविवारमें हजामत बनवानेसे सन्मानहानि और आयुःक्षय होता है, रविवारमें हजामत बनवानेसे जो दोष कहा है शनिवारमें बनवानेसे उससे पंच गुण दोष और मंगलवारमें बनवानेसे उससे अठगुना दोष होता है बृहस्पतिवारमें हजामत बनवानेसे दशगुण शुभफल होता है। इसी प्रकार शुक्रवारमें ग्यारह गुण, सोमवारमें सप्तगुण और बुधवारमें हजामत बनवानेसे पंचगुण शुभ फल होता है ॥ ३१ ॥

अन्यच्च ।

**माघादिषट्के ( १ ) समये विशुद्धे हरौ प्रबुद्धे शुभदे खरांशौ ॥**
**वर्षत्रये वाप्यथ पञ्चमे वा चूडा च कार्या प्रथमं शिशूनाम् ॥ ३२ ॥**

इति ज्योतिःसारसंग्रहे ।

अर्थ–ज्योतिःसारसंग्रहमें लिखा है कि, माघसे आदि लेकर छः महीनोंके मध्यमें शुद्धकालमें, श्रीहरिके जाग्रतसमयमें, सूर्य शुद्ध होनेसे, तीनवर्षमें वा पांच वर्षमें बालकका चूडाकर्म ( मुण्डन ) करावे ॥ ३२॥

**उत्तरवर्त्मनि सवितरि चूडाकरणं जगुः शुभं यवनाः ।**
**चैत्रे मासि दिवाकरवारे शिखिसन्निधाने च ॥ ३३ ॥**

इति भोजराजः ।

अर्थ–भोजराजाने कहा है कि, उत्तरायणके मध्यमें चैत्रमासमें रविवारमें अग्नि सन्निहितमें चूडाकर्म होसक्ता है इस प्रकार यवनमुनिका मत है किन्तु चैत्रके महीनेमें रविवारमेंही चूडाकर्म प्रशस्त ह ॥ ३३ ॥

---

( × ) जीवादिवारे क्षौरं प्रशस्तमिति स्मार्त्तेनोक्तम् ।
( १ ) माघादिषट्क इत्युपपादनात् चैत्रेऽपि चूडाकरणे रविवार एव इति हृदयानन्दः।

**जन्मर्क्षे जन्ममासे च युग्ममासे च वत्सरे ।**
**न कुर्यात्प्रथमं क्षौरं विशेषाच्चैत्रपौषयोः ॥ ३४ ॥ (+)**

इति गर्गः।

अर्थ-गर्गमुनिने कहा है कि, जन्मके नक्षत्रमें जन्मके महीनेमें, युग्ममहीने और युग्मवर्षमें विशेषकरके सौर चैत्र और पौषके महीनेमें बालकका प्रथम क्षौरकर्म न कराना चाहिये। चूडाकर्ममें दशयोगभङ्ग, युतवेध और यामित्र-वेधका विचार करना चाहिये ॥ ३४ ॥

अथ नित्यक्षौरम्।

**चूडोदितर्क्षमुदयः क्षण एव चैषा-**
**मिष्टौ बुधेन्दुदिवसौ क्षुरकर्मशुद्धौ ।**
**नेष्टो हरीज्यभवनोपगतोऽत्र सूर्यः**
**कालाविशुद्धिरहितं त्वितरत्पुरावत् ॥ ३५ ॥ (*)**

अर्थ-अब नित्य क्षौरकर्मको कहते हैं। चूडाकर्ममें कहे हुए नक्षत्रोंमें वा चूडा कर्मके नक्षत्रोंके मुहूर्तमें लग्न करके बुधवार अथवा सोमवारमें कालशुद्धिको छोडकर चूडाकर्मोक्त सभी नित्य क्षौरकर्ममें प्रशस्त है ॥ ३५ ॥

**न स्नानमात्रगमनोत्सुकभूषितानां-**
**मभ्यक्तभुक्तरणकालनिरासनानाम् ॥**
**सन्ध्यानिशाशनिकुजार्कदिनेषु रिक्ते**
**क्षौरं हितं प्रतिपदाह्नि तथैव विष्टयाम् ॥ ३६ ॥**

इति राजमार्त्तण्डे।

अर्थ-नित्य क्षौरके विषयमें राजमार्त्तण्डमें लिखा है कि, स्नानके अन्तमें

---

(+) पुत्रकन्ययोस्तु चैत्रे मासि ज्येष्ठपुत्रकन्ययोस्तु मार्गे ज्येष्ठस्य दशाहाभ्यन्तरे च चूडादिनिषेधो विवाहप्रकरणे उक्तः चूडायां दशयोगभङ्गयुतयामित्रवेधा विचार्याः।

(*) नित्यक्षौरमाह-चूडा इति। चूडोक्तनक्षत्रं तदप्राप्तावेषां चूडोक्तनक्षत्राणां क्षणो मुहूर्त्तमेव उदयो लग्नं वा स्यात् बुधेन्दुदिवसौ नित्यक्षुरकर्मशुद्धाविष्टौ अन्ये पञ्च वारा निषिद्धाः। तथा पशुपतिदीपिकायाम्।" शुक्रः शुक्रक्षय कुर्यान्मानं हन्ति गुरोर्दिनम्। शनौ भौमे भवेद्रोगो मनस्तापो रवेर्दिने॥ " अत्र नित्यक्षौरे हरिः सिंह इज्यभवनं धनुर्मीनौ एषु गतः सूर्यो नेष्टः भाद्रपौषचैत्रमासेषु क्षौरं न कार्यमित्यर्थः। अत्राप्यशक्तावग्निसाक्षिकं कृत्वा कर्त्तव्यं तथा-" क्षौरं दिने तीक्ष्णरुचेस्तु चैत्रमासेऽथवा सन्निहिते हुताशे " इति। पुरावच्चूडाकरणवत् अन्यत्सर्वं ज्ञातव्यम्। तच्च कालाविशुद्धिरहितं

यात्रा करके आभूषण पहिननेके बाद तैल लगाकरके भोजन करनेके बाद रण-समयमें निरशनमें, सन्ध्याकालमें और रात्रिमें, शनि, मङ्गल और रविवारमें, रिक्ता, प्रतिपदा और विष्टि भद्रामें क्षौरकर्म करानेसे अमङ्गल होता है ॥ ३६ ॥

चूडोदिते तथा ऋक्षे बुधेन्दुदिवसे नरः ।
नित्यक्षौरं प्रकुर्वीत जन्ममासे विवर्जयेत् ॥ ३७ ॥

इति ज्योतिःसारे ।

अर्थ–ज्योतिषसारमें लिखा है कि, चूडोदित नक्षत्रोंमें बुध और सोमवारमें क्षौरकर्म प्रशस्त है, किन्तु जन्मके महीनेको छोडदेवे ॥ ३७ ॥

प्राचीमुखः सौम्यमुखोऽपि भूत्वा
कुर्यान्नरः क्षौरमनुत्कटस्थः ॥ ३८ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, मनुष्य हजामत बनवानेके समय पूर्व वा उत्तरको मुख करके कोमल आसनपर बैठे ॥ ३८ ॥

उत्तरात्रितययाम्यरोहिणीरौद्रसर्पपितृभेषु चाग्निभे ।
श्मश्रुकर्म सकलं विवर्जयेत्(क)प्रेतकार्यमपि बुद्धिमान्नरः॥३९॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिस्तत्त्वमें लिखा है कि, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, भरणी, रोहिणी, आश्लेषा, आर्द्रा, मघा और कृत्तिका नक्षत्रमें श्मश्रुकर्म ( क्षौरकर्म ) और प्रेतकार्यको बुद्धिमान् मनुष्य परित्याग करै ॥ ३९ ॥

चन्द्रशुद्धिर्यदा नास्ति तारायाश्च विशेषतः ।
अक्षौरिभेऽपि कर्तव्यं चन्द्रचन्द्रजयोर्दिने ॥ ४० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, क्षौर विषयमें विहितनक्षत्र होनेसे यदि चन्द्रमाशुद्धि और ताराशुद्धि न होय तो भी सोमवारमें और बुधवारमें क्षौर हो सक्ता है ॥ ४० ॥ ( ख )

---

–नित्यक्षौरे शुक्रादिकालाशुद्धिदोषो नास्तीत्यर्थः । अत्र शुक्लकृष्णपक्षव्यवस्था नास्ति किन्तु पूर्वोक्ततिथिमात्रनिषेधः । इति ।

( क ) प्रेतकार्यं पतितप्रेतसम्प्रदानकदासीघटदानविषयकमिति स्मार्त्ताः ।

( ख ) इस वचनका तात्पर्य यह है कि, निषिद्ध नक्षत्रमेंभी यदि चन्द्रशुद्धि और ताराशुद्धि होय तो क्षौरकर्ममें दोष नहीं होता है और सोमवार और बुधवार सर्वापवादक है ।

मानं क्षौरे गुरुर्हन्ति शुक्रं शुक्रो धनं रविः ।
आयुरङ्गारको हन्ति सर्वं हन्ति शनैश्चरः ॥ ४१ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, बृहस्पतिवारमें हजामत बनवानेसे मानहानि होती है, इसी प्रकार शुक्रवारमें शुक्र ( वीर्य ) का नाश होता है, रविवारमें धनकी हानी होती है मङ्गलवारमें आयु क्षय होता है और शनिवारमें हजामत बनवानेसे मनुष्यका मान, बल, धन और आयुका नाश होता है ॥ ४१ ॥

अन्यच्च ।

रवौ दुःखं सुखं चन्द्रे कुजे मृत्युर्बुधे बलम् ।
मानं हन्ति गुरोर्वारे शुक्रे पुत्रक्षयो भवेत् ।
शनौ च सर्वं दोषास्युर्वर्जयेत्क्षौरकर्मणि ॥ ४२ ॥

इति ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमें लिखा है कि,रविवारमें क्षौर करानेसे दुःख होता है इसी प्रकार सोमवारमें सुख, मंगलमें मृत्यु, बुधमें बलकी वृद्धि, बृहस्पतिवारमें मानहानि, शुक्रमें पुत्रनाश और शनिवारमें क्षौर करानेसे समस्त दोष होते हैं । अत एव उक्त समस्त निषिद्ध वारोंमें क्षौरकर्म न करावे किन्तु सामवेदी मङ्गलवारमें, यजुर्वेदी शुक्रवारमें और ऋग्वेदी बृहस्पतिवारमें क्षौरकर्म करासक्ता है, व्यवहार भी इसी प्रकार है ॥ ४२ ॥

देवकार्ये पितृश्राद्धे रवेरंशपरिक्षये ।
क्षौरकर्म न कुर्वीत जन्ममासे च जन्मभे ॥ ४३ ॥

इति ज्योतिषतत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि देवकार्यमें,श्राद्धके दिनमें,संक्रान्तिमें जन्मके महीनेमें और जन्मके नक्षत्रमें क्षौरकर्म न कराना चाहिये ॥ ४३ ॥

आज्ञया नरपतिर्द्विजन्मनां दारकर्ममृतसूतकेषु च ।
बन्धमोक्षमखदीक्षणेष्वपि क्षौरमिष्टमखिलेषु चोडुषु ॥४४॥

इति श्रीपतिरत्नमालायाम् ।

अर्थ-श्रीपतिकी रत्नमालाग्रन्थमें लिखा है कि,विवाहमें,मृतशौच और जननाशौचके अन्त दिनमें, जेलखानेमेंसे छूटनेमें और यज्ञदीक्षामें, राजा और ब्राह्मणोंकी अनुमति ( आज्ञा ) से समस्त नक्षत्रोंमें ही क्षौरकर्म होसक्ता है ॥ ४४ ॥

केशवमानर्त्तपुरं पाटलिपुत्रं पुरीमहिच्छत्राम् ।
दितिमदितिश्च स्मरतां क्षौरविधौ भवति कल्याणम् ॥४५॥

इति वृद्धगार्ग्यमुनिः ।

अर्थ–वृद्धगार्ग्यमुनिने कहाहै कि, केशव, आनर्त्तपुर, अहिच्छत्रापुरि, दिति और अदिति इनके नामका स्मरण करनेसे क्षौरकर्ममें मङ्गल होता है ॥ ४५ ॥

श्मश्रुकर्म कारयित्वा नखच्छेदमनन्तरम् ॥ ४६ ॥

इति वराहपुराणे ।

अर्थ–वराहपुराणमें लिखा है कि, हजामत बनानेके बाद नाखुन कटाना चाहिये ॥ ४६ ॥

अथ कर्णवेधः ।

नो जन्मेन्दुभमासरविजक्ष्माजाहसुप्ताच्युते
शस्तेऽर्के लघुविष्णुयुग्ममृदुभस्वात्युत्तरादित्यभैः ॥
सौम्यैर्व्यायत्रिकोणकण्टकगतैः पापैस्त्रिलाभारिगे-
रोजेऽब्दे श्रुतिवेध इज्यसितभे लग्ने च काले शुभे॥४७॥ *

इति दीपिकायाम् ।

अर्थ–अब कर्णवेध ( कान् छिदनेका ) मुहूर्त कहते हैं । दीपिकामें लिखा है कि, जन्मचन्द्रमा, जन्मनक्षत्र और जन्मके महीनेको छोड अन्यमें रवि, शनि, मङ्गल वारको छोडकर अन्य वारोंमें श्रीहरिके जाग्रतकालमें सूर्य शुद्ध होनेसे पुष्य, अश्विनी, हस्त, श्रवण, धनिष्ठा, चित्रा, अनुराधा, मृगशिर, रेवती, स्वाति, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा और पुनर्वसु नक्षत्रमें, लग्नके तीसरे, ग्यारहवें, नववें पांचवें और केन्द्रस्थानमें शुभ ग्रह होनेसे और तीसरे, ग्यारहवें और छठे स्थानमें पाप ग्रह होनेसे अयुग्मवर्षमें धन, मीन, वृष, और तुला लग्नमें शुद्ध कालमें बालकका कान छिदवाना चाहिये ॥ ४७ ॥

यदा पत्रद्वयं तिष्ठेत्सम्भवोऽथ परस्य च ।
पट्कर्ण तं विजानीयाद्वर्हितश्च त्रयस्य च ॥ ४८ ॥

* कर्णवेधमाह–नोजन्मेति । शुभे काले शुद्धकाले ओजेऽब्दे अयुग्मवर्षे श्रुतिवेधः कर्तव्यः । अत्र निषेधमाह । जन्मचन्द्रे जन्मनक्षत्रे जन्ममासे सूर्यशनिमङ्गलवारेषु च सुप्तेऽच्युते हरिशयने न कर्तव्यमित्यर्थः । विधिमाह शस्तेऽर्के सौरशुद्धेऽर्के लघुगणे ८ । १ । १३ । विष्णुयुग्मे २२ । २३ मृदुगणे १४ । २७ । ५ । २७ । स्वात्याम् उत्तरात्रये १२ । २१ । २६ आदित्यभे पुनर्वसौ इज्यसितभे गुरुशुक्रभे धनुर्मीने वृषे तुलायां च कार्यमित्यर्थः । शेषं सुगमम् ।

इत्याशङ्क्य द्वयोर्मध्ये शुचिर्यस्याथ वत्सरे ।
कर्णवेधो हिततस्स्य नात्र ज्येष्ठविचारणा ॥ ४९ ॥
पट्कर्णोत्पत्तिमाशङ्क्य भानोः शुद्ध्या समेऽपि च ।
कर्णवेधे न दोषः स्यादन्यथा मरणं भवेत् ॥ ५० ॥ (*)

इति माण्डव्यादिषु ।

अर्थ-जिसके दो पुत्र है और दोनोंमेसे एककाभी कर्णवेध नहीं हुआ है और इसी अवस्थामें एक पुत्र और होनेकी सम्भावना है तब उसको पट्कर्णवेध कहते हैं, पट्कर्णवेध होनेसे तीनोंका अमङ्गल होता है पट् हो सक्ता है इस शङ्काकरके वर्तमान दोनों पुत्रोंके मध्यमें उसी वर्षमें जिसके सूर्यादि शुद्धि होय उसकाही कर्णवेध करावे इसमें ज्येष्ठादिक्रमका विचार न करे पट्कर्णकी शङ्कासे सूर्य शुद्धि होनेसेही कर्णवेध कराना चाहिये इसमें युग्मवर्षका विचार न करे उक्त प्रकार कर्णवेध न करानेसे ज्येष्ठपुत्रकी मृत्यु होती है ॥ ४८ ॥ ४९ ॥ ५० ॥

न जन्ममासे न च चैत्रपौषे न युग्मवर्षे न हरौ प्रसुप्ते ।
रवौ न दुष्टे न च कृष्णपक्षे न जन्मभे कर्णविधिःप्रशस्तः ॥५१॥

इति राजमार्त्तण्डे ।

अर्थ-राजमार्त्तण्डमें लिखा है कि, जन्मके महीनेमें, सौर चैत्र और सौर पौषमें युग्मवर्षमें, श्रीहरिके शयनकालमें, सूर्य गोचरमें अशुद्ध होनेसे कृष्णपक्षमें और जन्मनक्षत्रमें कर्णवेध नहीं होता है ॥ ५१ ॥

सूर्येऽनुकूले शशिनि प्रशस्ते तारावले चन्द्रविवर्द्धपक्षे ।
अयुग्मवर्षे शुभद् शिशूनां कर्णस्य वेधं मुनयो वदन्ति ॥५२॥

अर्थ-ज्योतिःसारसंग्रहमें लिखाहै कि, गोचरमें सूर्यशुद्धि, चन्द्रशुद्धि, और ताराशुद्धि होनेसे शुक्लपक्षमें और अयुग्मवर्षमें बालकोंका कान छिदाना चाहिये, मुनिगणोंने इस प्रकार कहा है ॥ ५२ ॥

इति ज्योतिःसारसंग्रहे ।

स्वात्यश्विनीहस्तपुनर्वसौ च चन्द्रेऽनुकूले गुरुशुक्रवारे ।
कर्णस्य वेधो बुधवासरे वा पुष्येन्दुचित्राहरिरेवतीषु ॥५३॥

इति ज्योतिःसारे ।

अर्थ-ज्योतिःसारमें लिखा है कि, स्वाति, अश्विनी, हस्त, पुनर्वसु, पुष्य

(*) मरणं ज्येष्ठस्य इति दयानन्द । अत्रापि द्वयोगभगो विचार्यः । " कर्णवेधे विवाहे च व्रते पुमसने तथा । प्राशने चाद्यचूडायां विहृतस्य विवर्जयेत् ॥" इति वचनात् ।

मृगशिर, चित्रा, श्रवण और रेवती, नक्षत्रमें, बृहस्पति, शुक्र और बुधवारमें गोचरमें चन्द्रमा शुद्ध होनेसे बालकोंका कान छिदाना चाहिये ॥ ५३ ॥

अन्यच्च ।

अश्विनी रेवती चैव हस्ताश्चित्रा पुनर्वसुः ।
धनिष्ठामृगपुष्याश्च श्रवणं मैत्रमेव च ॥ ५४ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखाहै कि, अश्विनी, रेवती, हस्त, चित्रा, पुनर्वसु, धनिष्ठा, मृगशिर, पुष्य, श्रवण और अनुराधा नक्षत्रमें बालकोंका कान छिदाना चाहिये ॥ ५४ ॥

स्थिरे चैवाथ लग्ने च चापे नृमिथुने तथा ।
कर्णवेधं प्रकुर्वीत बालानां शुभदं वरम् ॥ ५५ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, स्थिर अर्थात् वृष, सिंह, वृश्चिक कुम्भ, लग्नमें धन और मिथुनमें बालकोंका कान छिदाना चाहिये ॥ ५५ ॥

कर्णवेधव्रते कुर्यादुदङ्मार्गस्थिते रवौ ।
दक्षिणाशास्थिते भानौ नैव कुर्यात्कथञ्चन ॥ ५६ ॥

इति गर्गः ।

अर्थ-गर्गमुनिने कहा है कि, कर्णवेध और उपनयन उत्तरायणमें ही करना चाहिये उक्त दोनोंकार्य कभी दक्षिणायनमें न करे ॥ ५६ ॥

इति कर्णवेधः ।

अथ विद्यारंभः ।

लघुचरशिवमूलाधोमुखत्वाष्ट्रपौष्ण-
शशिषु च हरिबोधे शुक्रजीवार्कवारे ।
उदितवति च जीवे केन्द्रकोणेषु सौम्यै-
रपठनदिनवर्जं पाठयेत्पञ्चमेऽब्दे ॥ ५७ ॥ (क)

इति दीपिकायाम् ।

अर्थ-अब विद्यारम्भका मुहूर्त्त कहते हैं दीपिकामें लिखाहै कि, पुष्य, अभि-

(क)विद्यारम्भमाह-लघुचर इति । पञ्चमे वर्षे रविजीवशुक्रवारे शिशुं पाठयेत्।अन्यस्मिन् वारे दोषमाह राजमार्त्तण्डे-"मन्दार्कगुम्यशुक्रेषु मृत्युर्मन्दमहीजयोः ।महती जडता चन्द्रे बुधे

नी, हस्त, स्वाति, पुनर्वसु, श्रवण, धनिष्ठा, शतभिषा, आर्द्रा, मूल, आश्लेषा, कृत्तिका, भरणी, मघा, विशाखा, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, चित्रा, रेवती और मृगशिर नक्षत्रमें, श्रीहरिके जाग्रतसमयमें शुक्र बृहस्पति और रविवारमें बृहस्पतिके उदयमें केन्द्र और त्रिकोणस्थानमें शुभ ग्रह होनेसे अनध्यायका दिन परित्याग करके पांचवें वर्षमें बालकको विद्यारम्भ कराना चाहिये ॥ ५७ ॥

संप्राप्ते पञ्चमे वर्षे अप्रसुप्ते जनार्दने ।
षष्ठीं प्रतिपदञ्चैव वर्जयित्वा तथाष्टमीम् ॥ ५८ ॥
रिक्तां पञ्चदशीञ्चैव सौरिभौमदिने तथा ।
एवं सुनिश्चिते काले विद्यारम्भंतु कारयेत् ॥ ५९ ॥

इति विष्णुधर्मोत्तरे ।

अर्थ- विष्णुधर्मोत्तरमें लिखा है कि पांचवें वर्षमें, श्रीहरिके जाग्रतसमयमें, षष्ठी, प्रतिपदा, अष्टमी, रिक्ता, पूर्णिमा और अमावस्यामिन्न तिथिमें और शनि मङ्गलभिन्न वारमें बालकको विद्यारम्भ करावे ॥ ५८ ॥ ५९ ॥

विद्यारम्भे गुरुः श्रेष्ठो मध्यमौ भृगुभास्करौ ।
मरणं शनिभौमाभ्यामविद्या बुधसोमयोः ॥ ६० ॥ ( * )

इति मदनपारिजाते ।

अर्थ-मदनपारिजात ग्रन्थमें लिखा है कि विद्यारम्भमें बृहस्पतिवार ही श्रेष्ठ है, शुक्र और रविवार मध्यम हैं और शनि, मङ्गल वारमें विद्यारम्भ करनेसे मृत्यु

---

-त्वानभियोगिता" ॥ अनुदिते जीवे विद्यारम्भो न कार्यः । केन्द्रत्रिकोणे च स्थितैः शुभैरपठनदिन वर्जयित्वा पाठयेदित्यर्थः।अस्वाध्यायो राजमार्त्तण्डे उक्तः ।"पौषादित्रिषु मासेषु कृष्णे चैवाष्टकात्रयम् ।एका ज्ञेयाश्विने मासि हायनश्चतुरष्टकः। अष्टका तु सप्तुद्दिष्टा सप्तम्यादितिथित्रये । नाधीयीतात्र शास्त्राणि वर्जयेद्व्रतबन्धनम्। या काचित्प्रतिपद्विद्धा प्रेतपक्षेऽथवा गते । या तु कोजागरे याते चैत्रवल्याःपरेऽपि या । चातुर्मास्यसमाप्तौ च द्वितीया या भवेत्तिथिः । सर्वास्त्वेतास्त्वनध्यायःपुराणैः परिकीर्त्तितः । अष्टमी हन्त्युपाध्याय शिष्यं हन्ति चतुर्दशी । *अमा राकोभय हन्ति प्रतिपत्सु न कीर्त्तयेत्* ॥ *सन्ध्यायां गर्जिते* मेघे शास्त्रचिन्ता करोति यः । चत्वारि तस्य नश्यन्ति आयुर्विद्या यशो बलम् ॥चन्द्रसूर्योपरागे तु पर्वस्वाशौचकादिषु । पापोत्पातहते चाह्नि अनध्यायो गलग्रहे। उत्पातो भूकम्पोल्कापातादि गलग्रह उक्तस्तत्रैव । आरम्भानन्तर यत्र प्रत्यारम्भो न सिध्यति । गर्गादिमुनयः सर्वे तमो. राहुर्गलग्रहः ॥ अष्टमी सप्तमीविद्धा त्रयोदश्या चतुर्दशी । प्रतिपदा द्वितीया च गलग्रह उदाहृतः ॥ " शेष सुगममिति ।

( * ) एतद्वचनं धनुर्विद्यापरमितिकेचित् । इति हृदयानन्दः ।

होती है और बुध और सोमवारमें विद्यारम्भ करनेसे विद्याहीन ( मूर्ख ) होता है ॥ ६० ॥

विद्यारम्भः सुरगुरुसितज्ञेष्वभीष्टार्थदायी
कर्तुश्चायुश्चिरमपि करोत्यंशुमान्मध्यमोऽत्र ।
नीहारांशौ भवति जडता पञ्चता भूमिपुत्रे
छायासूनावपि च मुनयः कीर्त्तयन्त्येवमाद्याः ॥ ६१ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्वमें लिखाहै कि, बृहस्पति शुक्र और बुधवारमें विद्यारम्भ करनेसे अभीष्ट लाभ और आयुकी वृद्धि होती है इसी प्रकार रविवारमें मध्यम, सोमवारमें मूर्खता प्राप्त होती है, मंगलवारमें और शनिवारमें विद्यारम्भ करनेसे पञ्चत्व प्राप्त होता है इस प्रकार मुनियोंने कहा है ॥ ६१ ॥

द्वितीया च तृतीया च पञ्चमी दशमी तथा ।
द्वादश्यां स्मृतिशास्त्रञ्च एकादश्यां भवेद्गुणी ॥ ६२ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्वमें लिखा है कि, द्वितीया, तृतीया, पञ्चमी और दशमी तिथिमें विद्यारम्भ करै, द्वादशी तिथिमें स्मृतिशास्त्र पढनेको प्रारम्भ करै और एकादशी तिथिमें विद्यारम्भ करनेसे मनुष्य गुणवान् होता है ॥ ६२ ॥

न सप्तमत्रियोदश्योर्नानध्याये ( १ ) गलग्रहे ।
अभ्यासश्चाशुचिः षष्ठ्यां जन्मेन्दौ नेति चापरे ॥ ६३ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्वमें लिखा है कि, त्रयोदशी अनध्याय और गलग्रहोंमें

( १ ) अनध्यायस्तु–"शुचौ दशम्या सह पौर्णमासी मधौ नभस्ये च तिथिस्तृतीया । स्यादाश्विने या नवमी तयोर्जे सपूर्णिमा द्वादशिकाथ चैत्री॥ ज्येष्ठी च फाल्गुन्यथ सप्तमी स्यान्माघे च पौषस्य च रुद्रसंख्या । मन्वन्तरादिर्विशदेऽथ कृष्णे नभोऽष्टमी फाल्गुनदर्शसंख्या ॥ द्वादशी शुक्लगाषाढमाघमार्गोर्जफाल्गुने । प्रतिपत्पूर्णिमादर्शश्चतुर्दश्यष्टमी सदा। तिथिष्वेतास्वनध्यायो विषुवायनयोरपि । प्रतिपत्पलमात्रेण कलामात्रेण चाष्टमी । दिन क्षयने सर्वे सुरा गच्छन्ति यथा । त्र्यहं प्रेतेष्वनध्यायः शिष्यर्त्विग्गुरुबन्धुषु । ग्रहणे च तथा प्रातः सन्ध्यागर्जे त्वहर्निशम् । पशुमण्डूकनकुलश्वाहिमार्जारमूषिकैः । गतेऽन्तरे त्वहोरात्रं शिष्टे च गृहमागते । आर्द्राद्यपादगे सूर्ये त्र्यहं पृथ्वी रजस्वला । सम्भुनाचीति सजन्तत्स्वाध्याय तत्र वर्जयेत् । न बीजवपनं कुर्याद्धलानां वाहनं तथा । वेदानां पाठनतत्र वर्जयेद्दिवसत्रयम् । न स्वाध्यायो वषट्कारो न देवपितृपूजनम् ।

विद्यारम्भ न करना चाहिये, षष्ठी तिथिमें विद्यारम्भ करनेमें भार्याहीन और अशुचि होता है, जन्मके चन्द्रमामेंभी विद्यारम्भ न करे ऐसाभी किसी २ आचार्यने कहा है ॥ ६३ ॥

पुष्यार्द्रामूलमाश्लेषाहस्तचित्रमृगस्तथा ।
विद्यारम्भे प्रशस्यन्ते पूर्वात्रितयमेव च ॥ ६४ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, पुष्य, आर्द्रा, मूल, आश्लेषा, हस्त, चित्रा, मृगशिर, पूर्वाफाल्गुनी, पूर्वाषाढा और पूर्वाभाद्रपदा नक्षत्रमें विद्यारम्भ करना चाहिये ॥ ६४ ॥

रवेर्गुरोर्भृगोर्लग्ने तत्स्थेऽर्केपीन्दुवृद्धितः ।
गुर्वर्केन्दूडुशुद्धौ च विद्यारम्भः प्रशस्यते ॥ ६५ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, सिंह धन, मीन, वृष और तुला लग्नमें और सिंह और तुलाको छोडकर अन्य समस्त राशियोंमें सूर्य स्थित होनेसे, शुक्ल पक्षमें, बृहस्पति, रवि, चन्द्र और ताराशुद्धि होनेसे विद्यारम्भ करे ॥६५॥

प्राङ्मुखो गुरुरासीनः पश्चिमाभिमुखं शिशुम् ।
पाठयेत्प्रथमं शिष्यमनध्याये विवर्जिते ॥ ६६ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, गुरु पूर्वदिशाको मुख करके बैठे और बालकको पश्चिम दिशामें मुख करके अनध्यायवर्जित दिनमें प्रथम विद्यारम्भ करावे ॥ ६६ ॥

प्राङ्मुखो गुरुरासीनो वरुणाभिमुखं शिशुम् ।
अध्यापयेच्च प्रथमं द्विजाशीर्भिः प्रपूजितम् ॥ ६७ ॥

इति बृहस्पतिः ।

अर्थ–बृहस्पतिने कहा है कि, गुरु पूर्वको मुख करके बैठे और ब्राह्मणोंकी पूजा कराकर बालकको पश्चिम दिशामें मुख करके प्रथम विद्यारम्भ कराना चाहिये ॥ ६७ ॥ इति विद्यारंभः ।

अथोपनयनम् । ( क )

जीवार्केन्दूडुशुद्धौ हरिशयनवहिर्भास्करे चोत्तरस्थे
स्वाध्याये वेदवर्णाधिप इह शुभदे क्षौरभे नादितौ च ।
शुक्रार्केज्यर्क्षलग्ने रविमदनतिथी प्रोज्झ्य षष्ठाष्टमेन्दुं ( ख )
नो जीवास्तातिचारेऽर्कसितगुरुदिने कालशुद्धौ व्रतं स्यात् ॥ ६८ ॥

इति दीपिकायाम् ।

अर्थ–अब उपनयनका मुहूर्त कहते हैं दीपिकामें लिखा है कि, बालकक

( क ) " गृह्योक्तकर्मणा येन समीपं नीयते गुरोः । बालो वेदाय तद्योगं बालोपनयनं विदुः ॥ " इत्युपनयनलक्षणम् ॥

( ख ) उपनयनमाह–जीवार्केति । रवि शुक्रगुरुवारे व्रतमुपनयनं स्यात् जीवार्केन्दूडुशुद्धौ गोचरे जीवशुद्धौ रविशुद्धौ चन्द्रशुद्धौ ताराशुद्धौ च हरिशयन त्यक्त्वा उत्तरस्थे भास्करे उत्तरायणे सतीत्यर्थः । स्वाध्यायदिने अस्वाध्यायः प्रागुक्तः वक्ष्यते च तथा ग्रहणाकालवृष्ट्यादिषु न कर्तव्यम् । राजमार्त्तण्डे–"ग्रहे रवीन्द्वो रजनीप्रकल्पे केतूद्गमोल्कापतनादिदोषे । व्रते दशाहानि वदन्ति तज्ज्ञा वर्ज्यानि सप्ताहमपि प्रयाणे ॥ पौषादिचतुरो मासान्प्रोक्ता वृष्टिरकालजा । व्रत यात्रादिकं तत्र वर्जयेत्सप्तवासरान् । अत्र यदि कर्दमाढ्या वसुधा स्यात्तदैव दोषः । तथा तत्रैव " वृष्टिः करोति दोषं तावन्नाकालसम्भवा राज्ञः । यावन्न भवति गमने नरपशुचरणाङ्किता वसुधा ॥" वेदवर्णाधिप इति शुभदे गोचरशुभदे वेदाधिप ऋग्वेदाधिपतिरित्यादिना प्रागुक्तः वर्णाधिपश्च ब्राह्मणे शुक्रवागीशावित्यादिनोक्तः । क्षौरभे स्फुटोदितनक्षत्रे तत्र च नादितौ पुनर्वसु वर्जयित्वा इत्यर्थः । तथा–पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति । शुक्रार्केज्यर्क्षलग्न इति शुक्ररविगुरुगृहे लग्ने वृषतुलासिंहधनुर्मीनलग्न इत्यर्थः । अत्र च गुरुयोगादेवातिगुणः राजमार्त्तण्डे–"जीवोदये जीवगृहोदये वा जीवांशके जीवसमीक्षिते वा । अल्पश्रुतोऽपि व्रतबन्धनेषु वागीशतुल्यो भवति द्विजेन्द्रः" रविमदनतिथीसप्तमीत्रयोदश्यौ वर्जयित्वा परदिने प्रत्यारम्भाभावादित्यर्थः । लग्नात् षष्ठाष्टम चन्द्र प्रोज्झ्य त्यक्त्वा तथा जीवास्ते जीवातिचारे न कर्त्तव्यः । कालशुद्धावुपनयनं स्यादिति कालशुद्धिस्तु द्विविधा मलमासशुक्रास्तादिदोषाभावान्नाद्धि च, वर्षशुद्धिः तत्र वर्षशुद्धिरुक्ता राजमार्त्तण्डे । "गर्भाष्टमेऽष्टमे वाब्दे पञ्चमे नवमेऽपि वा । कार्यं विप्रस्य राज्ञस्तु दशाब्दे द्वादशे विशः । द्विजस्य षोडशाब्दपर्यन्तं द्वाविंशतेः परम् । चतुर्विंशाच्च वैश्यस्य सावित्रीपतनं भवेत् ॥ " अत्र जन्ममासादौ शुक्लपक्षे चातिफलं यथा राजमार्त्तण्डे–" जन्मोदये जन्मसु तारकासु " इत्यादि ॥ इति ।

गोचरमें बृहस्पति, सूर्य, चन्द्रमा और ताराशुद्धि होनेसे श्रीहरिके शयनभिन्न कालमें, उत्तरायणमें, स्वाध्यायके दिनमें वेदका मालिक और वर्णका मालिक गोचरमें शुभ होनेसे पुनर्वसुको छोडकर चूडाकर्मके समस्त नक्षत्रोंमें, वृष, तुला, सिंह, धन और मीन लग्नमें, सप्तमी और त्रयोदशीको छोडकर अन्य तिथियोंमें, लग्नके छठे और आठवें चन्द्रमाको छोडकरके बृहस्पतिके अस्त और अतिचार द्वारा अशुद्ध काल न होनेसे सूर्य, शुक्र और बृहस्पतिवारमें कालशुद्धि होनेसे उपनयन ( यज्ञोपवीत ) करना चाहिये ॥ ६८ ॥

अन्यच्च ।

स्वातीशक्रधनाश्विमित्रकरभे पौष्णेज्यचित्राहरि-
घिन्दौ (*) तोयपतौ भगेऽदितिसुते भाद्रद्वये सागरे ।
केन्द्रस्थे भृगुजेऽङ्गिरःशशिसुते चन्द्रे च तारे शुभे
कर्तव्यं व्रतकर्म मंगलतिथौ वाराः सितार्केज्यकाः ॥ ६९ ॥

इति भुजबलभीमकृत्यचिन्तामण्योः ।

अर्थ-भुजबलभीममें और कृत्यचिन्तामणिमें लिखा है कि, स्वाति, ज्येष्ठा, धनिष्ठा, आश्विनी, अनुराधा, हस्त, रेवती, पुष्य, चित्रा, श्रवण, मृगशिर, शतभिषा, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, पूर्वाभाद्रपदा, उत्तराभाद्रपदा और पूर्वाषाढा नक्षत्रमें केन्द्रस्थानमें शुक्र बृहस्पति और बुध स्थित होनेसे, शुक्र, रवि और बृहस्पतिवारमें, शुभ तिथिमें, बालकका चन्द्रमा और ताराशुद्धि होनेसे यज्ञोपवीत करना चाहिये ॥ ६९ ॥

अथ प्रशस्तमासकथनम् ।

माघे द्रविणशीलाढ्यः फाल्गुने च दृढव्रतः ।
चैत्रे भवति मेधावी वैशाखे कोविदो भवेत् ॥ ७० ॥
ज्येष्ठे गहननीतिज्ञ आषाढे क्रतुभाजनः ।
शेषेष्वन्येषु रात्रिः स्यान्निषिद्धं निशि च व्रतम् ॥ ७१ ॥

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिन्तामणिमें लिखा है कि, माघके महीनेमें यज्ञोपवीत होनेसे बालक धनवान् होता है इसी प्रकार फाल्गुनमें होनेसे व्रतके रखनेवाला, चैत्रमें मेधावी, वैशाखमें पण्डित, ज्येष्ठमें अत्यन्त नीतिशास्त्रके जाननेवाला और आषाढके महीनेमें यज्ञोपवीत होनेसे वह बालक याज्ञिक होता है, उक्त महीनोंके

( * ) तोयपतिः शतभिषा, अदितिसुत उत्तराफाल्गुनी, सागरः पूर्वाषाढा, व्रतमत्र उपनयनम् इति ज्योतिस्तत्त्वे स्मार्तेन व्याख्यातम् ।

सिवाय अन्य महीनोंमें देवताओंकी रात्रि होती है उनमें यज्ञोपवीत न करना चाहिये ॥ ७० ॥ ७१ ॥

अथ प्रशस्ताप्रशस्ततिथ्यादिकथनम् ।

(१) अनध्यायश्च रिक्ताश्च षष्ठीश्च परिवर्जयेत् ।
चैत्रकृष्णद्वितीयायां तिसृष्वेवाष्टकासु च ॥ ७२ ॥
मार्गे च फाल्गुने चैव आषाढे कार्त्तिके तथा ।
पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत् ।
नाकालवृष्टौ कुर्वीत व्रतबन्धशुभक्रियाम् ॥ ७३ ॥

इति भुजबलभीमे ।

अर्थ–भुजबलभीममें लिखा है कि, अनध्याय, रिक्तातिथि, षष्ठी, चैत्र महीनेके कृष्णपक्षकी द्वितीया, तीनों अष्टका और अग्रहायण, फाल्गुन, आषाढ, कार्तिक और माघके महीनेकी दोनों पक्षोंकी द्वितीयाको छोडकर यज्ञोपवीत करना चाहिये और अकाल वृष्टिमें भी यज्ञोपवीत आदि मङ्गल कार्यको न करै ॥ ७२ ॥ ७३ ॥

अपि च ।

स्मृतियुक्ताननध्यायान्सप्तमीञ्च त्रयोदशीम् ।
पक्षयोर्माघमासस्य द्वितीयां परिवर्जयेत् ॥ ७४ ॥ (क)

इति गर्गः ।

अर्थ–गर्गमुनिने कहा है कि, स्मृतियोंमें कहे हुए अनध्याय, सप्तमी, त्रयोदशी और माघके महीनेकी दोनों पक्षोंकी द्वितीयाको यज्ञोपवीतमें परित्याग करै ॥ ७४ ॥

अन्यच्च ।

*द्वितीया पञ्चमी चैव दशम्येकादशी तथा ।*
व्रतारम्भे प्रशस्ता स्यादन्या स्यादधमा स्मृता ॥ ७५ ॥

इति ज्योतिःसारे ।

अर्थ–ज्योतिःसारमें लिखा है कि, द्वितीया, पञ्चमी, दशमी और एकादशी

(१) "कार्तिकस्याश्विनस्यापि फाल्गुनाषाढयोरपि । कृष्णपक्षे द्वितीयायामनध्यायं विदुर्बुधाः ।" इति श्रीपतिव्यवहारसमुच्चये ॥

(क) "चैत्रशुक्लतृतीया, आषाढशुक्लदशमी मन्वन्तरादित्वेन निषिद्धा वैशाखशुक्लतृतीया युगादित्वेन निषिद्धेति स्मार्त्ताः । " उदगयने आपूर्यमाणे पक्षे कल्याणनक्षत्रे चूडोपनयनगोदानविवाहाः " इत्याश्वलायनवचनादुपनयने शुक्लपक्ष एव विहितः । "कर्णवेधे विवाहे च व्रते पुंसवने तथा । प्राशने चाद्यचूडायां विद्धमृक्षं विवर्जयेत् " इति

तिथि उपनयन ( यज्ञोपवीत ) में प्रशस्त हैं. और उक्त तिथियोंके सिवाय अन्य तिथियोंको अधम कहा है ॥ ७५ ॥

अपरञ्च ।

**तृतीयैकादशी ग्राह्या पञ्चमी द्वादशी तथा ।**
**द्वितीयायाञ्च मेधावी भवेदर्थबलान्वितः ॥ ७६ ॥**

इति ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमें लिखा है कि, तृतीया, एकादशी, पञ्चमी, द्वादशी और द्वितीया तिथिमें उपनयन होनेसे बालक मेधावी होता है ॥ ७६ ॥

**षष्ठ्यामशुचिरभार्यो रिक्तासु बहुदोषभाक् ॥ ७७ ॥**

अर्थ-षष्ठी तिथिमें यज्ञोपवीत होनेसे अशुचि और भार्याहीन होता है और रिक्तातिथिमें अनेक प्रकारके दोष होते हैं अतएव उक्त दोनों तिथियोंमें यज्ञोपवीत न करना चाहिये ॥ ७७ ॥

प्रकारान्तरञ्च ।

**माघषट्के जन्ममासे शुक्लपक्षे तथैव च ।**
**गुर्वर्ककालशुद्धौ च तथोपनयनं स्मृतम् ॥ ७८ ॥ (*)**

इति ज्योतिःसारसंग्रहे।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, माघसे आदि लेकर छः महीनोंके मध्यमें, जन्मके महीनेमें, शुक्लपक्षमें, गोचरमें बृहस्पति और सूर्य शुद्ध होनेसे यज्ञोपवीत करे ॥ ७८ ॥

अन्यच्च ।

**गुरौ शुक्रे रवौ वारे सामगानां कुजेऽपि च ।**
**उपनयनं प्रकुर्वीत दिनादिप्रहरद्वये ॥ ७९ ॥**

इति ज्योतिःसारे।

अर्थ-ज्योतिःसारमें लिखा है कि, बृहस्पति, शुक्र और रविवारमें दिनके पूर्वार्द्धमें यज्ञोपवीत करना चाहिये । सामवेदी मङ्गलवारमें भी यज्ञोपवीत कर-सक्ते हैं ॥ ७९ ॥

---

-वचनादत्रापि दशयोगभङ्गो विचार्यः । व्रते च मरणमिति वचनात् युतवेधोऽपि इति स्मार्त्तेनोक्तम् ।

(*) शुचिनैव गुरुर्यस्य वर्षे प्राप्तेऽष्टमे यदि । चैत्रे मासि गते भानौ तस्योपनयनं विदुः ॥ " इति ग्रन्थान्तरे ।

आपिच ।

**क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेर्कविद्गुरुसितेन्दुदिने व्रतं स्यात्॥८०॥**

इति मुहूर्तचिन्तामणौ ।

अर्थ-मुहूर्तचिन्तामणिमें लिखा है कि, पुष्य, अश्विनी, हस्त, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, आश्लेषा, स्वाति, पुनर्वसु (×) श्रवण, धनिष्ठा, शतभिषा, मूल, चित्रा, अनुराधा, मृगशिर, रेवती, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा और आर्द्रानक्षत्रमें, रवि, बुध, बृहस्पति शुक्र और सोमवारमें यज्ञोपवीत करना चाहिये ॥ ८० ॥

अपरञ्च ।

**चन्द्रतारानुकूल्ये च (१) ग्रहाब्देऽपि शुभे तथा ।**
**पुनर्वसौ कृतो विप्रः पुनः संस्कारमर्हति ॥ ८१ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिस्तत्त्वमें लिखा है कि, चन्द्र, तारा और अन्य ग्रहगोचरमें शुद्ध होनेसे आठवें वर्षमें बालकका यज्ञोपवीत करे । पुनर्वसु नक्षत्रमें यज्ञोपवीत करनेसे उसका फिरसे यज्ञोपवीत करना चाहिये ॥ ८१ ॥

अथ जन्मलग्नादिप्रशंसा ।

**जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा ।**
**व्रतेन विप्रो न बहुश्रुतोपि विद्याविशेषैः प्रथितःपृथिव्याम् ॥८२॥**

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिन्तामणिमें लिखा है कि, जन्मलग्नमें, जन्म नक्षत्रमें, जन्मके महीनेमें और जन्मकी राशिमें यदि बालकका यज्ञोपवीत होयतो वह बालक अल्पविद्यावान् होनेसे भी अत्यन्त विद्याद्वारा पृथिवीमें रूयात होता है ॥ ८२ ॥

**शुक्ले पक्षे शुभस्थे शशिनि दिनकरे देवपूज्ये च सम्य-**
**ग्यारे भानोः सितस्य त्रिदशपतिगुरोश्चोत्तरे तीक्ष्णरश्मौ ।**
**हस्ताश्विन्याश्विशक्रादितिवसुवरुणोपेन्द्रतिष्येन्दुपौष्ण-(२)**
**स्वातीपुष्याहताशु स्मृतमुपनयनं चौडमाद्यञ्च शस्तम् ॥ ८३ ॥**

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ-सत्कृत्यमुक्तावलि ग्रन्थमें लिखा है कि, शुक्लपक्षमें गोचरमें चन्द्र सूर्य

---

(×) पुनर्वसु नक्षत्रमें क्षत्रिय और वैश्यका यज्ञोपवीत होसक्ता है ।
(१) ग्रहाब्दे इस शब्दका अर्थ किसी २ ने नवम वर्षमें किया है ।
(२) अत्र वचने पुनर्वसोरुपादानात्क्षत्रियवैश्योपनयनविषयमेव ।

और बृहस्पति शुद्ध होनेसे, रवि, शुक्र और बृहस्पति वारमें, उत्तरायणमें, हस्त, चित्रा, अश्विनी, ज्येष्ठा, पुनर्वसु, धनिष्ठा, शतभिषा, श्रवण, पुष्य, मृगशिर, रेवती और स्वाति नक्षत्रमें यज्ञोपवीत और आद्य (प्रथम) चूडाकर्म प्रशस्त है ॥ ८३ ॥

शाखाधिपे बलिनि केन्द्रगतेऽथवास्मिन्
वारेऽस्य चोपनयनं कथितं द्विजानाम् ।
नीचस्थितेऽरिगृहगेऽथ पराजिते वा
जीवे भृगावुपनयः स्मृतिकर्महीनः ॥ ८४ ॥ (क)

इति कृत्यचिन्तामणौ वात्स्यः।

अर्थ–कृत्यचिन्तामणि ग्रन्थमें वात्स्यमुनिने कहा है कि, शाखाके मालिक जो तीन ग्रह यदि बलवान् होय अथवा केन्द्रके स्थानमें स्थित होय तो शाखाके मालिकके वारमें यज्ञोपवीत प्रशस्त है. और बृहस्पति नीच घरमें होय वा शुक्रके घरमें होव अथवा दोनोंके मध्यमें कोई ग्रह पराजित होय और उसमें यज्ञोपवीत किया जाय तो वह बालक स्मार्त्तकर्मका अधिकारी नहीं होता है। किसी २ आचार्यने कहा है कि, शाखाका मालिक बलवान् होय वा केन्द्रस्थानमें स्थित होय और कोई न होय तो शाखाके मालिकके वारमें यज्ञोपवीत होसक्ता है। सामवेदियोंका मङ्गलवारमें यज्ञोपवीतका व्यवहार है. स्मार्त्तभट्टाचार्यने भी इसी प्रकार कहा है ॥ ८४ ॥

नीचस्थानगते जीवे भार्गवेऽरिगृहं गते ।
व्रतकर्म न कुर्वीत तयोरेव पराजये ॥ ८५ ॥

इति ज्योतिःसारसंग्रहे।

अर्थ–ज्योतिःसारसंग्रहमें लिखा है कि, बृहस्पति नीच घरमें स्थित होनेसे वा शुक्र शत्रुके घरमें होनेसे अथवा दोनोंके मध्यमें जो कोई ग्रह पराजित होय तो यज्ञोपवीत न करना चाहिये ॥ ८५ ॥

माघादिमासषट्केषु शार्ङ्गिणः शयनावधि ।
चूडाकर्म प्रकुर्वन्ति मुनयो व्रतमेव च ॥ ८६ ॥

इति भोजराजः।

अर्थ–राजा भोजने कहा है कि, माघ महीनेसे आदि लेकर छः महीनोंमें श्रीहरिके जाग्रतसमयमेंही चूडाकर्म और यज्ञोपवीत करना चाहिये इस प्रकार मुनियोंने कहा है ॥ ८६ ॥

(क) सामवेदानां कुजवारेऽप्युपनयनमिति स्मार्त्तेनोक्तम्।

रात्रिभागः समाख्यातः खरांशोर्दक्षिणायनम् ।
व्रतबन्धादिकं तस्माच्चूडाकर्म च वर्जयेत् ॥ ८७ ॥

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिंतामणिमें लिखा है कि, दक्षिणायनमें देवताओंकी रात्रि होती है अतएव उसमें यज्ञोपवीतादि और चूडाकर्म न करना चाहिये ॥ ८७ ॥

विप्रस्य क्षत्रियस्यापि मौञ्जी स्यादुत्तरायणे ।
दक्षिणे च विशां कार्यं नानध्याये (१) न संक्रमे ।
अनध्यायेऽपि (२) कुर्वीत यस्य नैमित्तिकं भवेत् ॥ ८८ ॥

इति गर्गः ।

अर्थ-गर्गमुनिने कहा है कि, ब्राह्मण और क्षत्रियका यज्ञोपवीत उत्तरायणमें करै वैश्यका यज्ञोपवीत दक्षिणायनमेंभी होसक्ता है किन्तु अनध्याय और संक्रान्तिको छोडदेवै और यदि प्रायश्चित्त करके यज्ञोपवीत होय तो ब्राह्मणादि वर्णोका अनध्यायमें दक्षिणायनमें और कृष्णपक्षमें वह यज्ञोपवीत होसक्ता है किन्तु एक दिन (×) परित्याग करनेसेही निषिद्धदिन छूटता हो तो उसी दिन करे ॥ ८८ ॥

शुक्रास्तादिसमये उपनयनादिनिषेधकथनम् ।

अस्तंगते दैत्यगुरौ गुरौ वा ऋक्षेऽपि वा पापयुतेऽप्यनुक्ते ।
व्रतोपनीतो दिवसे प्रणाशं प्रयाति देवैरपि रक्षितो यः ॥ ८९ ॥

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिन्तामणिमें लिखा है कि, शुक्र वा बृहस्पति अस्तगत हों वा पापग्रहोंके साथ होकर यदि किसी राशिमें स्थित हों तो और तिथि नक्षत्रादि अनुक्त दिनमें जिसका यज्ञोपवीत होय वह मनुष्य देवरक्षित होनेसेभी यमालयको जाता है ॥ ८९ ॥

---

(१) "चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु । अष्टकासु च संक्रान्त्या शयने बोधने हरेः । आषाढफाल्गुनोर्जेषु या द्वितीया विधुक्षये । चातुर्मास्यद्वितीयास्ताः प्रवदन्ति महर्षयः । सिता ज्येष्ठे द्वितीया च आश्विने दशमी तथा । चतुर्थी द्वादशी माघे एताः सोपपदास्तथा । अनध्याय प्रकुर्वीत तथा सोपपदासु च ॥" इति ग्रन्थान्तरे ।

(२) अपिना दक्षिणायनकृष्णपक्षयोः समुच्चयः । नैमित्तिकं प्रायश्चित्तरूपमिति मलमासतत्त्वे स्मार्त्तेनोक्तम् ।

(×) एकदिनस्योपवासेन गमयितुं शक्यत्वादिति स्मार्त्तः ।

ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे।
नारभ्यते व्रतविवाहगृहप्रतिष्ठा
क्षौरादिकर्म गमनागमनंच धीरैः ॥ ९० ॥

इति काश्यपः।

अर्थ-काश्यपने कहा है कि, एक राशिमें एकही नक्षत्र युक्त होकर यदि बृहस्पति और सूर्य स्थित होंय अथवा शुक्र अस्तंगत होय वा बृहस्पति सिंह राशिमें होय तो पण्डितगण यज्ञोपवीत, विवाह, ग्रहप्रतिष्ठा, चूडादि कर्म और गमनागमन परित्याग करै ॥ ९० ॥

एकराशिगतौ स्यातामेकर्क्षविषये यदि।
गुर्वादित्यौ तदा त्याज्या यज्ञोद्वाहादिकाः क्रियाः ॥ ९१ ॥

इति काश्यपः।

अर्थ-काश्यपने कहा है कि, एक राशिमें एक नक्षत्रयुक्त होकर यदि गुर्वादित्ययोग होय तो उसमें यज्ञ विवाह और यज्ञोपवीतादि न करना चाहिये ॥ ९१॥

यात्रां चूडां विवाहं श्रुतिविवरविधिं ग्रामसद्मप्रवेशं
प्रासादोद्यानहर्म्यान्सुरनवभवनारम्भविद्याप्रदानम्।
मौञ्जीबन्धं प्रतिष्ठां मणिवरकनकाधारणंकुर्वते ये
मृत्युस्तेषाञ्च सिंहे गुरुदिनकरयोरेकराशिस्थयोश्च ॥ ९२ ॥

इति हारीतः।

अर्थ-हारीतने कहा है कि, बृहस्पति और सूर्य यदि सिंहराशिमें स्थित होय वा अन्य किसी राशिमें एक नक्षत्रयुक्त होकर दोनों ( बृहस्पति और सूर्य ) स्थित होंय तो यात्रा, चूडा, विवाह, कर्णवेध, ग्रामप्रवेश, गृहप्रवेश, प्रासादारम्भ, उद्यानारम्भ, हर्म्यारम्भ, देवगृहारम्भ, विद्याप्रदान, यज्ञोपवीत, प्रतिष्ठा, श्रेष्ठमणिधारण और स्वर्णालङ्कारादि धारण न करना चाहिये उक्त विरुद्धकालमें उपरोक्त समस्त कार्योंके करनेसे उसकी मृत्यु होती है ॥ ९२ ॥

नीचस्थः सिंहगो वा यदि भवति गुरुः सूर्यरश्मौ च लीनः
संयुक्तो वा यदि स्याद्दशशतघृणिना क्षीणरूपोऽथ बालः

यात्रा गेहं विवाहो व्रतममरगृहं यज्ञचूडादि सर्वं
वापी चोद्यानकूपं न भवति शुभदं यद्यदिष्टञ्च लोके ॥९३॥

इति रत्नावल्याम् ।

अर्थ–रत्नावली ग्रन्थमें लिखा है कि, बृहस्पति यदि नीचस्थानमें स्थित होय, सिंह राशिमें होय, सूर्यके साथमें होय, अस्तगत होय अथवा बाल्यावस्थाको धारण करे तो उसमें यात्रा, गृहारम्भ, विवाह, यज्ञोपवीत, देवगृहारम्भ, यज्ञ, चूडाकर्म, वापी ( बावडी ) खुदाना बगीचा लगाना और कुआँ खुदाना और अन्यान्य मङ्गलकार्य न करना चाहिये ॥ ९३ ॥

सर्वं कार्यं न कुर्वीत गुरौ सिंहेऽस्तगेऽपि च ।
व्रतदीक्षे न कुर्वीत तमोयुक्ते बृहस्पतौ ॥ ९४ ॥

इति भोजदेवः ।

अर्थ–राजा भोजने कहा है कि, बृहस्पति सिंह राशिमें स्थित होय वा अस्तंगत होय तो उसमें मङ्गलकार्य न करना चाहिये और राहुयुक्त होनेसे यज्ञोपवीत और दीक्षादान न करे ॥ ९४ ॥

उल्कापाते भुवः कम्पे ह्यकालवर्षगर्जिते ।
वज्रकेतूद्गमोत्पाते ग्रहणे चन्द्रसूर्ययोः ॥ ९५॥
प्रयाणन्तु त्यजेत्क्षत्रः सप्तरात्रमतः परम् ।
ब्राह्मणः क्षत्रियो वैश्यस्त्यजेत्कर्म त्रिरात्रकम् ।
शूद्रस्त्यक्त्वा चैकरात्रं सर्वकर्म समाचरेत् ॥ ९६ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, उल्कापतनमें, भूकम्पमें, अकाल वर्षण वा गर्जनमें, वज्रपातमें, धूमकेतुके उदयमें, अन्य प्रकारसे उत्पातोंमें, चन्द्रग्रहणमें और सूर्यग्रहण होनेसे क्षत्रिय सात रात्रि परित्याग करके यात्रा करे और ब्राह्मण, क्षत्रिय और वैश्यके कर्ममात्रमें ही तीन रात्रि परित्याग करनी चाहिये किन्तु शूद्रको एक रात्रि छोडकर समस्त कर्मोंमें अधिकार है ॥ ९५ ॥ ९६ ॥

ग्रहणे विशेषः ।

प्रयाणे सप्तरात्रं स्यात्त्रिरात्रं व्रतबन्धने ।
एकरात्रं परित्यज्य कुर्यात्पाणिग्रहं ग्रहे ॥ ९७ ॥

इति पराशरः ।

अर्थ–पराशरने लिखा है कि, ग्रहण होनेसे सात दिनपर्यन्त यात्रा परित्याग

करनी चाहिये तीन रात्रियोंके बाद यज्ञोपवीत करै और आपत्कालमें विवाह एक रात्रिके बाद ही करसक्ता है ॥ ९७ ॥

**कम्पे राजनि सप्ताहो ब्राह्मणानां त्र्यहस्तथा ।**
**( ❀ ) शूद्रस्यार्द्धदिनं प्रोक्तं सर्वकार्येषु वै भृगुः ॥ ९८ ॥**

इतिभृगुः ।

अर्थ-भृगुने कहा है कि, भूकम्पादि होनेसे क्षत्रिय सात दिन ब्राह्मण तीन दिन और शूद्र ( आपद्विषयमें ) अर्द्ध दिन परित्याग करके समस्त मङ्गल कार्य करै ॥ ९८ ॥

**नो सन्ध्यागर्जिते प्राहुर्व्रतोपनयनं बुधाः ।**
**न च वृष्टावथाकाले वृष्टावासप्तवासरान् ॥ ९९ ॥ ( × )**

इति व्यासः।

अर्थ-व्यासने कहा है कि, सन्ध्यागर्जनमें और अकालवृष्टिमें यज्ञोपवीतादि न करना चाहिये इस प्रकार पण्डितोंने कहा है परन्तु तीन दिन क्रमसे वृष्टि होनेसे शेष दिनसे सात दिनतक अकाल होता है ॥ ९९ ॥

तथाच।

**एकेनाह्ना चैकदिनं द्वितीयेन दिनत्रयम् ।**
**तृतीयेन तु सप्ताहं त्यजेदकालवर्षणे ॥ १०० ॥**

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, अकालवृष्टि एक दिन होनेसे उसी दिन अकाल होता है, इसी प्रकार क्रमानुसार दो दिन होनेसे शेष दिनसे तीन दिन अकाल होता है और क्रमानुसार तीन दिन अकालवृष्टि होनेसे शेष दिनसे सात दिनपर्यन्त अकाल होता है ॥ १०० ॥

**आकालिकीं वृष्टिमवेक्ष्य गन्ता पदं न गच्छेच्छुभमात्मनीच्छन् ।**
**क्षौरं व्रतञ्चापि शुभाभिलाषी कदापि नैवं मनसापि कुर्यात् ॥ १ ॥**

इति श्रीपतिव्यवहारनिर्णये।

अर्थ-श्रीपतिभट्टाचार्यने स्वकृत व्यवहारनिर्णय ग्रन्थमें लिखा है कि, अकाल

---

( • ) शूद्रस्यापद्विषयम् । कम्प इत्युपलक्षण ग्रहणादावप्येतन्मेना त्रैकत्र पठितत्वात् इति स्मार्ताः ।

( × ) आसप्तवासरानित्यत्र उपस्थितत्वाद्दृष्टिकालमादाय सप्ताहगणना ( वृष्ट्युत्तर-मेव सप्ताहत्यागः ) एतद्वचन तु तृतीयादिदिवसीयाकालवृष्ट्यभिप्रायेण ः। अतः " दिने नैकादिन त्याज्य द्वितीयेन दिनत्रयम् । तृतीयेन च सप्ताह त्यजेदकालवर्षणे " इति न्यायरत्नपरिगृहीतवाक्येऽपि दिनेन दिनवृत्तिवर्षणेन । एव द्वितीयेनेत्यादौ ज्ञेयम् ।

वृष्टिको देखकर अपनी कुशल चाहनेवाला मनुष्य एकपद्भी गमन न करे अर्थात् यात्रा निषिद्ध है और मंगल अभिलाषी मनुष्य क्षौर ( चूडाकर्म ) वा यज्ञोपवीतादिको मनमें भी न विचारे अर्थात् उक्त समस्त कार्योंका निषेध है ।१।

आवैशाखाद्भुजगवनिताचुम्बनायासखिन्नो
देवो दैत्यप्रमथनपटुर्यावदेकान्तशान्तः ।
अम्भःशय्यापरिगततनुर्योगनिद्रामुपैति
तावद्वृष्टेः समय उचितो ब्रह्मणा भाषितोऽयम् ॥ २ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावली ग्रन्थमें लिखा है कि, दैत्योंके नाशकरनेवाले विष्णुभगवान् सर्पवनिता ( स्त्री ) के चुम्बनसे परिश्रान्त होकर ( थककर ) क्लान्ति ( थकावट ) दूरकरनेके निमित्त जलशय्यामें जबतक सोतेहुए वैशाखके महीनेसे उसी समय तक अकालवृष्टिका समय होता है ॥ २ ॥

अकालन्तु ततो वृष्टेर्यावद्ब्राह्मिमहोत्सवः ॥ ३ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावली ग्रन्थमें लिखा है कि, श्रीहरिके उत्थानसे दोलपूर्णिमापर्यन्त वृष्टि होनेसे उसको अकालवृष्टि कहते हैं अकालवृष्टिमें श्रीहरिके उत्थान समयसे शयनकालपर्यन्त प्रथम पक्षको परित्याग करना चाहिये पौषादि-चार महीने वा श्रीहरिके उत्थानसमयसे दोलपूर्णिमातक द्वितीयपक्ष आपत्विप-यमें और पौषादि दो महीने अत्यन्त आपद्विषयमें त्याज्य हैं [ अकालवृष्टिको विवाहप्रकरणमें कालशुद्धिके प्रसङ्गमें उत्तम प्रकारसे कहा है पाठकगण उसको देखलेंगे ] ॥ ३ ॥

अथानध्यायकथनम् ।

प्रतिपत्पञ्चपर्वाणि कृष्णा पौषस्य सप्तमी ।
चैत्रे कृष्णद्वितीया च नवमी शुक्लगाश्विने ॥ ४ ॥
द्वे द्वितीये सहोमाघोर्जाषाढाश्विनफाल्गुने ।
द्वादशी शयनोत्थानपरिवर्त्तेषु या भवेत् ॥ ५ ॥
मन्वादयो युगाद्याश्च ह्यशौचप्रेतपक्षकौ ।
अनध्यायोऽत्र कर्त्तव्य इति वेदविदां स्मृतिः ॥ ६ ॥

त्र्यहं कुर्यादनध्यायमम्बुवाच्युपरागयोः ।
सन्ध्यागर्जश्राद्धभुक्तिभूकम्पादावहर्निशम् ॥ ७ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–अब अनध्यायोंको कहते हैं, ज्योतिःसारसंग्रहमें लिखा है कि, प्रतिपदा, पञ्चपर्व पौषकी कृष्णा सप्तमी, चैत्रकी कृष्ण द्वितीया, आश्विनकी शुक्ला नवमी, आग्रहायण, माघ, कार्तिक, आषाढ, आश्विन और फाल्गुनके महीनेकी दोनों पक्षोंकी द्वितीया, शयन, उत्थान और पार्श्वपरिवर्त्तन द्वादशी, मन्वन्तरादि, युगादि, अशौच और प्रेतपक्ष इन समस्तदिनोंमें अनध्याय होता है, यह वेदके जाननेवालोंका मत है और अम्बुवाची और ग्रहणमें तीन दिन, सन्ध्यागर्जनमें और श्राद्धान्नभोजनमें एक दिन और भूकम्पादि होनेसे भी एक दिनका अनध्याय होता है ॥ ४–७ ॥

व्रतेऽह्निपूर्वसन्ध्यायां ( क ) वारिदो यदि गर्जति ।
व्रतं तत्र तु ( ख ) नैव स्यादिति धर्म्मो व्यवस्थितः ॥ ८ ॥

अर्थ–व्रतके दिनमें ( यज्ञोपवीतके दिनमें ) पूर्वसन्ध्यामें, मेघके गर्जनेसे उपनयन न करना चाहिये मुनिगणोंने इस प्रकार धर्मको स्थापित किया है॥८॥

कार्त्तिकस्याश्विनस्यापि फाल्गुनाषाढयोरपि ।
कृष्णपक्षे द्वितीयायामनध्यायं विदुर्बुधाः ॥ ९ ॥

इति श्रीपतिव्यवहारसमुच्चये ।

अर्थ-श्रीपतिके व्यवहारसमुच्चयमें लिखा है कि, कार्तिक, आश्विन, फाल्गुन और आषाढके कृष्णपक्षकी द्वितीयाको पण्डितोंने अनध्याय कहा है ॥ ९ ॥

युगाद्येषु युगान्तेषु तथा मन्वन्तरादिषु ।
सन्ध्यागर्जेऽकालशुद्धौ विद्यारम्भं न कारयेत् ॥ १० ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावली ग्रन्थमें लिखाहै कि, युगके आदिकी तिथि ( १ )

---

( क ) पूर्वदिने सायसन्ध्यागर्जने परदिने व्रतनिषेध इति मैथिलमतम् । पूर्वपदमत्र परसन्ध्याव्यावर्त्तक स्वरूपाख्यानपर वेति स्मार्त्ताः ।

( ख ) " तद्दिन स्यादनध्याय व्रत तत्र न कारयेत् " इति पराद्धे भीमपराक्रमे ।

( १ ) युगाद्यामाह– " वैशाखे शुक्लपक्षे तु तृतीयायां कृत युगम् । कार्तिके शुक्लपक्षे तु त्रेताथ नवमेऽहनि । अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरम् । माघे च पौर्णमास्यां वै घोर कलियुग स्मृतम् । युगारम्भास्तु तिथयो युगाद्यास्तेन विश्रुताः " इति ब्रह्मपुराणम् ।

युगके अन्तकी तिथि मन्वन्तरा ( २ ) सन्ध्यागर्जन और अकालवृष्टिमें विद्यारम्भ ( वेदारम्भ ) न करना चाहिये ॥ ११० ॥

**अयने विषुवे चैव शयने बोधने हरेः ।**
**अनध्यायोऽत्र कर्त्तव्यो मन्वादिषु युगादिषु ॥ ११ ॥**

अर्थ-अयन संक्रांति, विषुव संक्रान्ति, श्रीहरिका शयनकाल बोधनकाल और मन्वन्तर और युगाद्या इन सबको अनध्याय कहते हैं ॥ ११ ॥

अथोपनयनकालः ।

**गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।**
**राज्ञामेकादशे सैके ( × ) विशामेके यथाकुलम् ॥ १२ ॥ (❀)**

इति ज्योतिस्तत्त्वे ।

अर्थ--अब उपनयनका काल कहते हैं । ज्योतिषतत्त्वमें लिखा है कि, गर्भाष्टममें ( १ ) अथवा आठवें वर्षमें ब्राह्मणके बालकका यज्ञोपवीत होना चाहिये और क्षत्रियका ग्यारहवें वर्षमें और वैश्यका बारहवें वर्षमें यज्ञोपवीत होना चाहिये अथवा कुलकी रीतिसे जितनी वर्षोंमें यज्ञोपवीत होता होय तो उस समयमें भी होसक्ता है ॥ १२ ॥

**विप्रस्य षोडशाद्वर्षाद्राज्ञो द्वाविंशतेः परम् ।**
**वैश्यस्याष्टत्रिकादब्दात्सावित्रीपतनं भवेत् ॥ १३ ॥**

इति मार्कण्डेयः ।

अर्थ-मार्कण्डेय मुनिने कहा है कि, ब्राह्मणको सोलह वर्षके बाद क्षत्रियकी

(२) अथ मन्वन्तराः। "अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिकी तथा । तृतीया चैत्रमासस्य तथा भाद्रपदस्य च । फाल्गुनस्याप्यमावस्या पौषस्यैकादशी तथा ॥ आषाढस्यापि दशमी तथा माघस्य सप्तमी ॥ श्रावणस्याष्टमी कृष्णा तथाषाढस्य पूर्णिमा । कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी सिता । मन्वन्तरादयश्चैता दत्तस्याक्षयकारिकाः " इति भविष्यमत्स्यपुराणयोः । अत्र अमावस्याष्टमीव्यतिरिक्ताः शुक्ल' पुनः [illegible]नस्तथापदोपादानाद्युपक्रमोपसंहारयोः शुक्लस्य कीर्तनाच्च । कामधेनौ- " तृतीया चैत्र माघस्य " इति । रत्नाकरे तु - " तृतीया चैत्रमासस्य " इति लिखितम् । अत्र पाठद्वये श्रीपतिरत्नमालायाम् । "अश्वयुजी शुक्लनवमी द्वादश्यूर्जे मधौ तृतीया च" इति पाठाच्चैत्रतृतीयेव ग्राह्या श्रीदत्तोऽप्येवम् । इति तिथितत्त्वे स्मार्त्तः ।

( + ) एकादशे मेरे द्वादशे । " गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः " इति वचनान्तरश्रवणात् ।

( • ) "देशानुशिष्ट कुलधर्ममग्र्य स्वगोत्रधर्मं नहि सन्त्यजेच्च " इति वामनपुराणम् ।

( १ ) जन्मसे गिनकर छः वर्ष तीन महीनेके बादको गर्भाष्टमकाल कहते हैं ॥

बाईस वर्षके बाद और वैश्यकी चौवीस वर्षके बाद सावित्री पतन होता है॥१३॥

**षोडशाब्दे हि विप्रस्य राजन्यस्य द्विविंशतिः ।**
**विंशतिः सचतुर्थी च वैश्यस्य परिकीर्तिता ॥**
**सावित्री नातिवर्त्तेत अत ऊर्ध्वं निवर्त्तते ॥ १४ ॥ (+)**

इति विष्णुधर्मोत्तरे ।

अर्थ–विष्णुधर्मोत्तरमे लिखा है कि, सोलहवर्षतक ब्राह्मणका यज्ञोपवीत होसक्ता है, इसी प्रकार क्षत्रियका बाईस वर्षतक और वैश्यका चौवीस वर्षतक यज्ञोपवीत होनेका समय होता है, किन्तु उक्त समयके बाद सावित्री पतन होजाती है ॥ १४ ॥

**आषोडशाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।**
**ब्रह्मक्षत्रविशां काल औपनायनिकः परः ॥ १५ ॥ (क)**

इति याज्ञवल्क्यः ।

*अर्थ–याज्ञवल्क्यने कहा है कि, ब्राह्मणका सोलह वर्षतक क्षत्रियका बाईस* वर्षतक और वैश्यका चौवीस वर्षतक यज्ञोपवीतका समय है ॥ १५ ॥

**औपनायनिकः कालः परः षोडशवार्षिकः । (ख)**
**द्वाविंशतिः परोऽन्यस्य स्याच्चतुर्विंशतिः परः ॥ १६ ॥**

इति व्यास ।

अर्थ–व्यासने कहा है ब्राह्मणका सोलह वर्षतक, क्षत्रियका बाईस वर्षतक और वैश्यका चौवीस वर्षतक यज्ञोपवीतका समय है ॥ १६ ॥

**पतिता यस्य सावित्री दशवर्षाणि पञ्च च ।**

---

(+) आभ्यां ( मार्कण्डेयविष्णुधर्मोत्तरवचनाभ्यां ) षोडशवर्षाद्युपरि यमेन पञ्चदशवर्षोपरि यत्पतनमभिहितं तद्गर्भजन्मप्रभृति गणनाभ्यामविरुद्धं तथा च कृत्यचिन्तामणौ माण्डव्यः । " व्रतबन्धविवाहौ च वत्सरपरिकल्पनमाहुराचार्याः । आधानपूर्वमेके प्रसूतिपूर्वं सदान्ये तु " एवं च व्यासमार्कण्डेयादिवाक्यैरवाक्यतया न्यायसिद्धतया च आषोडशादित्याङोऽभिविध्यर्थत्वेन । अत्रापि वर्षगणना सावनेनेव । यत्तु द्विजानामुपक्रम्य पैठीनसिवचनम् । " द्वादशषोडशविंशतिश्चेदतीता अवरुद्धकाला भवन्ति " इति । तद्द्वादशवर्षाद्युपरि प्रत्यवायाल्पत्वज्ञापनपरमिति कल्पाण्युपाध्यायाः । अत्र महाव्याहृतिहोमप्रायश्चित्तं तदुत्तरं व्रात्यप्रायश्चित्तमिति मलमासतत्त्वे स्मार्त्तेनाभिहितम् ।

(क) अत्र याज्ञवल्क्यवचने आङ् अभिविध्यर्थत्वम् । मर्यादाभिविधिसन्देहे व्याख्यानितत्वेनाभिविधेरेव बलवत्त्वादिति मलमासतत्त्वे स्मार्त्तेनोक्तम् ।

(ख) परोन्त्यः षोडशवार्षिकः षोडशवर्षं व्याप्य भूतस्थित इति यावत् । इति मलमासतत्त्वे स्मार्त्तेनोक्तम् ।

ब्राह्मणस्य विशेषेण तथा राजन्यवैश्ययोः ।
प्रायश्चित्तं भवेदेषां प्रोवाच वदतां वरः ॥ १७ ॥ ( ग )

इति यमः ।

अर्थ-यमने कहा है कि, ब्राह्मणका पन्द्रहवर्षके मध्यमें सावित्रीग्रहण अर्थात् यज्ञोपवीत न होय और क्षत्रिय वैश्यकाभी पूर्वोक्त समयमें यज्ञोपवीत न होय तो प्रायश्चित्त करना चाहिये ॥ १७ ॥

आषोडशाद्ब्राह्मणस्य सावित्री नातिरिच्यते ।
आद्विविंशाच्च क्षत्रस्य आचतुर्विंशतेर्विशः ।
अतःपरं नोपनेयो व्रात्यः संस्कारहीनकः ॥ १८ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, सोलह वर्षतक ब्राह्मण सावित्री अर्थात् गायत्रीमें अधिकारी होसक्ता है इसी प्रकार बाईस वर्षतक क्षत्रिय और चौबीस वर्षतक वैश्य गायत्रीका अधिकारी होसक्ता है, किन्तु उक्त समयके बाद यज्ञोपवीत नहीं होसक्ता है व्रात्य और संस्कारहीन होजाता है ॥ १८ ॥ मार्कण्डेय, विष्णुधर्म्मोत्तर, याज्ञवल्क्य और यम प्रभृतिके वचनोंका अर्थ अनेक प्रकारसे होसक्ता है अर्थात् किसी वचनमें सोलहवर्षतक यज्ञोपवीतका विधान है और वचनान्तरमें पन्द्रह वर्षके बाद यज्ञोपवीतका निषेध है, अतएव उक्त सब वचनोंकी मीमांसाके निमित्त स्मार्त्तभट्टाचार्यने विषयभेदसे ( गर्भग्रहण और जन्म समयसे गिनकर ) विधि और निषेधको सार्थक किया है, " गर्भग्रहणसे सोलह वर्षके मध्यमें यज्ञोपवीतका विधान और जन्मसे पन्द्रह वर्षके बाद यज्ञोपवीतका निषेध है " इस प्रकार मीमांसा करी है ॥

इति उपनयनम् ।

अथ समावर्त्तनम् ।

तृतीयलाभारिगतैरसौम्यैः केन्द्रत्रिकोणोपगतैः शुभैश्च ।
चूडोदितक्षादिविलग्नयोगे मौञ्जीविमोक्षः शुभदो द्विजानाम् १९॥ (×)

इति दीपिकायाम् ।

अर्थ-अब समावर्त्तनका मुहूर्त्त कहते हैं दीपिकामें लिखा है कि, लग्नके तीसरे

( ग ) पूर्वोक्तविष्णुधर्मोत्तरवचने षोडशवर्षस्योपनयनाङ्गता अत्र यमवचने तदनङ्गता प्रतीयते अनयोर्गर्भजन्मप्रभृतिगणनाभ्यामविरुद्धता । इति ज्योतिस्तत्त्वे स्मार्त्तेन व्याख्यातम् ।

( + ) समावर्त्तनमाह-तृतीयेति ।चूडाकरणोक्तेषु नक्षत्रादिषु चूडोक्तलग्नयोगे च आदिशब्दात्तिथिवारादिष्वनुक्तावज्ञातव्यमित्यर्थः।मौञ्जीविमोक्षः समावर्त्तनम् । शेषं सुगमम्।

ग्यारहवें और छठे स्थानमें पापग्रह होनेसे और केन्द्र और त्रिकोणस्थानमें शुभ ग्रह होनेसे चूडोदित नक्षत्र, वार, तिथि, योग और लग्नादिमें ब्राह्मणोंका मौंजी-विमोक्षण शुभ होता है ॥ १९ ॥

**भौमभानुजयोर्वारे नक्षत्रे च व्रतोदिते।**
**(१) तारा चन्द्रविशुद्धौ च समावर्त्तनमिष्यते ॥ १२० ॥**

इति ज्योतिस्तत्त्वे।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, मंगल और शनिवारमें उपनयनोक्त नक्षत्रमें तारा और चन्द्रमा शुद्ध होनेसे समावर्त्तन होता है ॥ १२० ॥

इति समावर्तनम्।

अथाग्निग्रहणम्।

**वह्निग्रहं कुजगुरुज्ञदिनेशवारे**
**माघादिषट्सु च मृदुध्रुववह्निभेषु।**
**कुम्भाजभांशकविलग्नमशुद्धकालं**
**लग्नस्थशीतगुसितौ च विहाय कुर्यात् ॥२१॥ (२)**

इति दीपिकायाम्।

अर्थ-अथ अग्निग्रहणका मुहूर्त कहते हैं दीपिकामें लिखाहै कि, मंगल, बृहस्पति, बुध और रविवारमें, माघसे आदि लेकर छः महीनोंमें चित्रा, अनुराधा-मृगशिर, रेवती, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी और कृत्तिका नक्षत्रमें, कुम्भ मेष और जलराशिके उदय समय और नवांशभिन्न लग्नमें शुद्ध लग्नमें चन्द्रमा और शुक्र न होनेसे अग्नि ग्रहण करना चाहिये ॥ २१ ॥

अथ धनुर्विद्यारम्भः।

**अदितिगुरुयमार्कस्वातिपित्र्याग्निचित्रा**
**ध्रुवहरिवसुमूलाश्विन्दुभाग्यान्तभेषु।**

---

(१) कालचन्द्रविशुद्धौ चेत्यपि पाठान्तरम्।

(२) अग्निग्रहणपरीक्षायान्तु विशेषमाह-वह्निग्रहमिति। मङ्गलगुरुरविवारेषु माघादिषट्सु मृदुध्रुवगणकृत्तिकासु कुम्भस्याजस्य च जलजराशेरंशक नवांश लग्नञ्च त्यक्त्वा अशुभकालं शुक्रास्ताादि त्यक्त्वा वह्निग्रहण कुर्यात्। शेष सुगमम्। इति।

विशनिशिशिबुधाहे विष्णुबोधे विपौपे
सुसमयतिथियोगे चापविद्याप्रदानम् ॥२२॥॥ (×)

अर्थ-अब धनुर्विद्यारम्भ करनेका मुहूर्त्त कहते हैं। पुनर्वसु, पुष्य, भरणी, हस्त, स्वाती, मघा, कृत्तिका, चित्रा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, श्रवण, धनिष्ठा, मूल, आश्विनी, मृगशिर, पूर्वाफाल्गुनी और रेवती, नक्षत्रमें शनि सोम और बुधवारको छोडकर अन्यवारोंमें श्रीहरिके बोधमें पौष और चैत्रभिन्न महीनोंमें कालशुद्धि होनेसे रिक्ताभिन्न शुभतिथि और योगादिमें धनुर्विद्याका प्रारम्भ करना चाहिये ॥ २२ ॥

अथ मोक्षदीक्षा ( संन्यास ग्रहणम् ) ।

जीवार्केन्दूडुशुद्धौ ध्रुवमृदुगणभे चोत्तरस्थे दिनेशे
प्रव्रज्येशे सवीर्ये स्थिरभवनविलग्नस्थितेऽर्केज्यवारे ।
प्रव्रज्याख्येषु योगेष्वशुभगगनगैर्वीर्यहीनैः सुवीर्ये (क)
जीवे धर्मे स्मरे वा स्थिरभवननवांशोदये मोक्षदीक्षा ॥२३॥

अर्थ--अब मोक्षदीक्षा अर्थात् संन्यासके ग्रहण करनेका मुहूर्त्त कहते हैं बृहस्पति रवि, चन्द्र और नक्षत्र गोचरमें शुद्ध होनेसे उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, चित्रा, अनुराधा, मृगशिर और रेवती नक्षत्रमें, उत्तरायणमें, प्रव्रज्याधिप ग्रह बलवान् स्थिर लग्नमें होनेसे रवि वा बृहस्पति वारमें, प्रव्रज्यारूप योगमें पापग्रह बलहीन होनेसे बलवान् बृहस्पति नवमें वा सातवें स्थानमें होनेसे स्थिर राशिके उदयमें अथवा नवांशमें संन्यासको ग्रहण करे ॥ २३ ॥

---

(+) धनुर्विद्यारम्भमाह-अदितीति । ध्रुवो धगणः १२ । २१ । २६ । ४ भाग्यं पूर्वाफाल्गुनीत्यर्थः । शनिबुधचन्द्रवारांस्त्यक्त्वा विष्णुबोधे हरेरुत्थाने विपौषे पौषं त्यक्त्वा चापविद्यादानं कुर्यात् । पौष इत्युपलक्षणं चैत्रश्च । यथा राजमार्त्तण्डे-"हरौ सुप्ते तथा पौषे चैत्रे वाप्यसितेतरे । शशिसौम्यशनेर्वारे धनुर्विद्या न शस्यते" सुसमये कालशुद्धौ सुतिथौ अरिक्ते तिथौ सुयोगे च कार्यमित्यर्थः ।

(क) मोक्षार्थदीक्षामाह-जीवार्केति । जातकचन्द्रिकादौ तापसबुद्धेनादिना प्रव्रज्येषा उक्ता येन वा प्रव्रज्या कार्या तदीश्वरे बलवति स्थिरलग्ने स्थिते सति प्रव्रज्यायोगे च रविचन्द्रजीवशुद्धौ च ध्रुवमृदुगणनक्षत्रेषु माघादिषट्के स्थिरभवने विलग्ने रविगुरुवारे प्रव्रज्यायोगेऽशुभग्रहैर्यत्र तत्रस्थैर्बलहीनैः सद्भिः स्ववीर्ये बलवति जीवे नवमे सप्तमे वा स्थिते स्थिरनवांशोदये च मोक्षदीक्षा विहितेत्यर्थः । शेषं सुगमम् ।

अथ नृपाभिषेकः।

**पुष्टैः शुक्रेन्दुजीवैर्ध्रुवलघुबलभिद्विष्णुमैत्रेन्दुपौष्णैः**
**सल्लग्ने पाकजन्मोदयपतिषु विरन्ध्रारिगेन्द्रावसौम्यैः।**
**त्र्यायारिस्थैरथाष्टव्ययगृहरहितैः सद्ग्रहैः केन्द्रकोणे**
**वीर्याढ्ये क्षात्रियेशे सुदिनतिथिशुभेन्दौ नृपस्याभिषेकः॥२४॥ (ख)**

अर्थ-अब राजाके अभिषेकका मुहूर्त्त कहते हैं, शुक्र, चन्द्रमा और बृहस्पति पूर्ण बलवान् होनेसे, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, पुष्य, अश्विनी, हस्त, ज्येष्ठा, अनुराधा, मृगशिर और रेवती नक्षत्रमें तात्कालीन दशाधिपति जन्मराश्यधिपति और जन्मलग्नाधिपति सब शुभग्रह होनेसे गोचरमें छठे और आठवें स्थानको छोडकर चन्द्रमा स्थित होनेसे तीसरे ग्यारहवें और छठे स्थानमें पापग्रह न होनेसे आठवें और बारहवें स्थानमें शुभ ग्रह न होनेसे क्षत्रियेश ग्रह ( जिस जातिका अभिषेक होय उसी जातिका मालिक ग्रह) बलवान् होकर केन्द्रस्थानमें स्थित होनेसे शुभ ग्रहोंके वारमें, शुभ तिथिमें, शुभ योगमें, गोचरमें चन्द्रमा शुद्ध होनेसे राजाका अभिषेक करना चाहिये॥ २४॥

अथ नववस्त्रपरिधानम्।

**ब्रह्मानुराधवसुतिष्यविशाखहस्त-**
**चित्रोत्तराश्विपवनादितिरेवतीषु।**
**जन्मर्क्षजीवबुधशुक्रदिनोत्सवादौ**
**धार्यं नवं वसनमीश्वरविप्रतुष्टौ॥ २५॥ (ग)** इति दीपिकायाम्।

अर्थ-अब नया वस्त्र ( कपडा ) पहिननेका मुहूर्त्त कहते हैं दीपिकामें लिखा

(ख) राज्याभिषेकमाह-पुष्टैरिति। शुक्रेन्दुजीवैः पुष्टैः स्फुटकिरणजालैः ध्रुवलघुगणादिनक्षत्रे सल्लग्नेःशुभग्रहस्य लग्ने पाकजन्मोदयपतिषु सत्सु पाकपतिस्तत्कालीनदशेशः जन्मराश्यधिपो जन्म लग्नाधिपतिश्च तेष्वित्यर्थः। विरन्ध्रारिगेन्दौ तत्कालचन्द्रमाद्यष्टमषष्ठवर्जिते चन्द्रे त्र्यायारिस्थिरसौम्यैः पापैः शुभैर्वाऽऽयाष्टमरहितैः बलवति क्षत्रियेशे केन्द्रे त्रिकोणे च स्थित इति क्षात्रिय् इत्युपलक्षण योऽभिषिच्यते तज्जात्यधिप इत्यर्थः। सुदिनतिथिशुभेन्दाविति सुदिने शुभग्रहवारे सुतिथौ रिक्ताहीने तिथौ सुयनौ सुतियोगो विष्कुम्भादिः सुयुतेऽथिन्दौ गोचरशुभे चन्द्रे नृपाभिषेकः कार्यः। इति।

(ग) नववस्त्रपरिधानमाह-ब्रह्मेति। रोहिण्यादिनक्षत्रेषु जन्मनक्षत्रे जन्मदिने जीवबुधशुक्रवारे अनुक्तवारनक्षत्रे विवाहाद्युत्सवे ईश्वरविप्रतुष्टौ च नवांशुक धार्यम्। यथा राजमार्त्तण्डे-" रविणा ग्रुप्यते वस्त्रं सोमे शोकजलस्तथा। अङ्गारके भवेन्मृत्युः सर्वं हन्ति शनैश्चरे। भोक्तुर्नवाम्बरं शस्तमृक्षेऽपि गुणवर्जिते। विवाहे राजसन्माने ब्राह्मणानाश्च सम्मतौ" इति।

पूर्वादिचतुर्दिक्षु गृहबन्धध्रुव :।

पूर्वादिषु चतुर्दिक्षु वाममेकादयो ध्रुवाः।
प्रस्तारस्याथ दैर्घ्यस्य तत्र वैकसमन्विताः ॥ १५ ॥ (क)

अर्थ–अब पूर्वादि चारों दिशाओंके गृहबन्धके ध्रुवांकको कहते हैं वामावर्त्तसे क्रमानुसार प्रस्थका परिमाण पूर्वादि चारों दिशाओंमें एकादि अंक ध्रुवांक होता है अर्थात् पूर्वमें एक, उत्तरमें दो, पश्चिममें तीन और दक्षिणमें चार और दीर्घका परिमाण पूर्वादिक्रमसे वामावर्त्तमें एकाधिक एकादि अंक ध्रुवांक होता है अर्थात् पूर्वमें दो, उत्तरमें तीन, पश्चिममें चार और दक्षिणमें पांच ॥ १५ ॥

अथ वायव्यादिचतुष्कोणे गृहबन्धध्रुवकथनम्।

वामं वातादिकोणेषु ध्रुवाः प्रस्तारदैर्घ्ययोः।
एकाद्याः स्वेच्छया (*) सर्वे कार्या वेदसमन्विताः॥१६॥(ख)

अर्थ–वामावर्त्तमें वायव्यादि चारों कोनोंमें प्रस्थके परिमाणमें एकादि अंक और दीर्घके परिमाणमें एकादि अङ्कके योग करनेसे जो परिमाण होता है उसकोही ध्रुवाङ्क कहते हैं ॥ १६ ॥

अथ गृहाणामायकथनम्।

व्यासेन गुणिते दैर्घ्ये वसुभिर्विहृते ततः।
यच्छेषमायं तद्विद्यात्पूर्वादिभवनाएके ॥ १७ ॥ (ग)

अर्थ–अब घरकी आयका ज्ञान कहते हैं, प्रस्थको हस्तपरिमित अंकद्वारा दीर्घके हस्त परिमित अंकको गुणकरके आठसे भाग करनेमें जो अंक शेष बचें उनकोही पूर्वादि आठों कोनोंकी आय जानना चाहिये ॥ १७ ॥

---

(क) गृहबन्धनस्य व्यवस्थामाह–पूर्वादिष्विति। पूर्वादिषु चतुर्दिक्षु वाम विपरीतेन पूर्वोत्तरक्रमेणैकादयः प्रस्तारस्य ध्रुवाः एक पूर्वे द्वावुत्तरे त्रयः पश्चिमायां चत्वारो दक्षिणस्याम्। अथ दैर्घ्यस्य ध्रुवास्त एव पूर्वोत्तरक्रमेणैकादयः एकयुक्ताः द्वौ पूर्वे त्रयः उत्तरे चत्वारः पश्चिमे पञ्च दक्षिणे। इति।

(*) उभयतः स्वेच्छयानुरूपतश्चतुःसंख्यादानेन ध्रुववृद्धिश्च इति दीपिकायां मूलम्।

(ख) वायव्यादिकोणेषु गृहबन्धस्य व्यवस्थामाह–वाममिति। वातादिकोणेषु वामं विपरीतेन वायुनैर्ऋताग्नीशानक्रमेण प्रस्तारदैर्घ्ययोस्त एवोक्ता एकाद्या ध्रुवाः प्रस्तारे एको द्वौ त्रयश्चत्वारः दैर्घ्ये एकसमन्विता द्वौ त्रयश्चत्वारः पञ्च इत्यर्थः। अथ सर्वे एवाष्टगृहध्रुवाः प्रस्तारे दैर्घ्ये च स्वेच्छया वेदसमन्विताः कार्याः युक्त्यनुरूपं यावद्भिर्वा गृहाः शोभन्ते तावद्भिश्चतुर्भिर्युक्ता ध्रुवाः कार्या इत्यर्थः।

(ग) गृहायज्ञानमाह–व्यासेनेति। व्यासेन प्रस्तारहस्तप्रमाणेन दैर्घ्ये दैर्घ्यहस्तप्रमाणे पूरितेऽष्टाभिर्हते सति यच्छेषं तिष्ठति तदायं विद्यात्। यथा पशुपतिदीपिका-

अथ गृहाणां सामान्यनक्षत्रकथनम् ।

**तस्माद्व्यासगुणाद्दैर्घ्यात्पुनर्मङ्गलताडितात् ।**
**त्रिघनेन हृताच्छेषं नक्षत्रं तस्य वेश्मनः ॥ १८ ॥ (घ)**

अर्थ–अब घरके सामान्य नक्षत्रोंको कहते हैं । प्रस्थांकद्वारा गुणित दीर्घ परिमित अंकको पुनः आठसे पूरण करे अनन्तर सत्ताईससे भाग करनेमें जो अङ्क शेष बचे उनकोही उस घरके नक्षत्र जानना चाहिये ॥ १८ ॥

अथ गृहाणामायज्ञानमायव्ययफलञ्च ।

**वसुशिष्टं यदा जातं नक्षत्रं भवति व्ययः ।**
**व्ययाधिकं न कर्त्तव्यं गृहमायाधिकं शुभम् ॥ १९ ॥(ङ)**

अर्थ–पूर्वोक्तवचनके अनुसार घरके नक्षत्र निर्णय करके उनको आठसे भाग करनेमें जो अङ्क शेष बचें उनको व्यय कहते हैं दीर्घ और प्रस्थके परिमित अङ्कोंको मिलानेसे जो अङ्क हो उनको पिण्ड कहते हैं उक्त पिण्डाङ्कको आठसे गुणकरके बारहसे भाग करनेमें जो अंक शेष बचें उनको आय कहते हैं,आयके अंकोंसे व्ययके अंक अधिक होनेसे घरको न बनवावे और यदि व्ययके अंकोंसे आयाङ्क अधिक होय तभी घर बनवाना चाहिये ॥ १९ ॥

–याम् " आयामेन च ये हस्ताः प्रस्तारेण च तान्गुणेत् । अष्टाभिर्भागमाहृत्य शेषमाय प्रकल्पयेत् ।

( घ ) गृहस्य नक्षत्रज्ञानमाह–तस्मादिति । तस्मादुक्ताद्व्यासप्रमाणपूरितात् दैर्घ्य–प्रमाणात् पुनरपि मङ्गलेनाष्टभिस्ताडितात्पूरितात् त्रिघ्नेन सप्तविंशत्या हृतात् यच्छेषं स्यात्तस्य वेश्मनो नक्षत्रं स्यात् यथा राजमार्तण्डे–"पिण्डमष्टगुणं कृत्वा त्रिघनेन विभा–जयेत् । शेषं नक्षत्रमादिष्टं कृत्तिकादिव्यवस्थया " पिण्डमुक्तं तत्रैव " आयामसगुणि–तविस्तारहस्ताः पिण्डम् " इति ।

( ङ ) गृहाणां व्ययज्ञानमाह–वसिवति । तस्माद् व्यासगुणितादिति वचनोक्तत्रिघ–नेन हृताच्छेषमङ्कं नक्षत्रसंज्ञकं आयात तदष्टशिष्टं अङ्कस्तशेषं व्ययं स्यात् । यथा पशुपतिदीपिकायाम् । " पिण्डमष्टगुणं कृत्वा त्रिघनेन विभाजयेत् । शेषं नक्षत्रमुद्दिष्टं मष्टाभिर्हरणाद्व्ययः " इति । ततश्च व्ययाधिकं न कर्त्तव्यम् । " आयाधिकन्तु शुभं सम सम् " इति । केनचित्तु आयादिज्ञानमप्रकारान्तरेणोक्तम् । यथा "गृहभूमिसमाहतपिण्ड–पदं वसुलोचनरन्ध्रगजैर्गुणितम् । रविभूधरत्रिंशयोगहृतं भवनव्ययरिथति रक्षपदम् " अस्यार्थ–गृहभूमिप्रमाणस्य समाहतं प्रस्तारदैर्घ्याभ्याम् अन्योऽन्येन पूरितं पिण्डपदं पिण्डसञ्ज्ञकम् । यथा राजमार्तण्डे–आयामसगुणितविस्तारहस्तः पिण्डमिति तत्र पिण्डे पृथक्पृथक् स्थानचतुष्टये कृत्वा वसुलोचनरन्ध्रगजैर्गुणितं यथाक्रमं द्वादशसप्तविंशत् सप्तविंशतिभिर्हृतशेषं गृहस्यायव्ययस्थितिनक्षत्राणि स्युः । यथाक्रमम् । अन्येऽस्यार्थं न बुध्वा अन्यथा व्याचक्षते तद्धेयम् । एतत् प्रकारमात्रं दैवज्ञापि दृश्यते किन्तु ग्रन्थान्तरमतमेव राजमार्तण्डादीनां बहूनां सम्मतं सप्रमाणञ्च । इति ।

अथ गृहाणां नक्षत्रव्यवस्था।

प्रत्यग्दक्षिणयोर्भं द्रविणाद्यं विदिक्षु दहनादि।
पूर्वोत्तरयोर्गृहयोराश्विन्यादीनि भानि स्युः ॥ २२० ॥ (१)

अर्थ–अब गृहनक्षत्रोंके विषयमें विशेष कहते हैं। पश्चिम और दक्षिण दिक्स्थित घरके नक्षत्र धनिष्ठादि होते हैं, इसी प्रकार विदिक्स्थित ( कोणस्थित ) घरोंके नक्षत्र कृत्तिकादि होते हैं, और पूर्व और उत्तरदिक्स्थित घरके नक्षत्र अश्विन्यादि होते हैं ॥ २२० ॥

अथ शल्योद्धारादि कथनम्।

सुनिश्चितां मन्दिरभूमिमादौ निखाय तोयावधि यत्नतस्ताम्।
कुर्याद्विशल्यामथवा नृमानं खात्वाथवा प्रश्नवशाद्विधिज्ञः॥२१॥
दूर्वाप्रवालाक्षतपुष्पपाणिः शुचिः शुचिं दैवविदं नमित्वा।
पृच्छेद्विनीतो मधुरस्वरेण शल्यस्य तत्त्वं भवने तदीशः॥ २२ ॥

इति ज्योतिस्तत्त्वे।

अर्थ–अब शल्योद्धारादि कहते हैं, ज्योतिषतत्त्वमें लिखा है कि, घर बनानेके अर्थ भूमि स्थिर करके जितनी खोदनेसे जल दिखलाई देवे उतनीही खोदे अथवा मनुष्यकी बराबर खोदकरके, घरका मालिक शुद्ध होकर दूर्वा, प्रवाल, अक्षत, तण्डुल और पुष्प, हाथमें लेकर देवज्ञको नमस्कार करके विनयपूर्वक मधुर वाक्यसे शल्यके वृत्तान्तकी जिज्ञासा करनी चाहिये ॥ २१ ॥ २२ ॥

ततः प्रश्नादिमो वर्णः सन्धार्यो यत्नतोऽथवा।
क्रमात्पुष्पनदीदेवफलानां ब्राह्मणादितः ॥ २३ ॥
प्रणवो धरणीधारिणी करा च तदनन्तरम्।
न भूत्यै नम इत्येष मन्त्रो वह्निप्रियान्तकः ॥ २४ ॥
मन्त्रेणानेन कठिनीमभिमन्त्र्य विभाजयेत्।
नवधा सदनक्षेत्रं तथा पश्चाद्विलेखयेत् ॥ २५ ॥

---

(१) प्राप्तस्य ग्रहनक्षत्रस्य व्यवस्थामाह-प्रत्यागात। पश्चिमदक्षिणगृहयोर्नक्षत्र द्रविणाद्य धनिष्ठाद्य स्यात् धनिष्ठामारभ्य गणयेदित्यर्थः। विदिक्षु कोणस्थगृहाणां दहनादि कृत्तिकादि स्यात् पूर्वोत्तरग्रहयोरश्विन्यादीनि नक्षत्राणि स्युः। एतत्तु नक्षत्रज्ञानं वक्ष्यमाणव्ययज्ञानार्थं ग्रहपतिनक्षत्रेण सार्द्धं विवाहवद्योटकनाडीनक्षत्रादिशुद्ध्या शुभाशुभज्ञानार्थश्चेति बोद्धव्यमिति।

वकचतएहशपया नव चेत्प्रश्नाक्षराणि जायन्ते ।
प्रागादिकोष्ठनवके वर्णास्ते शल्यमाख्यान्ति ॥ २६ ॥

इति ज्योतिस्तत्त्वे ।

अथ-अनन्तर दैवज्ञ क्रमानुसार घरके मालिकके प्रश्नका आद्यक्षर द्वारा शल्य है वा नहीं तिसको देखे। प्रश्नके विषयमें ब्राह्मणादिक्रमसे द्रव्यादि ग्रहण करना चाहिये,उसका नियम इस प्रकारसे है कि, ब्राह्मण पुष्प, क्षत्रिय, नदी, वैश्य, देवता और शूद्रको फल ग्रहण करै; तदनन्तर प्रणवका उच्चारण करके "धरणी" इत्यादि मन्त्रद्वारा कठिनी अर्थात् खडि अभिमन्त्रित करके उसके द्वारा गृहभूमिको नौ अंश ( भाग ) में विभक्त करै । अनन्तर व, क, च, त, ए, ह, श, प य इन नौ अक्षरोंके मध्यमें जो वर्ण प्रश्नका अक्षर होय उसको पूर्वोक्त नौ कोठोंमें पूर्वादिक्रमसे विन्यस्त करके शल्यको जानना चाहिये ॥२३-२६॥

प्रश्ने वकारः पुरतो नरास्थि ब्रवीति शल्यं मरणप्रदायि ।
क्षोणीशदण्डोरगहेतुमृत्युप्रदं ककारः खरशल्यमग्नौ ॥ २७ ॥
याम्यां चकारः प्लवगास्थिवेश्मप्रभोर्विनाशावहमाह शल्यम् ।
रक्षोदिशि श्वास्थि गृहस्थितानां महद्भयं वक्ति सुनिश्चितं तः॥२८
एः पाशिदिश्यस्थि शिशोर्ब्रवीतिमृत्युं प्रवासाद्गृहमेत्य शल्यम् ।
हा वायुकोणे नररूपमस्थि दारिद्र्यमित्रक्षयकृद्दिधत्ते ॥ २९ ॥
धनपदिशिशकारः प्राह विप्रास्थि वित्त-
क्षयकृदथ पकारो वक्ति ऋक्षास्थि शम्भो ।
तदिह कुलविनाशं गोधनानाञ्च हानिं
वितरति गृहनाथस्यापि गुप्तस्य दैवैः ॥ ३० ॥
यो मध्यभागेऽभ्यषितं कपालं कालायसञ्चायकुलक्षयाय ।
यत्नादपास्यान्यधुना प्रमाणं सर्वत्र तथ्यं कथयामि शल्ये॥३१॥

अथ-पूर्वोक्त प्रश्नका पहिला अक्षर 'व' होनेसे पूर्व दिशामें घरके मालिकका मृत्युदायक मनुष्यास्थि होताहै इसी प्रकार प्रश्नका अक्षर 'क' होनेसे राजदण्ड अथवा सर्पदंशनद्वारा मृत्युप्रद गर्दभअस्थि अग्निकोणमें, 'च' दक्षिणदिशामें वानरास्थि घरके मालिकका विनाश कर्ता है, 'त' नैर्ऋतकोणमें कुत्तेकीअस्थि महद्भयजनक होताहै, ए पश्चिम दिशामें बालकास्थिरूप शल्य प्रवासमें मृत्युदायक

होता है, 'ह' वायुकोणमें मनुष्यके सर्वावयवकी अस्थि दारिद्रचप्रद और बान्धवोंका नाश करनेवाला होता है, 'अ' उत्तर दिशामें ब्राह्मणास्थि धनका नाशकारक होताहै, 'प' ईशान कोणमें भल्लूकास्थि देवताओंकी रक्षा होनेसेभी घरके मालिका नाश करनेवाला और गोधनादि विनाशक होता है और 'य' मध्यमाग नृकपालरूप शल्य घरके मालिकका और उसके वंशका नाश करनेवाला होता है। अत एव यत्नपूर्वक उक्त प्रकार शल्य वास्तुभूमिसे उखाड करके एकान्तमें करना चाहिये ॥ २७ ॥ २८ ॥ २९ ॥ ३३० ॥ ३१ ॥

अथ दिग्विशेषे शल्यस्थितिकथनम् ।

इन्द्ररक्षोजलेशाने शल्यं सार्द्धकरे कटौ ।
वह्नयन्तककुबेरेषु पुरुषे मध्यवातयोः ॥ ३२ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-अब दिग्विशेषमें शल्यकी स्थिति निर्णय करतेहैं, ज्योतिषतत्त्वमें लिखाहै कि, पूर्व, नैर्ऋत, पश्चिम और ईशान कोणमें डेढ हाथ भूमिके मध्यमें शल्य होताहै, और अग्निकोणमें, दक्षिणमें और उत्तर दिशामें कटिपरिमित भूमिके मध्यमें शल्य होताहै और मध्यस्थानमें और वायुकोणमें पुरुष परिमित भूमिके मध्यमें शल्यका स्थान होताहै ॥ ३२ ॥

अपिच ।

पुरुषाधःस्थितं शल्यं न गृहे दोषदं भवेत् ।
प्रासादे दोषदं शल्यं भवेद्यावज्जलान्तकम् ॥ ३३ ॥

इति देवीपुराणे ।

अर्थ-देवीपुराणमें लिखाहै कि, पुरुषप्रमाण भूमिके निम्नमें स्थित शल्य घरके मध्यमें दोषकारक नहीं होताहै, किन्तु मनुष्य परिमित भूमिके मध्यमें स्थित शल्यही घरके मध्यमें दोष कारक होताहै, और जलान्तक शल्य प्रासादमें ( अट्टालिका प्रभृतिमें ) दोषकारक होताहै ॥ ३३ ॥

अन्यच्च ।

गृहारम्भेऽपि कण्डूतिः स्वाम्यङ्गे यदि जायते ।
शल्यं त्वपनयेत्तत्र प्रासादे भवनेऽपि वा ॥ ३४ ॥

इति देवीपुराणे ।

अर्थ-देवीपुराणमें लिखाहै कि, घर बनावानेमें यदि घरके मालिकका शरीर खुजलाय तो जानना चाहिये कि घरमें वा प्रासादमें शल्य है, अतएव यह शल्य जिस प्रकारसे निकलसके उसमें अवश्यही यत्न करना चाहिये ॥ ३४ ॥

अथ गृहारम्भे हस्तप्रमाणम् । ( १ )

**स्वामिहस्तप्रमाणेन धर्मपत्नीकरेण वा ।**
**मापयेद्भूमिमात्रं तु गृहकर्माणि कोविदः ॥ ३५ ॥**

अर्थ-अब घर बनवानेमें हाथका प्रमाण कहतेहैं, घरके मालिकके हाथमें अथवा धर्मपत्नीके हाथसे घरको नापना चाहिये ॥ ३५ ॥

अथ गृहारम्भे सूत्रादीनामारोपणस्थानम् ।

**ईशाने सूत्रपातः स्यादाग्नेये स्तम्भरोपणम् ।**
**द्वारं नवमभागे तु कार्यं वामात्प्रदक्षिणम् ॥ ३६ ॥ ( २ )**

अर्थ-गृहारम्भमें ईशान कोणमें सूत्रपात करे, अग्निकोणमें स्तम्भ रोपण और वाम वर्त्तमें क्रमानुसार अष्टमभागके एकभागका द्वारकरे ॥ ३६ ॥

अथ गृहस्य वामस्य द्वारकरणव्यवस्था ।

**तृतीयतुर्ययोः प्राच्यां याम्ये तुर्येऽथ पश्चिमे ।**

---

( १ ) हस्तोऽप्यत्र कफोण्युपक्रममध्यमाङ्गुल्यग्रपर्यन्तम् । " मध्यमाङ्गुलीकूर्पयोर्मध्ये प्रामाणिकः करः " इत्यभियुक्तस्मरणादिति कल्पतरुरत्नाकरौ । इति स्मार्त्तेनोक्तम् ।

( २ ) सूत्राद्यारोपणमाह-ईशान इति । ईशानकोणे सूत्रपातः कार्यः अग्निकोणेऽन्त्यर्यादिक दत्त्वा गर्त्ते स्तम्भारोपणञ्च स्तम्भे वास्तुपुरुषं पूजयित्वा पठेत् । " ॐ यथाचलो गिरिर्मेरुर्हिमवांश्च यथाचलः । शुभप्रदमहास्तम्भ तथा त्वमचलो भव " अत्र च मासादिविलम्बे पुनः कर्त्तव्यमिदम् तथा-"मासान्तरे रचनारम्भे ईशानारोपण पुनः " इति गृहद्वारञ्चाष्टभागीकृतस्य गृहस्यैकभागे वक्ष्यमाणश्लोकेन विशिष्योक्ते कर्त्तव्यम् । तच्च गृहस्य वामपार्श्वत्वात्प्रदक्षिणक्रमेण कर्त्तव्यमेतदुक्त भवति निर्गच्छतः पुंसो वामभागो गृहस्य वामपार्श्वः । तदादित आरभ्य प्रदक्षिणक्रमेणाष्टौ भागान्कृत्वा वक्ष्यमाणश्लोयैकभागेकद्वार कार्यमित्यर्थः । इति । वामात्प्रदक्षिण वामापेक्षया प्रकृष्ट दक्षिणम् । तथा च दक्षिणेऽधिकांश स्थापयित्वा द्वार कुर्यादित्यर्थः । विस्तारगृहद्विगुणोन्नाय द्वार कुर्यात्तथा गृहे " इति हृदयानन्दः ।

( ३ ) पूर्वादिदिक्षु स्थितानां गृहाणामष्टभागीकृतानां द्वारव्यवस्थामाह-तृतीयेति । प्राच्यां दिशि स्थितस्य गृहस्य तृतीयचतुर्थभागयोर्द्वारं शुभद दक्षिणादिशि स्थितस्य गृहस्य चतुर्थभाग द्वार शुभद पश्चिमगृहस्य चतुर्थपञ्चमभागयोर्द्वारं शुभदम् । उत्तरगृहस्य पञ्चमतृतीयचतुर्थभागेषु द्वार शुभदमिति एतदेव व्यक्तीकृत्योक्त राजमार्तण्डे-"अनलभय स्त्रीजन्म प्रभूतधनतो नरेन्द्रसायुज्यम् । क्रोधपरतानृतत्वं क्रौर्यं चौर्यं च पूर्वेण । अल्पसुतत्व प्रैष्य नीचत्व भक्ष्यपानसुतवृद्धिः । रौद्र कृतनिधनमधन सुतवीर्यघ्नञ्च याम्येन । सुतपीडारिपुवृद्धिर्धनसुतनाशः सुतायबलसम्पत् । धनसम्पन्नृपतिभय धनक्षयो रोग इत्यपरे । वधबन्धौ रिपुवृद्धिर्धनसुतलाभः समस्तगुणसम्पत् । पुत्रधनाप्तिर्वैरं सौम्येन दोषश्रिया निःस्वम्" इति ।

तुर्यपञ्चमयोः पञ्चत्रिश्चतुर्थेऽपि चोत्तरे ॥ ३७ ॥

अर्थ-किस दीवालके कितने अंशमें घरका दरवाजा लगावै अब उसको वर्णन करते हैं, पूर्वदिशाके घरमें तीसरे अथवा चौथे भागके एकभागमें द्वार करना चाहिये, इसी प्रकार दक्षिण दिशाके घरके चौथे भागमें दरवाजा शुभ होता है, पश्चिमदिशाके घरका चौथे वा पांचवें भागके एकभागमें दरवाजा लगावै और उत्तरदिशाके घरका पांचवें तीसरे वा चौथे भागके एक भागमें दरवाजा लगाना चाहिये ॥ ३७ ॥

अथ गृहारम्भे सूत्रच्छेदादिदोषकथनम्।

सूत्रच्छेदे भवेन्मृत्युः कीले चावाङ्मुखे महान्रोगः।
गृहनाथस्थपतीनां स्मृतिलोपे मृत्युर्वादेश्यः ॥ ३८ ॥ (क)

अर्थ-घर बनवानेके समयमें सूत्रादि छिन्न होनेसे जो फल होता है अब उसको वर्णन करते हैं सूत्र छिन्न होनेसे घरके मालिककी मृत्यु होती है कीलके उखडनेसे महारोग होता है और घरके नापनके समयमें यदि गिनती भूलजाय तो घरके मालिककी और घर बनानेवालेकी मृत्यु होती है ॥ ३८ ॥

अथ गृहार्घ्यदानोपस्थापितकुम्भभंगादिदोषः।

स्कन्धाच्च्युते शिरोरुग्गलोपसर्गोऽपवर्जिते कुम्भे।
भग्नेऽपि च कर्मिवधः कराच्च्युते गृहपतेर्मृत्युः ॥ ३९॥(ख)

अर्थ-अब अर्घ्यके निमित्त स्थापित घटभंगआदि होनेसे जो दोष होता है उसको कहते हैं जल आते समयमें कुम्भ स्कन्धदेशसे स्खलित होनेमें घरके मालिकके शिरमें पीडा होती है, स्थापित कुम्भ किसी प्रकार अधोमुख होनेसे गलेमें रोग होता है घट भग्न होनेसे कुम्हारकी मृत्यु होती है और यदि कुम्भ हाथसे गिरजावे तो घरके मालिककी मृत्यु होती है ॥ ३९ ॥

अथ सूत्रदाने कुब्जादिदर्शननिषेधः।

कुब्जं वामनकं भिक्षुं वैद्यं रोगातुरानपि।

---

(क) सूत्रच्छेदादिफलमाह-सूत्रेति। सूत्रे छिन्ने गृहपतेर्मृत्युः स्यात् आरोपिते कीलके सूत्राकर्षणैरवाङ्मुखे उत्पाटिते वा महान् रोगः स्यात्। मानकाले हस्तप्रमाणस्य स्मृतिलोपे भ्रान्ते गृहिणः कार्मिणश्च मृत्युः स्यात्।

(ख) अर्घ्यार्थोपस्थापितस्य कलशस्य भङ्गादिफलमाह-स्कन्धादिति। जलानयनसमये स्कन्धाच्च्युते कुम्भे सति गृहपतेः शिरोरुक् अर्घ्यार्थस्थापिते कुम्भे अपवर्जिते किंचिदासङ्गादिना पतितत्वादवाङ्मुखे गृहपतेर्गलोपसर्गो गलरोगः स्यात् शेषं सुगममिति।

**दर्शने सूत्रकाले तु संत्यजेत्क्षेमहेतवे ॥ २४० ॥(ग)**

अर्थ–घर बनवानेके समय कुब्जादि दर्शनमें सूत्रपातादिक निषेध कहते हैं घरका मालिक यदि मङ्गलकी इच्छा करे तो घरके सूत्रपात समयमें कुब्ज, वामन, भिक्षुक, वैद्य और रोगी मनुष्यका दर्शन न करे ॥ २४० ॥

अथ सूत्रदानकाले हुलहुलादिश्रवणफलम् ।

**श्रुतौ हुलहुलानाञ्च मेघानां गर्जितेन च ।**
**गजानामपि हंसानां ध्वनितं धनदं भवेत् ॥ ४१ ॥ (घ)**

अर्थ–सूत्रपातसमयमें हुलहुलि ध्वनि ( स्त्रियोंके मङ्गलजनक मुखकी ध्वनि ) मेघोंकी गर्जना और हाथी और हंसकी ध्वनि श्रवण गोचर होनेसे धनप्रद होता है ॥ ४१ ॥

इति गृहारम्भः ।

अथ गृहप्रवेशः ।

**( ङ ) ज्येष्ठापुनर्वसूवर्ज्जं गृहारम्भोदितञ्च यत् ।**
**तत्सर्वं चिन्तयेद्वेश्मप्रवेशे दैवचिन्तकः ॥ ४२ ॥**

अर्थ–अब गृहप्रवेशका मुहूर्त्त कहते हैं, जेष्ठा और पुनर्वसु, नक्षत्रको छोडकरके जो गृहारम्भोक्त नक्षत्र हैं उनमेंही गृहप्रवेश करना चाहिये इस वचनमें ज्येष्ठा और पुनर्वसु वर्जित इस व्यर्थ निषेधसे गृहप्रवेशमें उक्त दोनों नक्षत्र प्रशस्त हैं ॥४२॥

अपिच ।

**हस्तेपुण्यपुनर्वसौशतभिषाज्येष्ठास्वस्थो धातृभे ।**

---

( ग ) सूत्रपातादिकाले कुब्जादिदर्शननिषेधमाह–कुब्जामिति । स्पष्टार्थम् ।

( घ ) सूत्रदानकाले हुलहुलादि श्रुतिफलमाह–श्रुताविति । हुलहुलानां स्त्रीकपोलध्वनीनां मेघगर्जितस्य श्रुतौ सत्यां धनं स्यात् । शेषं सुगमम् । राजमार्त्तण्डे । " सूत्रे विस्तार्यमाणे तु दासोऽग्निर्यदि दृश्यते । नरो वा घोटकारूढो धनैश्वर्यं न संशयः । शङ्खतूर्यादिनिर्घोषे वसतिर्विपुला गृहे । योषितां कन्यकानां च क्रीडिते वित्तवर्द्धनम् ।

( ङ ) ज्येष्ठादितिभ्यां संयुक्तमित्यपि पाठान्तरमस्ति तदा व्यक्त एवार्थः । गृहप्रवेशमाह–ज्येष्ठेति । गृहारम्भोक्तं यद्विधानं तत्सर्वं ज्येष्ठापुनर्वसुं च वर्जयित्वा गृहप्रवेशे दैवज्ञो योजयेत् । अयमर्थः । अत्र ज्येष्ठापुनर्वस्वोर्निषेध उक्तः । अत्र निषेधस्य निषेधाद्विधिरिति अतो ज्येष्ठा पुनर्वस्वोः गृहप्रवेशः कार्यः । कश्चित्तु ज्येष्ठापुनर्वसू वर्जयित्वा सामान्यनक्षत्रं यत् अन्यच्च गृहारम्भोक्तं यत् तत्सर्वं योजयेत् । तन्न । ज्येष्ठापुनर्वस्वोः पार्श्वास्थगणोक्तेन गृहप्रवेशे विहितत्वात् । तथाच राजमार्तण्डे–"ज्येष्ठा पुष्य पुनर्वसु शतभिषा स्वाती तथा रोहिणी रेवत्युत्तरभत्रयं हरिमृगौ मूलधनिष्ठाकरः । कन्या कुम्भ मृगालिसिंह मिथुनस्थर्क्षादिरात्र्युद्गमे धारा जीव सुधांशुसौम्यभृगुजा वेश्मप्रवेशे हिताः " इति ।

रेवत्युत्तरविष्णुभाग ( १ ) शशभृन्मूलेधनिष्ठासु च ॥
कन्याकुम्भवृषालिसिंहमिथुनेष्वृक्षोदयेऽर्केशुभे
शुक्रेज्येन्दुजशीतरश्मिदिवसे वेश्मप्रवेशः शुभः ॥ ४३ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–ज्योतिःसारसंग्रहमें लिखा है कि, हस्त, पुष्य, पुनर्वसु, शतभिषा, ज्येष्ठा रोहिणी, रेवती, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, श्रवण, पूर्वाफाल्गुनी, मृगशिर, मूल और धनिष्ठा नक्षत्रमें, कन्या, कुम्भ, वृश्चिक, सिंह और मिथुन लग्नमें, गोचरमें सूर्य शुद्ध होनेसे शुक्र बृहस्पती, बुध और सोमवारमें गृहप्रवेश शुभ होता है ॥४३ ॥

अन्यच्च ।

सकलं हन्ति सा रिक्ता दैवैरपि विनिन्दिता ।
इति वचनात्तिथिस्तु रिक्ताभिन्न एव ॥ ४४ ॥

इति ज्योतिःसारसंग्रहे हृदयानन्दः ।

अर्थ–ज्योतिःसारसंग्रह ग्रन्थमें हृदयानन्दने कहा है कि, रिक्तातिथिमें कर्म नष्ट होता है, विशेषकरके देवताओंनेभी रिक्ता तिथिकी निन्दा करी है, अतएव रिक्ता भिन्न तिथिमेंही गृहप्रवेश करना चाहिये ॥ ४४ ॥

अपरञ्च ।

स्थाप्यं समाप्यं क्रतुयूपकाष्ठं गृहप्रवेशो गजवाजिबन्धः ।
ग्रामे प्रवेशो नगरे पुरे वा दिने प्रशस्तानि शनैश्चरस्य॥४५॥

अर्थ–यज्ञीय यूपकाष्ठका स्थापन वा विसर्जन, गृहप्रवेश हाथी और घोडे आदिका प्रथम खरीदना, ग्राममें वा नगरमें प्रवेशकरना इन सब कार्योंमें शनिवार प्रशस्त है ॥ ४५ ॥

प्रकारान्तरञ्च ।

गोपुच्छविन्यस्तकरः प्रविशेच्च गृहं गृही ।
अनुलिप्तः सुखी स्रग्वी सपत्नीकस्तथैव च ॥ ४६ ॥

इति विष्णुधर्मोत्तरे ।

अर्थ–विष्णुधर्मोत्तरमें लिखा है कि, चन्दनादिको लगाकर हर्षचित्तसे पुष्पोंकी मालाको धारण करके घरका मालिक पत्नीके साथ गौकी पूंछ पकडकर घरमें प्रवेश करै ॥ ४६ ॥

( १ ) भागशशभृदित्यत्र भागशशभृदिति पाठो न्याय्य एव । भाग भगोदेवता अस्येति पूर्वाफाल्गुनीत्यर्थः । उग्रगणत्वेन पूर्वाफाल्गुन्या गृहारम्भे वर्जनादिति साम्प्रदायिकाः ।

अथ गृहप्रवेशविधिः ।

**कृत्वाग्रतो द्विजवरानथ पूर्णकुम्भं दध्यक्षताम्रदल-**
**पुष्पफलोपशोभम् । दत्त्वा हिरण्यवसनानि तथा**
**द्विजेभ्यो माङ्गल्यशान्तिनिलयं निलयं विशेच्च॥ ४७॥ (*)**

इति दीपिकायाम् ।

अर्थ–अब गृहप्रवेशकी विधि कहते हैं दीपिकामें लिखा है कि, घरका मालिक ब्राह्मण और दध्यक्षत ( दही और चावल ) आम्रकी शाखा, पुष्प, और फलसे उपशोभित पूर्णकुम्भको आगे करके ब्राह्मणको सुवर्ण और वस्त्रादि दान करके नवीन घरमें प्रवेश करै ॥ ४७ ॥

अथ पारावतादिपोपणम् ।

**पारावतमयूराश्च शुका वै सारिकास्तथा ।**
**गृहस्थेन सदा पोष्या आत्मनः श्रेय इच्छता ॥ ४८ ॥**

इति महाभारते ।

अर्थ–महाभारतमें लिखा है, गृहस्थ मनुष्य अपने मङ्गलकी इच्छा करै तो पारावत ( कबूतर ) मयूर ( मोर ) शुक ( तोता ) और सारिका ( मयना ) को सर्वदा खिलावै ॥ ४८ ॥

सूर्यास्तात्परं गवादीनां गृहाद्बहिर्निष्कासननिषेधः

**गोगजाश्वाविशालासु तत्पुरीषस्य निर्गमम् ।**
**अस्तं गते न कर्तव्यं देवदेवे दिवाकरे ॥ ४९ ॥**

इति मत्स्यपुराणे ।

अर्थ–मत्स्यपुराणमें लिखा है कि, भगवान् सूर्यदेवके अस्त होजानेपर गाय हाथी, घोडा और बकरी इनको घरके बाहर न निकालना चाहिये ॥ ४९ ॥

गृहपार्श्वेनिषिद्धवृक्षाः ।

**वर्जयेत्पूर्वतोऽश्वत्थं प्लक्षं ( * ) दक्षिणतस्तथा ।**
**न्यग्रोधमपरादेशादुत्तराच्चाप्युदुम्बरम् ॥ २५० ॥**

इति गोभिलः ।

अर्थ–गोभिलने कहा है कि, घरके पूर्व दिशामें पीपल, दक्षिणमें पाकड,

---

( * ) गृहप्रवेशविधिमाह–कृत्वेति । अग्रतो ब्राह्मणान् कृत्वा दध्यादिशोभित पूर्णकुम्भं चाग्रे कृत्वा पूजितद्विजेभ्यो हिरण्य वस्त्राणि दत्त्वा माङ्गल्यकर्मणः शान्तिकर्मणश्च निलयं स्थानं गृहं प्रविशेत । ( * प्लक्षः पर्कटी ।

पश्चिममें वट और उत्तरमें उदुम्बरके वृक्षको परित्याग करे ॥ २५० ॥

फलम् ।

**अश्वत्थोऽग्निभयं कुर्यात्प्लक्षो ब्रूयात्प्रमायुकान् ।**
**न्यग्रोधो राजसंपीडां कुक्ष्यामयमुदुम्बरः ॥ २५१ ॥**

इति गोभिलः ।

अर्थ-घरकी पूर्वदिशामें पीपलका वृक्ष होनेसे अग्निका भय होता है, दक्षिणमें पाकडका वृक्ष होनेसे पित्तकी वृद्धि होती है, पश्चिममें वटका वृक्षहोनेसे राजपीडा होती है और घरके उत्तरमें गूलरका वृक्ष होनेसे उदरामय रोग होता है ॥ २५१ ॥

इति वंशावरेल्यांतर्वर्तिकान्यकुब्जकुलभूषणभारद्वाजगोत्रे त्रिपाठ्युपनामकेन पण्डित बाँकेलालात्मजेन श्यामसुन्दरशर्मणा सम्पादिते भाषाटीका विभूषिते च ज्योतिषतत्त्वसुधार्णवे जातककर्मादि गृहप्रवेशान्तश्चतुर्थस्तरङ्गः ।

---

## पञ्चमस्तरङ्गः ५.

अथ देवताघटनम् ।

**ध्रुवलघुमृदुवर्गे वारुणे विष्णुदैवे मरुददितिधनिष्ठे**
**शुभने वासरे च ॥ त्रिदशमदनजन्मैकादशे**
**शीतरश्मौ विबुधकृतिरभीष्टा नाडिनक्षत्रहीने ॥ १ ॥ (क)**

अर्थ-अब देवताओंकी प्रतिमा बनानेका मुहूर्त कहते हैं-उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, पुष्य, अश्विनी, हस्त, चित्रा, अनुराधा, मृगशिर रेवती, शतभिषा, श्रवण, स्वाति, पुनर्वसु और धनिष्ठा नक्षत्रमें, शुभग्रहोंके वारमें गोचरमें चन्द्रमा तीसरे, दशवें, सातवें, जन्मका अथवा ग्यारहवें स्थानमें स्थित होनेसे, नाडी नक्षत्रहीन दिनमें देवताओंकी प्रतिमाको निर्माण करना चाहिये ॥ १ ॥

---

(क) देवताघटनमाह-ध्रुवेति । विष्णुर्देवो यस्य स विष्णुदेवः श्रवणः शुभने वासरे शुभग्रहस्य वारे जन्मराशेः सकाशात् त्रिदशसप्तजन्मैकादशस्थे जन्मादिनाडीनक्षत्रहीने च चन्द्रे विबुधकृतिर्देवताकरणमिष्टा । इति ।

अथ सामान्यदेवताप्रतिष्ठा ।

शस्तेन्दौ माघषट्के शुभदिवसतिथौ गोगुरुझर्क्षद्वन्द्वलग्ने
वित्तद्वन्द्वाहियुग्मादितिहयभरणीयुग्विशाखान्येषु ।
क्षीणं षष्ठाष्टमेन्दुं हरिशयनमसद्युक्तलग्नञ्च हित्वा
केन्द्रे जीवे च शुक्रे त्रिभवरिपुगृहेऽसत्सु देवप्रतिष्ठा ॥२॥(ख)

अर्थ-अब सामान्यदेवताओंकी प्रतिष्ठाका मुहूर्त कहते हैं-गोचरमें चन्द्रमा शुद्ध होनेसे, माघादि छः महीनोंके मध्यमें, शुभग्रहोंके वारमें, शुभतिथिमें, वृष, धन, मीन, मिथुन और कन्यालग्नमें, धनिष्ठा, शतभिषा, आश्लेषा, मघा, पुनर्वसु, अश्विनी, भरणी, कृत्तिका और विशाखा इन सब नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें, लग्नके छठे आठवें और क्षीण चन्द्रमाको छोडकर, श्रीहरिका शयनसमय और पापयुक्त लग्नको परित्याग करके केन्द्रस्थानमें बृहस्पति और शुक्र स्थित होनेसे और तीसरे ग्यारहवें और छठे स्थानमें पापग्रहोंके होनेसे देवताओंकी प्रतिष्ठा करनी चाहिये ॥ २ ॥

अपिच ।

प्रतिष्ठा सर्वदेवानां केशवस्य विशेषतः ।
उत्तरायण आपन्ने शुक्लपक्षे शुभे दिने ॥
कृष्णपक्षे च पञ्चम्यामष्टम्याश्चैव शस्यते ॥ ३ ॥

इति व्यवहारसमुच्चये ।

अर्थ-व्यवहारसमुच्चय ग्रन्थमें लिखा है कि, उत्तरायणमें, शुक्लपक्षमें, शुभ दिनमें और कृष्णपक्षकी पञ्चमी और अष्टमीतिथिमें सब देवताओंकी प्रतिष्ठा करी जासक्ती है, किन्तु विशेषकरके उक्त दिनोंमें विष्णुकीही प्रतिष्ठा प्रशस्त है ॥३॥

अन्यच्च ।

युगादावयने पुण्ये कर्त्तव्यं विषुवद्वये ।
चन्द्रसूर्यग्रहे वापि दिने पुण्येऽथ पर्वसु ॥ ४ ॥

---

(ख) सामान्यदेवताप्रतिष्ठामाह-शस्तेन्दाविति । गोचरशुद्धे चन्द्रे माघादौ षट्के षमासि शुभवारे शुभतिथौ वृषधनुर्मीनमिथुनकन्यालग्ने वित्तद्वन्द्वं धनिष्ठाशतभिषा अहियुग्मेऽश्लेषामघायाम् अदितिः पुनर्वसुः हयोऽश्विनी भरणी युक् भरणी कृत्तिका विशाखा एतदन्येषु भेषु लग्नात् षष्ठाष्टमस्थं चन्द्रं क्षीणचन्द्रञ्च हित्वा हरिशयनं पापयुक्तलग्नञ्च हित्वा तृतीयैकादशषष्ठेषु पापेषु देवप्रतिष्ठा कार्या । इति ।

**या तिथि ( × ) र्यस्य देवस्य तस्यां वा तस्य दक्षिणे ।**
**गृह्यागमविशेषेण प्रतिष्ठा मुक्तिदायिनी ॥५॥**

इति भुजबलभीमपराक्रमे ।

अर्थ-भुजबलभीमपराक्रममें लिखा है कि-युगादिमें, दोनों अयन संक्रान्तिमें, दोनों विषुव संक्रान्तिमें चन्द्रसूर्यके ग्रहणमें पुण्याहमें, पर्वके दिनमें और जिस देवताकी जो तिथि कही है उसमें और दीक्षा देनेके दिनमें अपनी अपनी गृह्योक्त प्रतिष्ठा मुक्तिकी देनेवाली होती है ॥ ४ ॥ ५ ॥

अथ वासुदेवप्रतिष्ठा ।

**प्राजेशवासवकरादितिभाश्विनीपुष्यौष्णामरेज्यशशिं ( ❀ ) भेषु तथोत्तरासु ॥ कर्तुः शुभे शशिनि केन्द्रगते च जीवे । कार्या हरेः शुभतिथौ विधिवत्प्रतिष्ठा ॥ ६ ॥ ( क )**

अर्थ--अब विष्णुभगवान्‌की प्रतिष्ठाका मुहूर्त्त कहते हैं रोहिणी, ज्येष्ठा, हस्त, पुनर्वसु, अश्विनी, रेवती, पुष्य, मृगशिर उत्तराफाल्गुनी, उत्तराषाढा और उत्तराभाद्रपदा नक्षत्रमें कर्त्ताके गोचरमें चन्द्रमा शुद्ध होनेसे बृहस्पति केन्द्रस्थानमें होनेसे शुभतिथिमें विष्णुभगवान्‌की प्रतिष्ठा करनी चाहिये ॥ ६ ॥

हरेः प्रतिष्ठायां तिथिशेषकथनम् ।

**द्वादश्येकादशीराका शुक्ले शुक्ले च पञ्चमी ।**
**अष्टमी च विशेषेण प्रतिष्ठायां हरेः शुभा ॥ ७ ॥ ( ख )**

अर्थ-विष्णुकी प्रतिष्ठामें तिथिविशेष कहते हैं, द्वादशी, एकादशी, पूर्णिमा,

---

( + ) प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः ।
श्रिया देव्या द्वितीया च तिथीनामुत्तमा स्मृता ॥ १ ॥
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च ।
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च ॥ २ ॥
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी तिथिः ।
मातॄणां नवमी प्रोक्ता दशमी वासुकेस्तथा ॥ ३ ॥
एकादशी ऋषीणाञ्च द्वादशी चक्रपाणिनः ।
त्रयोदशी त्वनङ्गस्य शिवस्य च चतुर्दशी ॥ ४ ॥
मम चापि मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता ॥ ५ ॥ इति श्रीपद्मपुराणे ।

( × ) अश्विनीश इति पाठान्तरम् ।

( क ) विष्णुप्रतिष्ठामाह-प्राजेशेति । प्राजेशो रोहिणी आदितिभं पुनर्वसुः अमरेज्यः पुष्यः लग्नात्केन्द्रस्थे जीवे शेषं स्पष्टमिति ।

( ख ) हरिप्रतिष्ठाया तिथिविशेषमाह-द्वादशीति । राका पूर्णिमा पञ्चमी अष्टमी च पक्षद्वयेऽपि शस्ता इत्यर्थः ।

दोनों पक्षोंकी पञ्चमी और अष्टमी इन सब तिथियोंमें विष्णुकी प्रतिष्ठा करनी चाहिये ॥ ७ ॥

अथ महेशादिप्रतिष्ठा ।

**पुष्याश्विशक्रभगदैवतवासवेपुसौम्यानिलेशमघ रोहिणिमूलहस्ते ॥ पौष्णानुराधहरिभेषु पुनर्वसौ च कार्याभिषेकतरुभूतपतिप्रतिष्ठा ॥ ८ ॥ (ग)**

अर्थ-वृक्ष और शिवादिकी प्रतिष्ठाका मुहूर्त्त कहते हैं- पुष्य, अश्विनी, ज्येष्ठा, पूर्वाफाल्गुनी, धनिष्ठा, मृगशिर, स्वाति, आर्द्रा, मघा, रोहिणी मूल, हस्त, रेवती, अनुराधा, श्रवण और पुनर्वसु नक्षत्रमें अभिषेक, वृक्षकी प्रतिष्ठा और शिवकी प्रतिष्ठा करनी चाहिये ॥ ८ ॥

अथ परीक्षाकरणम् ।

**नो शुक्रास्तेऽष्टमेर्के गुरुसहितरवौ जन्ममासेऽष्टमेन्दौ
विष्टौ मासे मलाख्ये कुजशनिदिवसे जन्मतारासु चाथ ।
नाडीनक्षत्रहीने गुरुरविरजनीनाथताराविशुद्धौ
प्रातः कार्या परीक्षा द्वितनुचरगृहांशोदये शस्तलग्ने ॥ ९ ॥**

इति दीपिकायाम् ।

अर्थ--अब परीक्षा करनेका मुहूर्त कहते हैं-दीपिकामें लिखा है कि, शुक्रके अस्त न होनेसे और गोचरमें सूर्य आठवें न होय, गुर्वादित्ययोग, जन्ममास, अष्टमचन्द्रमा, विष्टि, (भद्रा) मलमास, मङ्गल और शनिवार, जन्मतारा और नाडीके नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें, बृहस्पति, सूर्य, चन्द्रमा और तारा शुद्ध होनेसे द्व्यात्मक और चरलग्नके नवांशमें प्रशस्त लग्नमें प्रातःकालके समय परीक्षा करनी चाहिये ॥ ९ ॥

अपिच ।

**नाष्टम्यां न चतुर्दश्यां प्रायश्चित्तपरीक्षणे ।
न परीक्षा विवाहश्च शनिभौमदिने तथा ॥ १० ॥**

इति व्यवहारचिन्तामणौ ज्योतिषतत्त्वे च ।

अर्थ-व्यवहारचिन्तामणिग्रन्थमें और ज्योतिषतत्त्वमें लिखा है कि, अष्टमी

---

(ग) वृक्षादिप्रतिष्ठामाह-पुष्येति। भगदैवतं पूर्वाफाल्गुनी वसुः देवतमस्येति वासवो धनिष्ठा अभिषेकयुक्ता तरुभूतपति प्रतिष्ठा कार्या शिवाभिषेकः तरुप्रतिष्ठा भूतपति प्रतिष्ठा च भूतपतिर्महेशस्तस्य प्रतिष्ठा कार्या एवं पुष्करिणीसेतुमठादिप्रतिष्ठा शेषं स्पष्टम् । इति । अत्रेव योगाभिषेकतरुकूपादिप्रतिष्ठायाः पठन्ति ।

और चतुर्दशी तिथिमें प्रायश्चित्त और परीक्षा निषिद्ध है, शनि और मङ्गलवारमें विवाह और परीक्षा न करनी चाहिये किसी २ आचार्यके मतसे शनि और मङ्गलवारमें प्रायश्चित्तकाभी निषेध है ॥ १० ॥

अथ दीक्षाग्रहणम्।

**ध्रुवमृदुनक्षत्रगणो रवि शुभवारे सत्तिथौ दीक्षा।**
**स्थिरलग्ने शुभचन्द्रे केन्द्रे कोण शुभे गुरौ धर्मे॥११॥(*)**

अर्थ-अब दीक्षा ग्रहण करनेका मुहूर्त्त कहते हैं-उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, चित्रा, अनुराधा, मृगशिर और रेवतीनक्षत्रमें रवि, सोम, बुध, बृहस्पति और शुक्रवारमें, शुभतिथिमें, स्थिरलग्नमें, चन्द्रमा शुद्ध होनेसे लग्नके केन्द्रस्थानमें और त्रिकोणमें शुभग्रह होनेसे और बृहस्पतिके नवमें स्थानमें स्थित होनेसे दीक्षा ग्रहण करनी चाहिये ॥ ११ ॥

अथ दीक्षाया मासकथनम्।

**मधुमासे भवेद्दुःखं माधवे रत्नसञ्चयः।**
**मरणं भवति ज्येष्ठे आषाढे बन्धुनाशनम् ॥ १२ ॥**
**समृद्धिः श्रावणे नूनं भवेद्भाद्रपदे क्षयः।**
**प्रजानामाश्विने मासि सर्वतः शुभमेव हि ॥ १३ ॥**
**ज्ञानं स्यात्कार्त्तिके सौख्यं मार्गशीर्षे भवत्यपि।**
**पौषे ज्ञानक्षयो माघे भवेन्मेधाविवर्द्धनम् ॥**
**फाल्गुनेऽपि विवृद्धिः स्यान्मलमासं विवर्जयेत् ॥ १४ ॥**

इति दीक्षामलमासतत्त्वयोः।

अर्थ-अब दीक्षाग्रहण करनेके महीनोंका फल कहते हैं-चैत्रके महीनेमें दीक्षा ग्रहण करनेसे दुःख प्राप्त होता है। इसी प्रकार वैशाखमें रत्नोंका सञ्चय, ज्येष्ठमें मरण, आषाढमें बान्धवोंका नाश, श्रावणमें समृद्धिलाभ, भाद्रपदमें प्रजाका नाश, आश्विनमें सर्वप्रकारसे शुभ, कार्तिकमें सुख, अग्रहायणमें भी सुख, पौषमें ज्ञानका नाश, माघमें मेधाकी वृद्धि और फाल्गुनके महीनेमें मन्त्रग्रहण करनेसे शुभ होता है किन्तु इन महीनोंके मध्यमें जो किसी महीनेमें मलमास होय तो उसमें दीक्षा ग्रहण न करना चाहिये ॥ १२ ॥ १३ ॥ १४ ॥

(*) दीक्षाग्रहणमाह-ध्रुवेति। रविवारे शुभग्रहवारे च गोचरशुभे चन्द्रे लग्नात् केन्द्रत्रिकोणे शुभग्रहे नवमस्थे गुरौ दीक्षा कार्येत्यर्थः। दीक्षाविचारस्तु तन्त्रप्रसिद्धत्वान्न लिखितः। इति।

अथ दीक्षायाः वारादिकथनम् ।

गुरौ रवौ दिने ( १ ) शुक्रे कर्त्तव्यं बुधसोमयोः ।
अश्विनीरोहिणी ( २ ) स्वातिविशाखाहस्तभेषु च ।
ज्येष्ठोत्तर ( ३ ) त्रयेष्वेवं कुर्यान्मन्त्राभिषेचनम् ॥ १५॥

इति मलमासतत्त्वे ।

अर्थ-अब दीक्षाग्रहण करनेके वारादि कहते हैं-मलमासतत्त्वमें लिखाहै कि, बृहस्पति, रवि, शुक्र, बुध और सोमवारमें अश्विनी, रोहिणी, स्वाति, विशाखा, हस्त, ज्येष्ठा, उत्तराफाल्गुनी, उत्तराषाढा और उत्तराभाद्रपदा नक्षत्रमें मन्त्र-ग्रहण करना चाहिये ॥ १५ ॥

अपिच ।

शुक्लपक्षे च कृष्णे वा दीक्षा सर्वसुखावहा ।
पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।
त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ॥ १६ ॥

इति दीक्षातत्त्वे ।

अर्थ-दीक्षातत्त्वमें लिखा है कि-शुक्लपक्षमें वा कृष्णपक्षमें दीक्षाग्रहण करनेसे सुख होता है. पूर्णिमा, पञ्चमी, द्वितीया, सप्तमी, त्रयोदशी और दशमी तिथिमें दीक्षा ग्रहण करनी चाहिये ॥ १६ ॥

पञ्चाङ्गशुद्धिदिवसे सोदये शशितारयोः ।
गुरुशुक्रोदये शुद्धलग्ने द्वादशशोधिते । ( ४ )
चन्द्रातारानुकूल्ये च शस्यते सर्वकर्म च ॥ १७ ॥

इति दीक्षातत्त्वे ।

अर्थ-दीक्षातत्त्वमें लिखा है कि-तिथि, वार, नक्षत्र, करण, योग और चन्द्रमा

( १ ) 'गुरो रवौ शनौ सोमे कर्त्तव्य बुधशुक्रयोः' । इति पाठान्तरम् ।

( २ ) 'अश्विनी भरणी स्वाति' इति पाठान्तरम् ।

( ३ ) 'ज्येष्ठोत्तराद्रयोश्चैव' इत्यपि दीक्षातत्त्वे पाठान्तरम् ।

( ४ ) पञ्चाङ्गशुद्धदिवसे तिथिवारनक्षत्रकरणयोगशुद्धदिवसे । तथा च महाकपिल पञ्चरात्रम् । एव नक्षत्रतिथ्यादौ करणे योगवासरे। मन्त्रोपदेशो गुरुणा साधकस्य शुभावहः । सोदये शशितारयोरिति जन्मचन्द्राद्यतारयोरानुकूल्यसहिते गुरुशुक्रोदये गुरुशुक्रास्तसमये एतत्तु समयशुद्ध्यन्तरोपलक्षणम् द्वादश शोभिने द्वादशांशशोधिते इति मलमासतत्त्वे स्मार्त्तेनाभिहितम् ।

जन्मतारा शुद्ध होनेसे कालशुद्धिमें, शुद्ध लग्नके द्वादशांशमें सब कर्मही प्रशस्त हैं अतएव इसमें दीक्षाग्रहण करनी चाहिये ॥ १७ ॥

सूर्यग्रहणकालेन समानो नास्ति कश्चन ।
तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत् ॥ १८ ॥
न मासतिथिवारादिशोधनं सूर्यपर्वणि । ( १ )
ददातीष्टं गृहीतं यत्तस्मिन्काले गुरोर्नृषु ॥
सिद्धिर्भवति मन्त्रस्य विनायासेन सेव्यतः ॥ १९ ॥

इति दीक्षातत्त्वे ।

अर्थ-दीक्षातत्त्वमें लिखा है कि-सूर्य ग्रहणके समान दूसरा कोई समय नहीं है, इस समयमें जो कार्य करे उसका अनन्त फल होता है और संक्रान्तिमें भी मास, तिथि, वार, नक्षत्र, योग, करण प्रभृतिका शुद्ध अशुद्ध विचार नहीं होता है उक्त समयमें गुरुके निकटसे इष्टमन्त्र ग्रहणकरनेसे अनायासेमेंही सिद्धि प्राप्त हो जाती है ॥ १८ ॥ १९ ॥

रोहिणीश्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम् ।
पुष्या शतभिषार्कौ ( २ ) च दीक्षानक्षत्रमुच्यते ॥२०॥

इति वीरतन्त्रे ।

अर्थ-वीरतन्त्रमें लिखा है कि-रोहिणी, श्रवण, आर्द्रा, धनिष्ठा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, पुष्य, शतभिषा और हस्तनक्षत्र दीक्षाविषयमें प्रशस्त हैं ॥ २० ॥

योगाश्च प्रीतिरायुष्मान्सौभाग्यः शोभनो धृतिः ।
वृद्धिर्ध्रुवः सुकर्मा च साध्यः शुक्लश्च हर्षणः ॥ २१॥
वरीयांश्च शिवः सिद्धो ब्रह्म इन्द्रश्च षोडश ।
शुभानि करणानि स्युर्दीक्षायां तु विशेषतः ।
शकुन्यादीनि विष्टिश्च विशेषेण विवर्जयेत् ॥ २२ ॥

इति रत्नावल्याम् ।

अर्थ-रत्नावलीग्रन्थमें लिखा है कि-प्रीति, आयुष्मान, सौभाग्य, शोभन,

( १ ) " अमा वै सोमवारे च भौमवारे चतुर्दशी । चतुर्थ्यङ्गारवारे च सूर्यपर्वशतैः समा "

( २ ) अर्को हस्त• ॥

धृति, वृद्धि, ध्रुव, सुकर्मा, साध्य, शुक्र, हर्षण, वरीयान्, सिद्ध, ब्रह्मा और ऐन्द्र इन सोलह योगोंमें, शकुनि, चतुष्पाद, नाग, किंस्तुघ्न और विष्टि भिन्न करणमें दीक्षाकर्म प्रशस्त है ॥ २१ ॥ २२ ॥

कृष्णाष्टम्यां चतुर्दश्यां पूर्वपञ्चादिने तथा ॥ २३ ॥ (*)

अर्थ--कृष्णपक्षकी अष्टमी और चतुर्दशी तिथि और प्रतिपदासे पञ्चमीतक तिथियोंमें दीक्षाकर्म प्रशस्त है ॥ २३ ॥

रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा।
अत्र लग्नादिकं किञ्चिदविचार्यं कथञ्चन ॥ २४ ॥

इति ज्ञानमालायाम्।

अर्थ- ज्ञानमालामें लिखा है कि-संक्रान्तिमें और सूर्यग्रहणमें दीक्षाग्रहण करनेसे लग्नादि कुछ भी नहीं देखा जाता है ॥ २४ ॥

यदैवेच्छा तदा दीक्षा गुरोराज्ञानुरूपतः।
न तिथिर्न व्रतं होमो न स्नानं न जपक्रिया।
दीक्षायां कारणं किन्तु स्वेच्छावाप्ते तु सद्गुरौ ॥ २५ ॥

इति तत्त्वसागरे।

अर्थ--तत्त्वसागरमें लिखा है कि, जिस समय इच्छा होय तभी गुरुकी आज्ञासे क्रमानुसार मन्त्रको ग्रहण करसक्ता है. तिथि, व्रत, होम, स्नान और जपादि कुछभी दीक्षामें कारण नहीं है, केवल सद्गुरुकी इच्छानुसारही मन्त्रग्रहण करना चाहिये ॥ २५ ॥

शिष्यत्रिजन्मदिवसे संप्राप्ते विषुवायने।
सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः (+)
मन्त्रदीक्षां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् ॥ २६ ॥

इति ज्योतिःसारसंग्रहे।

अर्थ--ज्योतिःसारसंग्रहमें लिखाहै कि-शिष्यके त्रिजन्मदिनमें, विषुवसंक्रान्तिमें और अयनसंक्रान्तिमें, महातीर्थमें, सूर्य और चन्द्र ग्रहणमें, श्रावणी पूर्णिमामें और चैत्रशुक्ल चतुर्दशी तिथिमें मन्त्रग्रहण करनेसे मास, नक्षत्र, तिथ्यादिका विचार नहीं होता है ॥ २६ ॥

इति स्मार्त्तमतदीक्षाकालः।

---

(*) कृष्णपक्षे इति शेषः।
(+) तन्तुपर्व्व परमेश्वरोपरि तद्दानतिथिः श्रावणी पूर्णिमा। दामनपर्व्व मदनभञ्जन तिथिश्चैत्रशुक्लचतुर्दशीति स्मार्त्तेनाभिहितम्।

अथ तन्त्रसारोक्तदीक्षाकालकथनम् ।

तत्र मासनिर्णयः ।

मन्त्रारम्भस्तु चैत्रे स्यात्समस्तपुरुषार्थदः ।
वैशाखे रत्नलाभः स्याज्ज्येष्ठे तु मरणं भवेत् ॥ २७ ॥
आषाढे (अ) बन्धुनाशः स्यात्पूर्णायुः श्रावणे भवेत् ।
प्रजानाशो भवेद्भाद्रे आश्विने रत्नसञ्चयः ॥ २८ ॥
कार्त्तिके मन्त्रसिद्धिः स्यान्मार्गशीर्षे तथा भवेत् ।
पौषे तु शत्रुपीडा स्यान्माघे मेधाविवर्द्धनम् ।
फाल्गुने सर्वकामाः स्युर्मलमासं विवर्जयेत् ॥ २९ ॥ (आ)

इति गौतमीये ।

अर्थ-अब तन्त्रशास्त्रकी रीतिसे दीक्षा ग्रहण करनेके महीनोंको कहते हैं-गौतमी तन्त्रमें लिखा है कि, चैत्रके महीनेमें गोपालका मन्त्र ग्रहण करनेमें समस्त पुरुषार्थ सिद्ध होते हैं वैशाखमें मन्त्र ग्रहण करनेसे रत्न प्राप्त होते हैं इसी प्रकार ज्येष्ठमें मन्त्रग्रहण करनेसे मृत्यु होता है, आषाढमें बान्धवोंका नाश होता है. आश्विनमें रत्नोंका सञ्चय होता है, कार्तिकमें और अग्रहायणमें मन्त्रसिद्धि होजाती है, पौषमें शत्रुद्वारा पीडा होती है, माघमें मेधाकी वृद्धि होती है और फाल्गुनके महीनेमें मन्त्रके ग्रहणकरनेसे सम्पूर्ण कामना पूर्ण होती है, किन्तु मलमासके महीनेमें मन्त्रको ग्रहण न करना चाहिये ॥ २७ ॥ २८ ॥ २९ ॥

अपिच ।

मन्त्राद्यारम्भणं मेषे धनधान्यप्रदं भवेत् ।
वृषे मरणमाप्नोति मिथुनेऽपत्यनाशनम् ॥ ३० ॥
कर्कटे सर्वसिद्धिः स्यात्सिंहे मेधाविनाशनम् ।
कन्या लक्ष्मीप्रदा नित्यं तुलायां सर्वसिद्धयः ॥ ३१ ॥

---

(अ) 'ज्येष्ठे मृत्युप्रदा चैव आषाढे सुखसम्पदः' इति योगिनीहृदयात् आषाढे दीक्षाग्रहणे निन्दा श्रीविद्यायां नास्ति ।

(आ) चैत्रे तु गोपालविषय गौतमीयोक्तत्वात् यथा " मधुमासे भवेद्दीक्षा दुःखाय मरणाय च " इति वचनान्नान्यत्र । अत्र च मासः सौर एव 'सौरे मासि शुभा दीक्षा न चान्द्रे न तारके' इति गौतमीयात् ।

वृश्चिके स्वर्णलाभः स्याद्धनुर्मानविनाशकः ।
मकरः पुण्यदः प्रोक्तः कुम्भो धनसमृद्धिदः ।
मीनो दुःखप्रदो नित्यमेवं मासविधिक्रमः ॥ ३२ ॥

इति वैशम्पायनसंहितायाम् ।

अथ–वशम्पायन संहितामें लिखा है कि–वैशाखमें मंत्रग्रहण करनेसे धनधान्यका लाभ होता है, इसी प्रकार ज्येष्ठमें मृत्यु होती है. आषाढमें सन्ततिका नाश होता है. श्रावणमें सब सिद्धियाँ प्राप्त होती हैं, भाद्रपदमें मेधाका नाश होता है, श्रावणमें दीर्घायु होती है, भादोंमें सन्ततिका नाश होता है आश्विनमें लक्ष्मीकी वृद्धि होती है, कार्तिकमें सब सिद्धियाँ प्राप्त होतीं, अगहनमें स्वर्णलाभ होताहै, पौषमें मानहानि होती है, माघमें पुण्यका सञ्चय होता है, फाल्गुनमें धन मिलता है और चैत्रके महीनेमें मन्त्रग्रहण करनेसे सर्वदा दुःख भागी होता है ॥ ३० ॥ ३१ ॥ ३२ ॥

अथ दीक्षायास्तिथिनिर्णयः ।

प्रतिपदि कृता दीक्षा ज्ञानकाशकरी मता ।
प्रतिपत्तिर्द्वितीयायां (१) तृतीयायां शुचिर्भवेत् ॥ ३३ ॥
चतुर्थ्यां वित्तनाशः स्यात्पञ्चम्यां बुद्धिवर्धनम् ।
षष्ठ्यां ज्ञानक्षयं सौख्यं लभते सप्तमीदिने ॥ ३४ ॥
अष्टम्यां बुद्धिनाशः स्यान्नवम्यां वपुषः क्षयः ।
दशम्यां राजसौभाग्यमेकादश्यां शुचिर्भवेत् ॥ ३५ ॥
द्वादश्यां सर्वसिद्धिः स्यात्त्रयोदश्यां दरिद्रता ।
तिर्यग्योनिश्चतुर्दश्यां शनिर्मासावसानके ॥ ३६ ॥
पक्षान्ते धर्म्मवृद्धिः स्यादस्वाध्यायं (२) विवर्जयेत् ॥ ३७ ॥

अर्थ–अब दीक्षाका तिथिनिर्णय कहते हैं–प्रतिपत्ति तिथिमें मन्त्रग्रहण करनेसे ज्ञानका नाश होता है, इसी प्रकार द्वितीयामें प्रतिपत्ति (लाभ) होताहै, तृतीयामें पवित्रता प्राप्त होती है, चतुर्थीमें अर्थका नाश होताहै, पञ्चमीमें बुद्धि बढती है षष्ठीमें ज्ञानका नाश होताहै सप्तमीमें सुख प्राप्त होताहै, अष्टमीमें बुद्धिका नाश होता

(१) द्वितीयायां मेऽज्ञानम् इत्यपि पाठः ।
(२) "सन्ध्यागर्जितनिर्घोष भकम्पोल्कानिपातने । एतानन्यांश्च दिवसान्स्मृत्युक्तान्परिवर्जयेत् " ॥

है नवमीमें देहका नाश होताहै, दशमीमें राजसौभाग्य प्राप्ति होती है, एकादशीमें पवित्रता प्राप्त होती है, द्वादशीमें सर्व सिद्धियां करतलगत होजाती हैं, त्रयोदशीमें दरिद्रता प्राप्त होती है, चतुर्दशीमें तिर्यग्योनि प्राप्त होती है, अमावास्यामें नाश होजाताहै और पूर्णिमातिथिमें मन्त्रग्रहणकरनेसे धर्मकी वृद्धि होती है, किन्तु उक्त तिथि यदि मासविशेषमें वा अन्य किसी कारणसे अस्वाध्यायमें निन्दित होय तो उसमें मन्त्रग्रहण न करना चाहिये ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥

अपिच ।

द्वितीया पञ्चमी चैव षष्ठी चैव विशेषतः । (क)
द्वादश्यामपि कर्त्तव्यं त्रयोदश्यामथापि वा ॥ ३८ ॥

इति रामार्चनचन्द्रिकायाम् ।

अर्थ-द्वितीया, पञ्चमी, षष्ठी, द्वादशी और त्रयोदशी तिथिमें मन्त्रग्रहण करे किन्तु इनके मध्यमें विशेष यहीहै कि, षष्ठी और त्रयोदशी तिथि विष्णुके मन्त्रग्रहण करनेमेंही प्रशस्त है, इस प्रकार रामार्चनचन्द्रिकामें लिखाहै ॥ ३८ ॥

अन्यच ।

पञ्चमी सप्तमी षष्ठी द्वितीया पूर्णिमा सिता ।
त्रयोदशी च दशमी प्रशस्ता सर्वकामदा ॥ ३९ ॥

इति सनत्कुमारतन्त्रे ।

अर्थ-सनत्कुमारतन्त्रमें लिखाहै कि, पञ्चमी, सप्तमी, षष्ठी, द्वितीया, पूर्णिमा और शुक्लपक्षकी त्रयोदशी और दशमी तिथिमें मन्त्रग्रहण करना चाहिये उक्त समस्त तिथियोंमें मन्त्रग्रहण करनेसे सम्पूर्ण कामनायें पूर्ण होती हैं ॥ ३९ ॥

अपरञ्च ।

चतुर्थी पञ्चमी चैव चतुर्दश्यष्टमी तथा ।
तिथयः शुभदाः प्रोक्ता दीक्षाग्रहणकर्मणि ॥ ४० ॥ (ख)

इति तन्त्रान्तरे ।

अर्थ-तन्त्रान्तरमें लिखा है कि-चतुर्थी, पञ्चमी, चतुर्दशी और अष्टमी तिथि दीक्षाविषयमें शुभदायक होती हैं, किन्तु इनके मध्यमें विशेष यही है कि, चतुर्दशी

(क) इति यत् षष्ठीत्रयोदशीविधानं तद्विष्णुविषयं रामार्चनचन्द्रिकाधृतत्वात् । इति कृष्णानन्दः ।

(ख) अत्र वचने चतुर्दश्यष्टमीति शक्तिविषयं चतुर्थी तु गणेशविषयं तत्तत्कल्पोक्तत्वात् । इति तन्त्रसारे कृष्णानन्दः ॥

और अष्टमी तिथि शक्तिदीक्षामें प्रशस्त हैं और चतुर्थी तिथिमें गणेशका मन्त्र-ग्रहण करनेसे शुभफल प्राप्त होता है ॥ ४० ॥

प्रकारान्तरञ्च ।

शुक्लपक्षस्य दशमी सप्तमी च विशेषतः ।
निन्द्या सदैव षष्ठी स्यादिति शैवागमान्तरे ॥ ४१ ॥

अर्थ-शुक्लपक्षकी दशमी, सप्तमी और षष्ठी तिथि दीक्षाविषयमें निन्दित हैं इस प्रकार शैवागममें लिखा है अत एव इन सब तिथियोंमें शिवमन्त्र ग्रहण न करना चाहिये ॥ ४१ ॥

अथ दीक्षायाः वारनिर्णयः ।

रविवारे भवेद्वित्तं सोमे शान्तिर्भवेत्किल ।
आयुरङ्गारके हन्ति तत्र दीक्षां विवर्जयेत् ॥ ४२ ॥
बुधे सौन्दर्यमाप्नोति ज्ञानं स्याच्च बृहस्पतौ ।
शुक्रे सौभाग्यमाप्नोति यशोहानिः शनैश्चरे ॥ ४३ ॥

इति तन्त्रान्तरे ।

अर्थ-दीक्षाके वार कहते हैं-तन्त्रान्तरमें लिखा है कि, रविवारमें मन्त्रग्रहण करनेसे धन प्राप्त होता है. इसी प्रकार सोमवारमें शान्ति प्राप्त होती है, मङ्गलवारमें आयुका नाश होता है, बुधवारमें सौन्दर्य प्राप्त होता है, बृहस्पतिवारमें ज्ञान प्राप्त होता है, शुक्रवारमें सौभाग्यकी प्राप्ति होती है और शनिवारमें मन्त्रग्रहण करनेसे यशकी हानि होती है ॥ ४२ ॥ ४३ ॥

अथ दीक्षायाः नक्षत्रनिर्णयः ।

अश्विन्यां सुखमाप्नोति भरण्यां मरणं ध्रुवम् ॥
कृत्तिकायां भवेद्दुःखी रोहिण्यां वाक्पतिर्भवेत् ॥ ४४ ॥
मृगशीर्षे सुखावाप्तिरार्द्रायां बन्धुनाशनम् ।
पुनर्वसौ धनाढ्यः स्यात्पुष्ये शत्रुविनाशनम् ॥ ४५ ॥
आश्लेषायां भवेन्मृत्युर्मघायां दुःखमोचनम् ।
सौन्दर्यं पूर्वफाल्गुन्यां प्राप्नोति च न संशयः ॥ ४६ ॥
ज्ञानं चोत्तरफाल्गुन्यां हस्तायाञ्च धनी भवेत् ।
चित्रायां ज्ञानसिद्धिः स्यात्स्वात्यां शत्रुविनाशनम् ॥४७॥

विशाखायां सुखं चानुराधायां बन्धुवर्द्धनम् ।
ज्येष्ठायां सुतहानिः स्यान्मूलायां कीर्तिवर्द्धनम् ॥ ४८ ॥
पूर्वाषाढोत्तराषाढे भवेतां कीर्तिदायिके ।
श्रवणायां भवेद्दुःखी धनिष्ठायां दरिद्रता ॥ ४९ ॥
बुद्धिः शतभिषायां स्यात्पूर्वभाद्रे सुखी भवेत् ।
सौख्यञ्चोत्तरभाद्रे च रेवत्यां कीर्तिवर्धनम् ॥ ५० ॥

अर्थ-अब दक्षिाके नक्षत्र कहते हैं-अश्विनी नक्षत्रमें मन्त्रग्रहण करनेसे सुख प्राप्त होता है इसी प्रकार भरणीमें मृत्यु होती है, कृत्तिकामें दुःख होता है, रोहिणीमें बृहस्पतिके तुल्य होता है, मृगशिरमें सुख होता है, आर्द्रामें बुद्धिका नाश होता है, पुनर्वसुमें धन प्राप्त होता है, पुष्यमें शत्रुओंका नाश होता है, आश्लेषामें मृत्यु होती है मघामें दुःखकी शान्ति होती है, पूर्वाफाल्गुनीमें सौंदर्यलाभ होता है, उत्तराफाल्गुनीमें ज्ञानका उदय होता है, हस्तमें धनप्राप्ति होती है चित्रामें ज्ञानकी सिद्धि होती है, स्वातिमें शत्रुओंका नाश होताहै विशाखामें सुख प्राप्त होता है, अनुराधामें बान्धवोंकी वृद्धि होती है. ज्येष्ठामें सुतकी हानि होती है, मूल, पूर्वाषाढा और उत्तराषाढामें कीर्तिकी वृद्धि होती है, श्रवणमें दुःख होता है, धनिष्ठामें दरिद्रता प्राप्त होती है, शतभिषामें बुद्धिकी वृद्धि होती है पूर्वाभाद्रपदामें और उत्तराभाद्रपदामें सुख प्राप्त होता है और रेवती नक्षत्रमें मन्त्र ग्रहण करनेसे प्रतिष्ठा बढती है ॥ ४४-५० ॥

अपिच ।

आर्द्रायां कृत्तिकायाञ्च मन्त्रारम्भः प्रशस्यते ।
यदीशस्य कृशानोर्वा मन्त्रारम्भो यथाक्रमात् ॥ ५१ ॥

अर्थ-आर्द्रा और कृत्तिका नक्षत्रमें मन्त्रको ग्रहण न करै, किन्तु आर्द्रा नक्षत्रमें शिवमन्त्र और कृत्तिकानक्षत्रमें अग्निके मन्त्रको ग्रहण करना चाहिये ॥५१॥

अपरञ्च ।

अश्विनीभरणीस्वातिविशाखाहस्तभेषु च ।
ज्येष्ठोत्तरात्रये चैवं कुर्यान्मन्त्राभिषेचनम् ॥ ५२ ॥ (×)

अर्थ-अश्विनी,भरणी, स्वाति, विशाखा, हस्त, ज्येष्ठा, उत्तराफाल्गुनी, उत्तरा-

(+) इति ज्येष्ठा भरण्योर्विधान तदगस्त्यसंहितोक्तत्वात् ।

पौषे च नवमा शुक्ला माघे शुक्ला चतुर्थिका ।
फाल्गुने नवमा (क) शुक्ला चैत्रे कामचतुर्दशी ॥६२॥ (ख)

इति रत्नावल्याम् ।

अर्थ-अब निषिद्ध मासादिमें तिथिविशेषकी प्रशस्तता कहते हैं-भादोंकी षष्ठी तिथि, आश्विनके कृष्णपक्षकी चतुर्दशी, कार्तिकके शुक्लपक्षकी नवमी, अग्रहायणके शुक्लपक्षकी तृतीया, पौषकी शुक्लनवमी, माघके शुक्लपक्षकी चतुर्थी, फाल्गुनके शुक्लपक्षकी नवमी और चैत्रमासके शुक्लपक्षकी ( काम ) चतुर्दशी तिथि, मन्त्रग्रहणमें प्रशस्त हैं अर्थात् उक्त सब तिथियोंमें मासादिका विचार नहीं होता है ॥ ६१॥ ६२ ॥

अन्यच्च ।

वैशाखे चाक्षया चैव ज्येष्ठे दशहरा तिथिः ।
आषाढे नवमी शुक्ला श्रावणे कृष्णपञ्चमी ॥ ६३ ॥
एतानि देवपर्वाणि तीर्थकोटिफलं लभेत् ।
अत्र दीक्षा प्रकर्त्तव्या न मासञ्च परीक्षयेत् ॥ ६४ ॥
न वारं न च नक्षत्र न तिथ्यादिकदूषणम् ।
न योगकरणं चैव शंकरेणेति भाषितम् ॥ ६५ ॥

अर्थ-अब देवपर्वको वर्णन करते हैं-वैशाखके शुक्लपक्षकी तृतीया, ( अक्षय्य तृतीया ) ज्येष्ठका दशहरा, ( शुक्लपक्षकी दशमी ) आषाढके शुक्लपक्षकी नवमी और श्रावणके कृष्णपक्षकी पञ्चमी इन ( नागपञ्चमी ) सब तिथियोंको देवपर्व कहते हैं,उक्त सब तिथियोंमें पुण्यकर्म करनेसे कोटितीर्थोंका फल प्राप्त होताहै और यह सब तिथियें दीक्षाविषयमें अतिप्रशस्त हैं इनमें दीक्षाग्रहण करनेसे मासपरीक्षा नहीं होतीहै और वार, नक्षत्र, तिथि, योग और करण इनके विचार करनेकाभी प्रयोजन नहीं होताहै इस प्रकार देवादिदेव महादेवजीने कहा है॥६३-६५॥

चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता ।
ज्येष्ठे चतुर्दशी कृष्णा आषाढे नागपञ्चमी ॥ ६६ ॥
श्रावणेकादशी भाद्रे रोहिणी सहिताष्टमी ।
आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा ॥ ६७ ॥

( क ) फाल्गुने दशमी शुक्लेति पाठः ।
( ख ) चैत्रे कामत्रयोदशी इति क्वचित्पाठः ।

कार्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता ॥
षष्ठी चतुर्दशी पौषे माघेऽप्येकादशी सिता ॥
फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः ॥ ६८ ॥

अर्थ-ग्रन्थान्तरमें लिखा है कि, चैत्रके शुक्लपक्षकी त्रयोदशी ( कामत्रयोदशी ) वैशाखके शुक्लपक्षकी एकादशी,ज्येष्ठके कृष्णपक्षकी चतुर्दशी, आषाढकी नागपञ्चमी ( कृष्णपक्षकी पञ्चमी ) श्रावणकी एकादशी, भादोंकी रोहिणी युक्त अष्टमी ( जन्माष्टमी ) आश्विनकी महाष्टमी ( शुक्लपक्षकी अष्टमी ) कार्त्तिकके शुक्लपक्षकी नवमी ( जगद्धात्री नवमी ) अग्रहायणके शुक्लपक्षकी षष्ठी, पौषकी चतुर्दशी, माघके शुक्लपक्षकी एकादशी और फाल्गुनके शुक्लपक्षकी षष्ठी यह सब तिथियें दीक्षाविषयमें प्रशस्त हैं और इनमें दीक्षा ग्रहण करनेसे मास तिथि और नक्षत्रादिके विचार करनेकी आवश्यकता नहीं होती है ॥ ६६॥६८ ॥

अपरश्च ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
रविसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि ।
मन्वन्तरासु सर्वासु महापूजादिने तथा ॥ ६९ ॥

इति योगिनीतन्त्रे ।

अर्थ-योगिनीतन्त्रमें महादेवजीने पार्वतीके प्रति कहा है कि, हे सुरेश्वरि ! दक्षिणायन और उत्तरायणकी संक्रान्तिमें, विषुव और जलविषुव संक्रान्तिमें, चन्द्र और सूर्यके ग्रहणमें, अन्य साधारण संक्रान्तिमें, युगाद्यामें, सब मन्वन्तरोंमें और महाष्टमी और महानवमीमें दीक्षाग्रहण अतिपुनीत होता है, इसमें भी मास, तिथि, नक्षत्रादिका विचार नहीं होता है, परन्तु साधारण संक्रान्तिसे अयन और विषुव संक्रान्तिमें मन्त्रग्रहण अधिक पुनीत होता है ॥ ६९ ॥

अपिच ।

निन्दितेष्वपि कालेषु दीक्षोक्ता ग्रहणे तु वा ।
सूर्यग्रहणकालस्य समानो नास्तिभूतले ॥ ७० ॥
विशेषतो महादेवि दीक्षाग्रहणकर्मणि ।
तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत् ॥ ७१ ॥

अर्थ-शिवजीने कहाहै कि, हे देवि ! निन्दित कालमें भी ग्रहणके समान

पाढा और उत्तराभाद्रपदा नक्षत्रमें मन्त्रग्रहण करना चाहिये, इस वचनमें जो ज्येष्ठा और भरणी नक्षत्रमें मन्त्रग्रहण करनेका विधान है उसको अगस्त्यसंहितोक्त जानना चाहिये ॥ ५२ ॥

अथ दीक्षायाः योगकथनम् ।

शुभः सिद्धस्तथायुष्मान्ध्रुवयोगस्ततः परम् ।
प्रीतिः सौभाग्ययोगश्च वृद्धियोगस्ततः परम् ।
हर्षणश्च तथा योगाः सर्वतन्त्रे शुभावहाः ॥ ५३ ॥

इति विश्वसारतंत्रे ।

अर्थ-विश्वसारतन्त्रमें लिखा है कि-शुभ, सिद्ध, आयुष्मान्, ध्रुव, प्रीति सौभाग्य वृद्धि और हर्षण इन सब योगोंमें दीक्षा प्रशस्त है ॥ ५३ ॥

अथ दीक्षायाः करणनिर्णयः ।

ववबालवकौलवतैतिल (१) स्तदनन्तरम् ।
करणानि शुभान्येव सर्वतन्त्रेषु भाषितम् ॥ ५४ ॥

अर्थ-अब दीक्षाविषयमें प्रशस्तकरण कहते हैं-वव, बालव, कौलव, तैतिल यह सब दीक्षाविषयमें प्रशस्त हैं किसी २ आचार्यके मतसे गर और वणिज करण भी दीक्षामें प्रशस्त हैं ॥ ५४ ॥

अथ दीक्षायाः लग्ननिर्णयः ।

वृषे सिंहे च कन्यायां धनुर्मीनाख्यलग्नके ।
चन्द्रतारानुकूल्ये च कुर्याद्दीक्षाप्रवर्त्तनम् ॥ ५५ ॥

अर्थ-अब दीक्षामें प्रशस्तलग्नोंको कहते हैं-वृष, सिंह, कन्या, धनु और मीनलग्नमें चन्द्रमा और ताराके शुद्ध होनेसे दीक्षाग्रहण करनी चाहिये ॥ ५५ ॥

अपिच ।

स्थिरलग्नं विष्णुमन्त्रे शिवमन्त्रे चरं शुभम् ।
द्विस्वभावगतं लग्नं शक्तिमन्त्रे प्रशस्यते ॥ ५६ ॥

अर्थ-अब लग्नसम्बन्धमें विशेष कहते हैं वृष, सिंह वृश्चिक और कुम्भ लग्नमें विष्णुके मन्त्रको ग्रहण करै. मेष, कर्क तुला और मकर इन सब लग्नोंमें

(१) गरवणजास्तदनन्तरम् । इति क्वचित्पुस्तके पाठः ।

कार्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता ॥
षष्ठी चतुर्दशी पौषे माघेऽप्येकादशी सिता ॥
फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः ॥ ६८ ॥

अर्थ–ग्रन्यान्तरमें लिखा है कि, चैत्रके शुक्लपक्षकी त्रयोदशी ( कामत्रयोदशी ) वैशाखके शुक्लपक्षकी एकादशी,ज्येष्ठके कृष्णपक्षकी चतुर्दशी, आषाढकी नागपञ्चमी ( कृष्णपक्षकी पञ्चमी ) श्रावणकी एकादशी, भादोंकी रोहिणी युक्त अष्टमी ( जन्माष्टमी ) आश्विनकी महाष्टमी ( शुक्लपक्षकी अष्टमी ) कार्त्तिकके शुक्लपक्षकी नवमी ( जगद्धात्री नवमी ) अग्रहायणके शुक्लपक्षकी षष्ठी, पौषकी चतुर्दशी, माघके शुक्लपक्षकी एकादशी और फाल्गुनके शुक्लपक्षकी षष्ठी यह सब तिथियें दीक्षाविषयमें प्रशस्त हैं और इनमें दीक्षा ग्रहण करनेसे मास तिथि और नक्षत्रादिके विचार करनेकी आवश्यकता नहीं होती है ॥ ६६॥६८ ॥

अपरञ्च ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
रविसंक्रांतिदिवसे युगाद्यायां सुरेश्वरि ।
मन्वन्तरासु सर्वासु महापूजादिने तथा ॥ ६९ ॥

इति योगिनीतन्त्रे।

अर्थ–योगिनीतन्त्रमें महादेवजीने पार्वतीके प्रति कहा है कि, हे सुरेश्वरि ! दक्षिणायन और उत्तरायणकी संक्रान्तिमें, विषुव और जलविषुव संक्रान्तिमें, चन्द्र और सूर्यके ग्रहणमें, अन्य साधारण संक्रान्तिमें, युगाद्यामें, सब मन्वन्तरोंमें और महाष्टमी और महानवमीमें दीक्षाग्रहण अतिपुनीत होता है, इसमें भी मास, तिथि, नक्षत्रादिका विचार नहीं होता है, परन्तु साधारण संक्रान्तिसे अयन और विषुव संक्रान्तिमें मन्त्रग्रहण अधिक पुनीत होता है ॥ ६९ ॥

अपिच ।

निन्दितेष्वपि कालेषु दीक्षोक्ता ग्रहणे तु वा ।
सूर्यग्रहणकालस्य समानो नास्तिभूतले ॥ ७० ॥
विशेषतो महादेवि दीक्षाग्रहणकर्मणि ।
तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत् ॥ ७१ ॥

अर्थ–शिवजीने कहाहै कि, हे देवि ! निन्दित कालमें भी ग्रहणके समान

पौषे च नवमी शुक्ला माघे शुक्ला चतुर्थिका ।
फाल्गुने नवमी (क) शुक्ला चैत्रे कामचतुर्दशी ॥६२॥ (ख)

इति रत्नावल्याम् ।

अर्थ–अब निषिद्ध मासादिमें तिथिविशेषकी प्रशस्तता कहते हैं–भाद्रोंकी षष्ठी तिथि, आश्विनके कृष्णपक्षकी चतुर्दशी, कार्तिकके शुक्लपक्षकी नवमी, अग्रहायणके शुक्लपक्षकी तृतीया, पौषकी शुक्लनवमी, माघके शुक्लपक्षकी चतुर्थी, फाल्गुनके शुक्लपक्षकी नवमी और चैत्रमासके शुक्लपक्षकी ( काम ) चतुर्दशी तिथि, मन्त्रग्रहणमें प्रशस्त हैं अर्थात् उक्त सब तिथियोंमें मासादिका विचार नहीं होता है ॥ ६१॥ ६२ ॥

अन्यच्च ।

वैशाखे चाक्षया चैव ज्येष्ठे दशहरा तिथिः ।
आषाढे नवमी शुक्ला श्रावणे कृष्णपञ्चमी ॥ ६३ ॥
एतानि देवपर्वाणि तीर्थकोटिफलं लभेत् ।
अत्र दीक्षा प्रकर्त्तव्या न मासञ्च परीक्षयेत् ॥ ६४ ॥
न वारं न च नक्षत्र न तिथ्यादिकदूषणम् ।
न योगकरणं चैव शंकरेणेति भाषितम् ॥ ६५ ॥

अर्थ–अब देवपर्वको वर्णन करते हैं–वैशाखके शुक्लपक्षकी तृतीया, ( अक्षय्य तृतीया ) ज्येष्ठका दशहरा, ( शुक्लपक्षकी दशमी ) आषाढके शुक्लपक्षकी नवमी और श्रावणके कृष्णपक्षकी पञ्चमी इन ( नागपञ्चमी ) सब तिथियोंको देवपर्व कहते हैं,उक्त सब तिथियोंमें पुण्यकर्म करनेसे कोटितीर्थोंका फल प्राप्त होताहै और यह सब तिथियें दीक्षाविषयमें अतिप्रशस्त हैं इनमें दीक्षाग्रहण करनेसे मासपरीक्षा नहीं होतीहै और वार, नक्षत्र, तिथि, योग और करण इनके विचार करनेकाभी प्रयोजन नहीं होताहै इस प्रकार देवादिदेव महादेवजीने कहा है॥६३-६५॥

चैत्रे त्रयोदशी शुक्ला वैशाखैकादशी सिता ।
ज्येष्ठे चतुर्दशी कृष्णा आषाढे नागपञ्चमी ॥ ६६ ॥
श्रावणैकादशी भाद्रे रोहिणी सहिताष्टमी ।
आश्विने च महापुण्या महाष्टम्यप्यभीष्टदा ॥ ६७ ॥

---

( क ) फाल्गुने दशमी शुक्लेति पाठः ।
( ख ) चैत्रे कामत्रयोदशी इति क्वचित्पाठः ।

कार्तिके नवमी शुक्ला मार्गशीर्षे तथा सिता ॥
षष्ठी चतुर्दशी पौषे माघेऽप्येकादशी सिता ॥
फाल्गुने च सिता षष्ठी चेति कालविनिर्णयः ॥ ६८ ॥

अर्थ-ग्रन्यान्तरमें लिखा है कि, चैत्रके शुक्लपक्षकी त्रयोदशी ( कामत्रयोदशी ) वैशाखके शुक्लपक्षकी एकादशी, ज्येष्ठके कृष्णपक्षकी चतुर्दशी, आषाढकी नागपञ्चमी ( कृष्णपक्षकी पञ्चमी ) श्रावणकी एकादशी, भादोंकी रोहिणी युक्त अष्टमी ( जन्माष्टमी ) आश्विनकी महाष्टमी ( शुक्लपक्षकी अष्टमी ) कार्त्तिकके शुक्लपक्षकी नवमी ( जगद्धात्री नवमी ) अग्रहायणके शुक्लपक्षकी षष्ठी, पौषकी चतुर्दशी, माघके शुक्लपक्षकी एकादशी और फाल्गुनके शुक्लपक्षकी षष्ठी यह सब तिथियें दीक्षाविषयमें प्रशस्त हैं और इनमें दीक्षा ग्रहण करनेसे मास तिथि और नक्षत्रादिके विचार करनेकी आवश्यकता नहीं होती है ॥६६॥६८॥

अपरञ्च ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्ययोः ।
रविसंक्रान्तिदिवसे युगाद्यायां सुरेश्वरि ।
मन्वन्तरासु सर्वासु महापूजादिने तथा ॥ ६९ ॥

इति योगिनीतन्त्रे ।

अर्थ-योगिनीतन्त्रमें महादेवजीने पार्वतीके प्रति कहा है कि, हे सुरेश्वरि ! दाक्षिणायन और उत्तरायणकी संक्रान्तिमें, विषुव और जलविषुव संक्रान्तिमें, चन्द्र और सूर्यके ग्रहणमें, अन्य साधारण संक्रान्तिमें, युगाद्यामें, सब मन्वन्तरोंमें और महाष्टमी और महानवमीमें दीक्षाग्रहण अतिपुनीत होता है, इसमें भी मास, तिथि, नक्षत्रादिका विचार नहीं होता है, परन्तु साधारण संक्रान्तिसे अयन और विषुव संक्रान्तिमें मन्त्रग्रहण अधिक पुनीत होता है ॥ ६९ ॥

अपिच ।

निन्दितेष्वपि कालेषु दीक्षोक्ता ग्रहणे तु वा ।
सूर्यग्रहणकालस्य समानो नास्तिभूतले ॥ ७० ॥
विशेषतो महादेवि दीक्षाग्रहणकर्मणि ।
तत्र यद्यत्कृतं सर्वमनन्तफलदं भवेत् ॥ ७१ ॥

अर्थ-शिवजीने कहाहै कि, हे देवि ! निन्दित कालमें भी ग्रहणके समान

दूसरा काल मन्त्रग्रहणमें नहीं है, विशेषकरके दीक्षामें सूर्यग्रहणके समान पुण्यकाल पृथिवीमें और नहीं है, सूर्यग्रहणके समय जिस किसी पुण्यकर्मका अनुष्ठान किया जाय तो उसमें अनन्तफल प्राप्त होता है ॥ ७० ॥ ७१ ॥

अन्यच्च ।

रविसंक्रमणे चैव सूर्यस्य ग्रहणे तथा ।
तत्र लग्नादिकं किञ्चिन्न विचार्यं कथञ्चन ॥ ७२ ॥

अर्थ-संक्रान्तिके पुण्यकालसमयमें और सूर्यग्रहणके कालमें दीक्षाग्रहण करनेसे लग्नादि कुछभी विचार नहीं होता है ॥ ७२ ॥

अपरञ्च ।

रविसंक्रमणे चैव नान्यदन्वेषितं भवेत् ।
न वारतिथिमासादिशोधनं सूर्यपर्वणि ॥ ७३ ॥

अर्थ-संक्रान्तिके पुण्यकालमें और ग्रहणसमयके कालमें मन्त्र ग्रहण करनेसे मास तिथि और वारादिके शुभाशुभ देखनेकी आवश्यकता नहीं है ॥ ७३ ॥

प्रकारान्तरञ्च ।

देव्याबोधं समारभ्य यावत्स्यान्नवमीतिथिः ।
कृते तासु शुभा दीक्षा सर्वाभीष्टफलप्रदा ॥ ७४ ॥

इति विष्णुयामले ।

अर्थ-विष्णुयामलमें लिखा है कि, भगवती दुर्गा देवीके बोधनसे महानवमीतक जो पन्द्रह तिथि हैं उनमें दीक्षाग्रहण करनेसे सम्पूर्ण अभीष्टसिद्धि होती है॥७४॥

तत्रापि शावरीपूजा यत्र देवि गृहे गृहे ।
तत्र दीक्षा प्रकर्तव्या मासर्क्षादीन्न शोधयेत् ॥ ७५ ॥

इति विष्णुयामले ।

अर्थ-विष्णुयामलमें लिखा है कि, जिस समयमें घर २ के प्रती भगवती शारदा देवीका पूजन होवै उस समयमें भी दीक्षाग्रहणकरनेसे मास, नक्षत्र और तिथ्यादिका विचार नहीं होता है ॥ ७५ ॥

अन्यच्च ।

शुक्लपक्षे विशेषेण तत्रापि तिथिरष्टमी ।
बोधने चैव दुर्गायाः कालाकालं न शोधयेत् ॥ ७६ ॥

इति रुद्रयामले ।

अर्थ-रुद्रयामलमें लिखाहै कि, भगवती दुर्गादेवीके बोधनमें विशेष करके

महाष्टमी तिथिमें मन्त्रग्रहण करनेसे कालाकालका विचार नहीं होता है॥ ७६ ॥

अपरञ्च ।

**न कुर्याच्छाक्तिकीं दीक्षामुपरक्ते विभावसौ ।**
**न कुर्याद्वैष्णवीन्तान्तु यदि चन्द्रमसो ग्रहः ॥७७॥ (क)**

इति रुद्रयामले ।

अर्थ-रुद्रयामलमें लिखा है कि, सूर्यग्रहणमें शाक्तिमन्त्र न ग्रहण करे और चन्द्रग्रहणमें विष्णुमन्त्रका निषेध है [ किन्तु गौतमीयतन्त्रमें लिखा है कि, चन्द्रग्रहणमें और सूर्यग्रहणमें विष्णुका मन्त्र ग्रहणकरना चाहिये और योगिनी हृदयमें भी सूर्यग्रहणके समय शक्तिमन्त्रके ग्रहणकरनेको कहा है इस विरोधकी मीमांसा तन्त्रसारमें कृष्णानन्दभट्टाचार्यने इस प्रकार करी है कि, सूर्यग्रहणमें श्रीविद्याका मन्त्र ग्रहण करै और चन्द्रग्रहणमें गोपालमन्त्रका ग्रहणकरना चाहिये. इसके अतिरिक्तमें निषेधका सार्थक होता है ॥ ७७ ॥

सूर्यग्रहणे विशेषमाह ।

**श्रीपराकालीबीजानि लोपादुर्गश्च यो मनुः ।**
**सूर्यस्योपग्रहे लब्धो नृणां शीघ्रफलप्रदः ॥ ७८ ॥**

अर्थ-मन्त्रग्रहणके विषयमें सूर्यग्रहणमें, विशेष कहते हैं, यथा-श्रीबीज, मायाबीज, कालीबीज लोपादुर्गाका मन्त्र यदि भाग्यवशसे किसी मनुष्यको सूर्यग्रहणकालमें प्राप्त होय तब वह मन्त्र शीघ्र फलदान करता है ॥ ७८ ॥

अथ तारादिविद्यायां विशेषः ।

**दीक्षाकालं प्रवक्ष्यामि नीलतन्त्रानुसारतः ।**
**कृष्णपक्षस्य चाष्टम्यां शुभे लग्ने शुभे क्षणे ॥ ७९ ॥**
**पूर्वाभाद्रपदायुक्ते मित्रतारादिसंयुते ।**
**अथवा ह्यनुराधायां रेवत्यां वा प्रशस्यते ॥ ८० ॥**

अर्थ-अब तारादिविद्याकी दीक्षाविषयमें नीलतन्त्रोक्त काल कहते हैं, कृष्णपक्षकी अष्टमी तिथिमें शुभलग्नमें 'शुभ घडीमें' पूर्वाभाद्रपदा, अनुराधा, अथवा रेवती नक्षत्रमें मित्रादि ताराहोनेसे दीक्षा प्रशस्त है ॥ ७९ ॥ ८० ॥

---

( क ) एतच्च गोपालश्रीविद्येतरविषयम् । अन्येषु पुण्ययोगेषु ग्रहणे चन्द्रसूर्ययोरिति गौतमीयात् । सूर्यग्रहणकाले तु नान्यदन्वेषितं भवेदिति योगिनीहृदयाच्च । इति तन्त्रसारे कृष्णानन्देनोक्तम् ॥

अन्यच्च ।

जानीयाच्छोभनं कालं मन्त्रस्य ग्रहणं प्रति ।
इषे चैव विशेषेण कार्तिके च विशेषतः ॥ ८१ ॥

अर्थ-वचनान्तरमें कहा है कि, मन्त्रके ग्रहणविषयमें आश्विन और कार्तिक मासही अधिक प्रशस्त है ॥ ८१ ॥

सूर्यग्रहणसमकालकथनम् ।

अमावस्या सोमवारे भौमवारे चतुर्दशी ।
सप्तमी रविवारे च सूर्यग्रहशतैः समा ॥ ८२ ॥

अर्थ-अब सूर्यग्रहणके समानकाल कहते हैं-सोमवारमें अमावस तिथि मङ्गलवारमें चतुर्दशी और रविवारमें सप्तमी तिथि होनेसे शत ( १०० ) सूर्य ग्रहणके समान काल होता है ॥ ८२ ॥

अशोकाष्टम्यां विशेषमाह ।

अशोकाख्याष्टमी यत्र रामाख्या नवमी तथा ।
लग्ने वाप्यथवाऽलग्ने यत्र तत्र तिथावपि ॥ ८३ ॥
गुरोराज्ञानुसारेण दीक्षा कार्या विशेषतः ॥ ८४ ॥

इति विष्णुयामले ।

अर्थ-विष्णुयामलमें लिखा है कि,अशोकाष्टमी तिथि वा श्रीरामनवमी तिथिमें लग्नके शुद्ध होनेसे वा अशुद्ध होनेसे भी दीक्षाग्रहण की जाती है और विशेषकरके गुरुकी आज्ञानुसार हरेक तिथिमें दीक्षा हो सक्ती है ॥ ८३ ॥ ८४ ॥

अन्यच्च ।

ग्रहणे च महातीर्थे नास्ति कालस्य निर्णयः ॥ ८५ ॥

इति योगिनीतन्त्रे ।

अर्थ-योगिनीतन्त्रमें लिखा है कि, महातीर्थमें और ग्रहणसमयमें कालाकालका विचार नहीं होता है ॥ ८५ ॥

अपिच ।

पुण्यतीर्थे कुरुक्षेत्रे देवीपीठचतुष्टये ।
प्रयागे श्रीगिरौ काश्यां कालाकालं न शोधयेत् ॥८६॥

इति यामले ।

अर्थ-यामलमें लिखाहै कि, पुण्यतीर्थमें, कुरुक्षेत्रमें, महादेवीकी पीठचतुष्-

यमें, प्रयागमें, श्रीशैलपर्वतमें और काशीधाममें कालाकालका विचार नहीं होता है ॥ ८६ ॥

युगाद्यायां विशेषः ।

**युगाद्यायां जन्मदिने विवाहदिवसे तथा ।**
**विषुवायनयोर्द्वन्द्वे नैव किञ्चिद्विचारयेत् ॥ ८७ ॥**

इति समयातन्त्रे ।

अर्थ-समयातन्त्रमें लिखाहै कि, चारों युगोंके आदिकी तिथिमें, जन्मदिनमें, विवाहके दिनमें, विषुवसंक्रान्ति और अयनसंक्रान्तिमें, मन्त्रादिके ग्रहणमें कुछ-भी विचार नहीं होताहै ॥ ८७ ॥

अकालादौ दीक्षानिषेधः ।

**अस्तंगते दैत्यगुरौ शिशौ च वृद्धेऽथ बाले च गुरौ तथैव ।**
**भवेन्न दीक्षाग्रहणं शुभाय जीवातिचारे मलमाससंज्ञे ॥८८॥**

इत्यागमार्णवे ।

अर्थ--आगमार्णवमें लिखाहै कि, शुक्र,बुध वा बृहस्पतिके अस्त, वृद्ध अथवा बाल्य होनेसे और बृहस्पतिके वक्री होनेसे वा मलमासमें दीक्षाग्रहण न करना चाहिये ॥ ८८ ॥

अन्यच्च ।

**जीवे हरौ दैत्यगुरौ ससूर्ये केतूद्गमे भूचलनादिदोषे ।**
**अकालवृष्टौ जलदे सगर्ज्जे दीक्षा भवेन्नैव च साधकानाम्॥८९(१)**

इत्यागमार्णवे ।

अर्थ-आगमार्णवमें लिखा है कि, बृहस्पति सिंहराशिमें स्थित होनेसे अथवा शुक्र वा सूर्यके साथ स्थित होनेसे, धूमकेतुके उदयमें, भूमिकम्पादिमें, अकालवृष्टिमें और सन्ध्यागर्जनमें वा अकालमें मेघके गर्जनेसे साधकको दीक्षाग्रहण न करनी चाहिये ॥ ८९ ॥

अकाले प्रतिप्रसवमाह ।

**शुक्राऽस्ते यदि वा वृद्धौ गुर्वादित्यो भवेद्यदि ।**
**मेषवृश्चिकसिंहेषु यदा दोषो न विद्यते ॥ ९० ॥**

इति वाराहीतन्त्रे ।

अर्थ-पूर्वोक्त अकालके प्रतिप्रसव कहते हैं-वाराहीतन्त्रमें लिखा है कि, मेष,

(१) एतत्सर्वं कालाशुद्धिप्रदर्शकम् । अशुद्धकालमुक्त्वा । "परोक्षारामयज्ञोश्च पुरश्चरणदीक्षणे" इत्यनेन ज्योतिषे दीक्षानिषेधदर्शनात् ।

वृप वा सिंहराशिमें शुक्र अस्त वा वृद्ध होनेसे और उक्त सब राशियोंमें गुर्वादित्ययोगके लिये अकाल नहीं होता है ॥ ९० ॥

अन्यच्च ।

**श्रीगुरोर्दर्शनाद्देवि ग्रहणे चन्द्रसूर्ययोः ।**
**न चात्र नियमं कुर्याद्दीक्षायाः कालदेशयोः ॥९१॥(२)**

इति यामले ।

अर्थ–यामलमें लिखा है कि, गुरुके दर्शन पानेसे, चन्द्र और सूर्यके ग्रहणमें दीक्षाका काल और देशका नियम प्रतिपालन न करनेसे भी दोष नहीं होताहै॥९१॥

अथ महाविद्याविषये विशेषफलकथनम् ।

**महाविद्यासु सर्वासु कालादिविचारो नास्ति**
**तदुक्तं दश महाविद्यामधिकृत्य ।**
**कालादिशोधनं नास्ति न चामित्रादिदूषणम् ॥ ९२ ॥**

इति मुण्डमालातन्त्रे ।

अर्थ–मुण्डमालातन्त्रमें लिखा है कि, दशमहाविद्याके मन्त्रग्रहणकरनेमें कालाकालको न देखना चाहिये और अमित्रादिकाभी विचार न करना चाहिये ॥ ९२ ॥

अथ दशमहाविद्याकथनम् ।

**काली तारा महाविद्या षोडशी भुवनेश्वरी ।**
**भैरवी छिन्नमस्ता च विद्या धूमावती तथा ॥ ९३ ॥**
**बगला सिद्धिविद्या च मातङ्गी कमलात्मिका ।**
**एता दशमहाविद्याः सिद्धविद्याः प्रकीर्त्तिताः ॥ ९४ ॥**

इति निरुत्तरतन्त्रे चामुण्डातन्त्रे च ।

अर्थ–अब दशमहाविद्याको वर्णन करते हैं, निरुत्तर और चामुण्डातन्त्रमें लिखा है कि, काली, तारा, षोडशी, भुवनेश्वरी, भैरवी, छिन्नमस्ता, धूमावती, बगलामुखी, मातङ्गी और कमला, इनकोही दशमहाविद्या और सिद्धविद्या कहते हैं किन्तु इनके मध्यमें विशेष यही है कि, काली और ताराको महामहाविद्या और सिद्धविद्या कहते हैं और बगलाको सिद्धसिद्धविद्या और महाविद्यानामसे कहते हैं ॥ ९३ ॥ ९४ ॥

( २ ) निषिद्धदेशमाह–"गयायां भास्करक्षेत्रे विरजे चन्द्रपर्वते । चट्टले च मतङ्गे च तथा कन्याश्रमेषु च । न गृह्णीयात्ततो दीक्षां तीर्थेष्वेतेषु पार्वति " इति ।

नात्र कालविशुद्धिः स्यात्समयासमयादिकम् ।
न वारतिथिनक्षत्रं न योगः करणं तथा
सिद्धविद्यामहाविद्यायुगसेवाः प्रकीर्तिताः ॥ ९५ ॥

इति निरुत्तरतन्त्रे ।

अर्थ-निरुत्तरतन्त्रमें लिखा है कि, अठारह महाविद्या सिद्धविद्या इत्यादिके मन्त्र ग्रहण करनेमें कालाकाल न देखना चाहिये, वार, तिथि और नक्षत्र देखनेकीभी आवश्यकता नहीं और योगकरणादिके शुद्धाशुद्ध विचार करनेका प्रयोजन नहीं है। किन्तु सिद्धविद्या और महाविद्याकी युगसेवा करनी चाहिये॥९५॥

अष्टादशमहाविद्यामाह ।

काली तारा तथा छिन्ना मातङ्गी भुवनेश्वरी ।
अन्नपूर्णा तथा नित्या दुर्गा महिषमर्दिनी ॥ ९६ ॥
त्वरिता त्रिपुरा त्रिपुटा भैरवी बगला तथा ।
धूमावती तथा ज्ञेया कमला च सरस्वती ॥ ९७ ॥ ॥
जयदुर्गा तथा भद्रा तथा त्रिपुरसुन्दरी ।
अष्टादश महाविद्यास्तन्त्रादौ कथिताः प्रिये ॥ ९८ ॥

इति निरुत्तरतन्त्रे ।

अर्थ-अब अष्टादश महाविद्याको कीर्त्तन करते हैं-निरुत्तरतन्त्रमें सदाशिव महादेवजीने स्वयं पार्वतीके प्रति कहा है कि, हे प्रिये ! काली, तारा, छिन्नमता, मातङ्गी, भुवनेश्वरी, अन्नपूर्णा, नित्या, दुर्गा, महिषमर्दिनी, त्वरिता, त्रिपुरभैरवी, त्रिपुटाभैरवी, बगला, धूमावती, कमला, सरस्वती, जयदुर्गा और त्रिपुरसुन्दरी ( षोडशी ) इन अठारह महाविद्याओंको मैंने तुम्हारे निकट अन्यान्य तन्त्रमें भी कही हैं ॥ ९६ ॥ ९७ ॥ ९८ ॥

गुरुकृपाऽयं दीक्षाकालः ।

शिष्यानाहूय गुरुणा कृपया दीयते यदि ।
तदा लग्नादिकं किञ्चिन्न विचार्यं कथञ्चन ॥ ९९ ॥

इति विष्णुयामले ।

अर्थ-विष्णुयामलमें लिखा है कि, जिस किसी कालमें दीक्षाग्रहण करनेको कहा है गुरुदेव कृपाकर जिस समयमें शिष्यको मन्त्रग्रहण करावे उसी कालमें

वह मन्त्र शुभदायक होता है इसमें लग्नादि किसीका भी विचार न करना, चाहिये ॥ ९९ ॥

आपिच ।

**सर्वे वारा ग्रहाः सर्वे नक्षत्राणि च राशयः ।**
**यस्मिन्नहनि सन्तुष्टो गुरुः सर्वे शुभावहाः ॥ १०० ॥**

इति समयातन्त्रे ।

अर्थ-समयातन्त्रमें लिखा है कि, गुरुदेव प्रसन्न होकर जिस दिन शिष्यको मन्त्र प्रदान करै उसी समयमें वार, तिथि, ग्रह और नक्षत्रादि सभी शुभफल प्रदान करते हैं ॥ १०० ॥ इति तन्त्रशास्त्रोक्तदीक्षाकालकथनम् ।

अथ पुरश्चरणकालः ।

**चैत्रे मास्यथवा कुर्याच्छुभर्क्षे गुरुशासनात् ।**
**द्वादश्यां शुक्लपक्षे च माधवे मासि तत्तिथौ ।**
**आरभेदमलायां वै पुरश्चर्यां सुसिद्धये ॥ १ ॥**

इति गौतमीये ।

अर्थ-अथ पुरश्चरण करनेका समय कहते हैं-गौतमीयतन्त्रमें लिखा है कि चैत्रके महीनेमें, शुभ नक्षत्रमें, गुरुकी आज्ञानुसार अथवा वैशाखके महीनेकी शुक्लाद्वादशी तिथिमें गुरुकी आज्ञानुसार पुरश्चरणका आरम्भ करना चाहिये॥१॥

**चन्द्रतारानुकूल्ये च शुक्लपक्षे शुभेऽहनि ।**
**आरभेन्मकरादौ च सुप्ते विष्णौ जपेन्नच ॥ २ ॥**

इति वैशम्पायनसंहितायाम् ।

अर्थ-वैशंपायनसंहितामें लिखा है कि, चन्द्रमा और तारके शुद्ध होनेसे शुक्लपक्षमें शुभदिनमें माघसे आदि लेकर छः महीनोंमें पुरश्चरणका आरम्भ करना चाहिये, किन्तु श्रीहरिके शयनकालमें पुश्चरणका आरम्भ न करे ॥ २ ॥

**चन्द्रतारानुकूल्ये च शुक्लपक्षे शुभेऽहनि ।**
**आरभेयुः पुरश्चर्यां हरौ सुप्ते न चाचरेत् ॥ ३ ॥**

इति वाराहीतन्त्रे ।

अर्थ-वाराहीतन्त्रमें लिखा है कि, चन्द्रमा और तारक शुभ होनेसे शुक्लपक्षमें, शुभ दिनमें, श्रीहरिके जाग्रत्कालमें पुरश्चरणका आरम्भ करना चाहिये॥३॥

अन्यच्च ।

कार्तिकाश्विनवैशाखमाघे वा मार्गशीर्षके ।
फाल्गुने श्रावणे दीक्षा पुरश्चर्या प्रशस्यते ॥ ४ ॥

इति वाराहीतन्त्रे ।

अर्थ-वाराहीतन्त्रमें लिखा है कि, कार्तिक, आश्विन, वैशाख, माघ, अग्रहायण, फाल्गुन और श्रावणमासमें दीक्षा और पुरश्चरण प्रशस्त है ॥ ४ ॥

अपरञ्च ।

रवौ गुरौ सिते सोमे कर्त्तव्यं बुधवासरे ।
चन्द्रताराऽनुकूल्ये च पुरश्चरणमाचरेत् ॥ ५ ॥

इति वाराहीतन्त्रे ।

अर्थ-रवि, बृहस्पति, शुक्र, सोम और बुधवारमें चन्द्रमा और ताराके शुद्ध होनेसे पुरश्चरण करना चाहिये । वाराहीतन्त्रके वचनान्तरमें इस प्रकार कहा है ॥ ५ ॥

प्रकारान्तरञ्च ।

रोहिणी श्रवणार्द्रा च धनिष्ठा चोत्तरात्रयम् ।
पुष्या शतभिषा शस्ता पुरश्चरणकर्मसु ॥ ६ ॥

इति नारदतन्त्रे ।

अर्थ-नारदतन्त्रमें लिखा है कि-रोहिणी, श्रवण, आर्द्रा, धनिष्ठा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, पुष्य और शतभिषा नक्षत्रमें पुरश्चरणका आरम्भ करना चाहिये ॥ ६ ॥

पूर्णिमा पञ्चमी चैव द्वितीया सप्तमी तथा ।
त्रयोदशी च दशमी प्रशस्ता सर्वकर्मणि ॥ ७ ॥

इति नारदतन्त्रे ।

अर्थ-नारदतन्त्रके वचनान्तरमें कहा है कि-पूर्णिमा,पञ्चमी, द्वितीया, सप्तमी त्रयोदशी और दशमी तिथिमें सभी कर्म प्रशस्त हैं ॥ ७ ॥

सत्तीर्थेऽर्कविधुग्रासे तन्तुदामनपर्वणोः ।
पुरश्चर्यां प्रकुर्वाणो मासर्क्षादीन्न शोधयेत् ॥ ८ ॥

अर्थ-सुन्दर तीर्थमें, सूर्य और चन्द्रमाके ग्रहणमें, श्रावणी, पूर्णिमामें और चैत्रके शुक्लपक्षकी चतुर्दशीमें पुरश्चरणके आरम्भ करनेमें मास और नक्षत्रादिका विचार नहीं होता है ॥ ८ ॥

अन्यच्च ।

**ग्रहणे च महातीर्थे न कालमवधारयेत् ॥ ९ ॥**

अर्थ-वचनान्तरमें कहा है कि, ग्रहणमें और महातीर्थमें ( गङ्गादिमें ) पुरश्चरणका आरम्भ करनेसे कालाकालका कुछ प्रयोजन नहीं होता है ॥ ९ ॥

इति पुरश्चरणकालः ।

अथ शान्तिपुष्टि कथनम् ।

**शुभग्रहार्कवारेषु मृदुक्षिप्रध्रुवेषु च**
**शुभराशीन्दुलग्नेषु शुभं शान्तिकपौष्टिकम् ॥ ११० ॥ (क)**

अर्थ-अब शान्ति और पुष्टिकर्मको कहते हैं-शुभग्रहोंके वारमें, रविवारमें, चित्रा, अनुराधा, मृगशिर, रेवती, पुष्य, अश्विनी, हस्त, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा और रोहिणीनक्षत्रमें, शुभराशिमें, गोचरमें चन्द्रमा शुद्ध होनेसे और शुभलग्नमें शान्तिक और पौष्टिक कर्म करना चाहिये ॥ ११० ॥

अथ हलप्रवाहः ।

**पूर्वाग्नियाम्यफणिचित्रशिवान्यभेषु**
**रिक्ताष्टमीविगतचन्द्रतिथिं विहाय ।**
**द्व्यङ्गालिगोसमुदये विकुजार्किवारे**
**शान्तेन्दुयोगकरणेषु हलप्रवाहः ॥ ११ ॥ (ख)**

अर्थ-अब हलारम्भ करनेका मुहूर्त्त कहते हैं-पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, कृत्तिका, भरणी, आश्लेषा चित्रा और आर्द्रा, इन सब नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें, रिक्ता, अष्टमी और अमावास्या भिन्नतिथिमें, मङ्गल और शनिवारको छोडकर अन्यवारोंमें, शुभचन्द्रमा, शुभयोग और शुभकरणमें, द्यात्मक, वृश्चिक और वृष लग्नमें हल प्रवाह करना अर्थात् हल चलाना चाहिये ॥ ११ ॥

---

( क ) शांतिकर्मणः पुष्टिकर्मणश्च विधिमाह-शुभेति । शुभग्रहवारे रविवारे च मृदुलघुध्रुवगणेषु शुभराशौ गोचरशुद्धे चन्द्रे शुभलग्ने शान्तिकं पौष्टिकञ्च कुर्यादिति ।

( ख ) हलप्रवाहमाह-पूर्वेति । पूर्वात्रितयं कृत्तिकाभरण्याश्लेषाचित्रार्द्राभ्यारिक्तेषु नक्षत्रेषु रिक्ताष्टमीं विगतचन्द्रममावस्याञ्च त्यक्त्वा अन्यतिथौ द्व्यात्मकलग्ने वृश्चिकवृषलग्ने च मङ्गलशनिवारं त्यक्त्वा हलप्रवाहः कार्यः । तिथिदोषमाह-कृषिपराशरः " सस्यक्षयं प्रातिपादि द्वादश्यां वधबन्धनम् । बहुविघ्नकरी षष्ठी कुहूः कृषकनाशिनी । हन्त्यष्टमी बलीवर्दान्नवमी सस्यघातिनी । चतुर्थी कीटजननी पातिं हन्ति चतुर्दशी " अथ शुभतिथिमाह-"दशम्येकादशी चैव द्वितीया पञ्चमी तथा । त्रयोदशी तृतीया च सप्तमी च शुभावहा" अथ वारानाह-"भौमार्कदिवसे चैव तथैव शनिवासरे । कृषिकर्मसमारम्भे

अपिच ।

**संक्रान्त्यां पौर्णमास्याञ्च ह्यमावास्यां तथैव च ।**
**हलस्य वाहनात्पापं गवामयुतहत्यया ॥ १२ ॥**

इति स्मृतिः ।

अर्थ-स्मृतिमें लिखा है कि, संक्रान्ति, पूर्णिमा और अमावस्या तिथिमें हलको न चलाना चाहिये जो मनुष्य उक्तसमयमें, हल चलाते हैं उनको अयुत ( दश हजार ) गोहत्याका पाप होता है ॥ १२ ॥

अन्यच्च ।

**रिक्ताष्टमीविष्टिषु नष्टचन्द्रे क्षीणेन्दुभौमार्कजवासरेषु ।**
**निरंशके वा निशि सन्ध्ययोर्वा कृत्वा कृषिः पूर्वफलं निहन्ति॥ १३॥**

अर्थ-रिक्ता, अष्टमी, विष्टि ( भद्रा ) और अमावस्या तिथिमें, क्षीण चन्द्रमामें, मङ्गल और शनिवारमें, संक्रांतिमें रात्रिमें वा सन्ध्यासमयमें कृषिकार्य करनेसे पूर्वके अनुसार फल होता है ( अर्थात् ) अयुत गोहत्याका पातक लगता है ॥ १३ ॥

अपरञ्च ।

**वामे कृष्णं बलीवर्द्दं दक्षिणे लोहितं न्यसेत् ।**

---

-राजोपद्रवमादिशेत्" अत्र च नक्षत्रमाह पराशरः-"अनिलोत्तररोहिण्या मृगमूलपुनर्वसौ । पुष्यश्रवणहस्तासु कुर्याद्धलप्रसारणम् " अथ लग्नमाह-"वृषे मीने च कन्यायां युग्मे धनुषि वृश्चिके । एतेषु शुभलग्नेषु कुर्याद्धलप्रसारणम् " तथा पाराशरः-"मेषलग्ने पशुं हन्यात्कर्कटे जलज भयम् । सिंहे सर्पभय चैव कुम्भे चौरभय भवेत् । मकरे सस्यनाशः स्यात्तुलायां प्राणसंशयः । तस्माल्लग्न प्रयत्नेन कृष्यारम्भे विचारयेत्" तथा-"स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा यथाविधि । पृथिवीं ग्रहसंयुक्तां पृथुं चैव प्रजापतिम्। सम्पूज्याग्निं द्विज देव कुर्याद्धलप्रसारणम् । छिन्नरेखा न कर्त्तव्या यथा प्राह पराशरः । एका तिस्रस्तथा पञ्च हलरेखाः प्रकीर्तिताः । एका जयकरी रेखा तृतीया चार्थसिद्धिदा । पञ्चसंख्या तु या रेखा बहुसस्यप्रदायिनी । हलप्रसारणं येन न कृत मृगकुम्भयोः । गृहस्थस्य कृशा तस्य फलदा कृषिकर्मणि" इति । मेषे पशुविनाशः स्यात्कर्कटे जलज भयम् । सिंहे सस्यविनाशः स्यात्तुलायां प्रचराक्षतिः । मृगे शत्रुभयं विद्यात् कुम्भे चौर समादिशेत् । सम्पूज्य कनकैः फालं लेपयेन्मधुसर्पिषा । एकातिस्रस्तथा पञ्च हलरेखाः प्रकीर्तिताः । उत्तराभिमुखो भूत्वा कृषकः कृषिमारभेत् । एका रेखा शुभा प्रोक्ता त्रिरेखा वृद्धिदायिनी । पञ्चरेखा बहुफला करोति धरणीषु च । अत ऊर्ध्व प्रगुणो महापातकमाप्नुयात् । गोषु पीडा भवेन्नित्य दरिद्रनाशश्च भय तथा " इति सारसंग्रहे हृदयानन्दः ।

**उत्तराभिमुखो भूत्वा कर्षकः कृषिमारभेत् ॥ १४ ॥**

इति भीमपराक्रमे ।

अर्थ–भीमपराक्रममें लिखा है कि, वामदिशामें कृष्णवर्णका बैल और दक्षिण-दिशामें लोहित वर्णके बैलको खडाकरके हल जोतनेवाला मनुष्य उत्तरको मुख करके कृषिकार्यका आरम्भ करै ॥ १४ ॥

प्रकारान्तरञ्च ।

**हले तु योजिते यत्र क्षेत्रे ग्रासं करोति गौः ।**
**तत्र स्याद्द्विगुणं शस्यमवश्यं गर्गभाषितम् ॥ १५ ॥**

इति भीमपराक्रमे ।

अर्थ–भीमपराक्रममें लिखा है, कि, हलमें जुतकर बैल यदि खेतमें घासको खाय तो उस खेतमें दूना नाज उत्पन्न होता है, गर्गमुनिने इस प्रकार कहा है ॥ १५ ॥

अथ बीजवपनम् ।

**हलप्रवाहवद्बीजवपनस्य विधिः स्मृतः ।**
**चित्रायां च शुभे केन्द्रे स्थिरस्वमनुजोदये ॥ १६ ॥ (१)**

अर्थ–अब बीज बोनेकी विधि कहते हैं, हलमें कहे हुए नक्षत्रोंमें और चित्रा-नक्षत्रमें, लग्नके केन्द्रस्थानमें शुभग्रह होनेसे वृष, सिंह, वृश्चिक और कुम्भ-लग्नमें, अपनी जन्मलग्नमें और मिथुन, तुला, कन्या और धन लग्नके पूर्वार्द्धमें बीज बोना चाहिये ॥ १६ ॥

---

(१) बीजवपनमाह–हलेति । हलप्रसारणे यो विधिः बीजवपनेऽपि सः किन्तु हलप्रवाहः चित्रायां निषिद्धः बीजवपनं कार्यमित्यर्थः । केन्द्रस्थे शुभग्रहे स्थिरलग्ने वृषसिंहवृश्चिककुम्भलग्ने मिथुनतुलाधटकन्याधनुःपूर्वार्द्धेषु कर्त्तव्यमित्यर्थः । विशेषमाह पराशरः "वैशाखे वपनं श्रेष्ठं ज्येष्ठे च रोहिणी रवौ । आषाढे चाधमं प्राहुः श्रावणे चाधमाधमम् । रोपणं सर्वसस्यानां श्रेष्ठं हि मिथुने रवौ । श्रावणे मध्यमं प्रोक्तं भाद्रे मध्यममध्यमम् ॥ वपनविधिमाह पराशरः–"क्षेत्रमध्ये स्वयं गत्वा द्विराचम्य समाहितः । सकल्पं कारयेद्धीमान्स्वस्तिवाचनपूर्वकम् । गणनाथादिकं देवं पूजयित्वा विधानतः । प्राङ्मुखः कलशं धृत्वा पठेन्मन्त्रं विधानतः । ओं वसुन्धरेऽसिते देवि बहुसस्यफलप्रदे । देवराशि नमस्तुभ्यं सुभगे सस्यकारिणि । रोपणे सर्वसस्यानां काले मेघः प्रवर्षतु । सुस्या भवन्तु कृषका धनधान्यसमृद्धिभिः । तथा "हिमवारिणि सिक्तस्य बीजस्य तन्मनाः शुचिः । इन्द्रं चित्ते समाधाय स्वयं मुष्टित्रयं वपेत् । कृत्वा धान्यस्य पुण्याहं कृषका हृष्टमानसाः । दिव्यगन्धैश्च पुष्पैश्च तदलंकृतवान्गृही । कृत्वा तु वपनं क्षेत्रे कृषाणां घृतपायसैः । भोजयित्वा तु ते तुष्टा निर्विघ्ना जायते कृषिः" इति ।

अपिच ।

सुखदा प्रतिपच्चैव द्वितीया कार्यसाधिनी ।
आरोग्यदा तृतीया च चतुर्थी कीटकृत्सदा ॥ १७ ॥
पञ्चमी श्रीप्रदा नूनं षष्ठी च कलहप्रिया ।
सप्तमी स्थानदा भोग्या वृषं हन्ति तथाष्टमी ॥ १८ ॥
नवमी सस्यनाशाय दशमी भूतिदा सदा ।
एकादशी तथा कुर्याद्धनं धान्यं मनोरथम् ॥ १९ ॥
द्वादशी प्राणसन्देहा सर्वसिद्धा त्रयोदशी ।
चतुर्दशी पतिं हन्ति पञ्चदश्येव निष्फला ॥ २० ॥

इति कृत्यचिंतामणी ।

अर्थ-कृत्यचिन्तामणीमें लिखा है कि, प्रतिपदामें कृषिकर्म आरम्भ करनेसे सुख प्राप्त होता है, इसी प्रकार द्वितीयामें कार्यका साधन होता है, तृतीयामें आरोग्यताप्राप्ति होती है, चतुर्थीमें कीटद्वारा नाजका नाश होता है, पञ्चमीमें श्री ( लक्ष्मी ) प्राप्ति होती है, षष्ठीमें कलह होता है, सप्तमीमें स्थान और भोगकी वृद्धि होती है, अष्टमीमें बैलकी मृत्यु होती है, नवमीमें नाजका नाश होता है, दशमीमें ऐश्वर्यलाभ होता है, एकादशीमें धन धान्य और मनोरथसिद्धि होती है, द्वादशीमें प्राणका संशय होता है, त्रयोदशीमें सर्वप्रकारकी सिद्धियां प्राप्त होती हैं, चतुर्दशीमें खेतके मालिककी मृत्यु होती है और पूर्णिमा और अमावस्यामें खेती आरम्भ करनेसे निष्फल होजाती है ॥ १७-२० ॥

अन्यच ।

अमावास्याष्टमीषष्ठीरिक्ताश्च परिवर्जयेत् ।
सौरिभौमदिने चैव कृष्यारम्भे धनक्षयः ॥ २१ ॥

इति बलभद्रः ।

अर्थ-बलभद्रने कहा है कि, अमावस्या, अष्टमी, षष्ठी और रिक्ता तिथियें, शनि और मङ्गलवारमें कृषिकर्म आरम्भ करनेसे धनका नाश होता है ॥ २१ ॥

अपरञ्च ।

प्राजेशविष्णुतिष्येषु पितृहस्तोत्तरासु च ।
अश्विनीवातपौष्णेषु मूलादित्येन्दुभे तथा ॥ २२ ॥
वारे भानुजशुक्रे च जीवे शीतकरे तथा ।

लग्ने स्त्रीगोमीनयुग्मे कृष्यारम्भं शुभं विदुः ॥ २३ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ—ज्योतिषतत्वमें लिखा है कि—रोहिणी, श्रवण, पुष्य, मघा, हस्त, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, अश्विनी, स्वाति, रेवती, मूल, पुनर्वसु और मृगशिर नक्षत्रमें शनि, शुक्र, बृहस्पति और सोमवारमें, कन्या, वृष, मीन और मिथुन लग्नमें कृषिकर्म आरम्भ करनेसे शुभ होता है ॥ २२ ॥ २३ ॥

प्रकारान्तरञ्च।

पूर्वाभाद्रपदा मूलं रोहिण्युत्तरफाल्गुनी ।
विशाखा शतभिषा वाथ धान्यानां रोपणे वराः ॥ २४ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ—ज्योतिःसारसंग्रहमें लिखा है कि—पूर्वाभाद्रपदा, मूल, रोहिणी, उत्तराफाल्गुनी, विशाखा और शतभिषा नक्षत्र बीज बोनेमें प्रशस्त हैं ॥ २४ ॥

अन्यच्च।

हस्ताश्वितिष्यचन्द्रेषु ब्रह्मेन्द्रविष्णु वारुणे ।
वायव्येन्द्राग्निभे चैव रोहिण्यामुत्तरासु च ॥ २५ ॥
वारे जीवे च शुक्रे च सोमे दिनकरे तथा ।
युग्मे युवतिगोमीने शस्तं स्याद्बीजवापनम् ॥ २६ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ—ज्योतिषतत्वमें लिखा है कि—हस्त, अश्विनी, पुष्य, मृगशिर, ज्येष्ठा श्रवण, शतभिषा, स्वाति, विशाखा, रोहिणी और तीनों उत्तरा नक्षत्रमें बृहस्पति, बुध, शुक्र, सोम और रविवारमें, मिथुन, कन्या, वृष और मीन लग्नमें बीज बोना चाहिये ॥ २५ ॥ २६ ॥

अपिच ।

प्राजेशश्रवणोत्तरादितिमघामार्तण्डतिष्याश्विनी
पौष्णानुष्णमरीचयः शतभिषास्वातिर्विशाखा तथा ।
जीवार्केन्दुसितेन्दुनन्दनदिने वारे स्थिरस्योदये
शस्यानां वपने भवन्ति लवने शस्ते तिथौ रोपणे ॥ २७ ॥

इति राजमार्त्तण्डे ।

अर्थ—राजमार्त्तण्डमें लिखा है कि, रोहिणी, श्रवण, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, पुनर्वसु, मघा, हस्त, अश्विनी, रेवती, मृगशिर, शतभिषा, स्वाती

और विशाखा इन नक्षत्रोंमें, बृहस्पति, रवि, सोम, शुक्र और, बुधवारमें और स्थिरलग्नमें नाज बोना और काटना चाहिये ॥ २७ ॥

अपरञ्च ।

गुरुसोमसूर्यशुक्राः क्षेम्याः सम्पत्कराः शुभाः ।
बुधार्किभूमिपुत्राश्च न भवन्ति फलप्रदाः ॥ २८ ॥

इति भैरवाचार्यः ।

अर्थ-भैरवाचार्यने कहा है कि, बृहस्पति, सोम, रवि और शुक्रवारमें कृषि आरम्भ करनेसे मङ्गल और सम्पत्की वृद्धि होती है और बुध, शनि और मङ्गलवारमें कृष्यारम्भ करनेसे निष्फल होती है ॥ २८ ॥

प्रकारान्तरञ्च ।

हन्ति मेषः पशून्सर्वान्स्वभावेनाथ वृश्चिकः ।
कर्कटेन भवेत्सौख्यं तुलायां न प्ररोहति ॥ २९ ॥
केशरी सस्यघाती स्यात्पार्थिवोपद्रवं धनुः ।
मकरे चैव कुम्भे च भयमेव विनिर्दिशेत् ॥ ३० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, मेषलग्नमें खेती आरम्भ करनेसे पशुओंका नाश होता है, इसी प्रकार वृश्चिक लग्नमें कर्ताको बीछू काटता है कर्क लग्नमें सुखहीन होता है, तुला लग्नमें खेतीके आरम्भ करनेका निषेध है, सिंह लग्नमें नाजका नाश होता है, धनमें पार्थिवका उपद्रव होताहै मकर और कुम्भ लग्नमें खेतीके आरम्भ करनेसे भय होता है ॥ २९ ॥ ३० ॥

अन्यच्च ।

गोस्त्रीमन्मथमीनेषु लग्नं सम्पद्यते महत् ।
प्रशस्ते चन्द्रतारे च शुचिः शुक्ले न वाससा ॥ ३१ ॥(क)

अर्थ-वृष, कन्या, मिथुन और मीन लग्नमें बीज बोनेसे बहुत नाज उत्पन्न

---

(क) स्नात्वा गन्धैश्च पुष्पैश्च पूजयित्वा विधानतः । पृथ्वीञ्च ग्रहसयुक्तां पूजयित्वा प्रजापतिम् । अग्निं प्रदक्षिणीकृत्य दीयते भूरिदक्षिणा । कृष्णो वृषो नियोक्तव्यो नवनीतैर्घृतेन वा । मुखपार्श्वे तयोर्लिप्यात्फालाग्रं कनकैः स्पृशेत् । उत्तराभिमुखो भूत्वा क्षीरेणार्घ्यं प्रदापयेत् । ततः शुभकरः श्रीमान्कृषिकर्म समाचरेत् । वर्जयेद्भग्नशृङ्गञ्च खुरभग्नञ्च वर्जयेत् । विफलं छिन्नलाङ्गूलं कपिलं वृषभं तथा । हलप्रवाहनं कार्यं नीरोगिभिः कृषिकर्मकैः । हलादिभिर्दृढैः क्षेमं कुदृढैर्न शुभं वदेत् । वृषभा यदि मुह्यन्ति तस्य विघ्नप्रदा भवेत् " कृषिरिति शेषः । "तस्मात्सर्वप्रयत्नेन निर्विघ्नं कारयेत्तदा । एका जय-

होता है, अतएव चन्द्रमा और ताराके शुद्ध होनेसे उक्त लग्नोंमें पवित्र होकर सफेद वस्त्रको पहिरकर खेतीका आरम्भ करना चाहिये ॥ ३१ ॥

अथ धान्यच्छेदनम् ।

याम्याजपादहिधनानलतोयशक्र
चित्रोत्तरोडुषु कुजार्कजवारवर्जम् ।
शस्तेन्दुयोगकरणेषु तिथावरिक्ते
धान्यच्छिदिः स्थिरनरस्वमृगोदयेषु ॥ ३२ ॥ (१)

अर्थ–अब खेतमेंसे नाज काटनेका मुहूर्त कहते हैं । भरणी, पूर्वाभाद्रपदा, आश्लेषा, धनिष्ठा, कृत्तिका, पूर्वाषाढा, ज्येष्ठा, चित्रा और तीनों उत्तरा इन सब नक्षत्रोंमें मङ्गल और शनिवारको छोडकर अन्यवारोंमें, योग और करण शुभ होनेसे, रिक्ताभिन्न तिथियोंमें स्थिर, द्विपद, अपने जन्मकी लग्न और मकर लग्नमें खेतका नाज काटना चाहिये ॥ ३२ ॥

अपिच ।

रोहिणीरेवतीमूलस्वातिहस्तमृगास्तथा ।
फाल्गुन्यौ श्रवणे चैव पूर्वाभाद्रपदा तथा ।
बन्धने सर्वबीजानां तथा गोलीप्रवेशने ॥ ३३ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–ज्योतिःसारसंग्रहमें लिखा है कि-रोहिणी, रेवती, मूल, स्वाति, हस्त

---

करी रेखा तृतीया चार्थदायिनी । पञ्चमी या भवेद्रेखा बहुसस्यफला हि सा । अत ऊर्ध्वं न कर्त्तव्य महादोषस्तदा भवेत् । सम्पूज्याग्निं द्विजं देवं कुर्य्याद्धलप्रवर्त्तनम् । हेमनिर्दिष्टफालाम छिन्नरेखा न कारयेत् । स्मर्त्तव्या वसवेश्चन्द्रः सर्वविघ्नोपशान्तये । हले प्रवाह्यमाणे तु कूर्म्मं उत्पाट्यते यदि । गृहिणी म्रियते तस्य ततोऽग्नेश्च भय भवेत् । लाङ्गूलं भिद्यते चापि प्रभुस्तत्र विनश्यति । ईशानभङ्गश्चेत्कर्त्तुः संशयो जीवितस्य च । सुतनाशो युगाभङ्गे समाने म्रियते सुतः "समाने योक्त्रबन्धनकाष्ठद्वये । "योक्त्रच्छेदे तु व्यासङ्गः सस्यहानिश्च जायते । हले प्रवाह्यमाणेतु गौरेकः प्रपतेद्यदि । प्रपतेन्मुक्तमात्रस्तु बन्धन स प्रपद्यते । ज्वरातिसाररोगेण कृषिभङ्ग विनिर्दिशेत् । प्रवाहमुक्तमात्रस्तु ततो गौः प्रपतेद्यदि । वत्सालीढेननर्द्दन्तिः तत सस्य चतुर्गुणम् । हेमवारिविलिप्तस्य बीजस्योन्नयतः शुचिः । इन्द्र चित्ते निधायाथ स्वय मुष्टित्रय वपेत् "इत्यादि । "चैत्रे च कृष्णपञ्चम्या काश्मीरा च रजस्वला । नित्य भवति तस्मात्ता स्मृत्वा सिद्धिमवाप्नुयात्" इत्यादि । "अष्टम्याश्च ततः स्नाप्य ताभिरेव गृहे गृहे" इत्यादि च ज्योतिषतत्त्वेऽनुसन्धेयम् ॥ इति ।

(१) धान्यच्छेदनमाह–याम्येति । याम्यादिषु नक्षत्रेषु रिक्तावर्जिते तिथौ स्थिरलग्ने नरलग्ने स्वलग्ने स्वकीयजन्मलग्ने मकरलग्ने च धान्यच्छिदिः कार्या शेषं सुगमम् । मेधि-

मृगशिर, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, श्रवण और पूर्वाभाद्रपदा नक्षत्रमें बीजवन्धन और गोला प्रवेश करना चाहिये ॥ ३३ ॥

अथ धान्यादिसंस्थापनम् ।

**याम्याग्निरुद्राहिविशाखपूर्वामाहेन्द्रपित्र्येतरभैः शुभाहे ।**
**धान्यादिसंस्थापनमेव कुर्यान्मृगास्थिरद्व्यङ्गगृहोदयेषु ॥३४॥ (क)**

अर्थ-अब नाजके रखनेका मुहूर्त्त कहते हैं-भरणी, कृत्तिका, आर्द्रा, आश्लेषा, विशाखा, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, ज्येष्ठा और मघा इन सब नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें, शुभ दिनमें, शुभ ग्रहोंके वारमें, स्थिर और द्व्यात्मक लग्नमें नाज रखना चाहिये ॥ ३४ ॥

अथ धान्यादिविवर्द्धनज्ञानम् ।

**श्रवणत्रयविशाखाध्रुवपौष्णपुनर्वसूनि पुष्यं च ।**
**आश्विन्यथ च ज्येष्ठा धनधान्यविवर्द्धने कथिता ॥ ३५ ॥(ख)**

अर्थ-अब नाजके बढनेका प्रयोग कहते हैं, श्रवण, धनिष्ठा, शतभिषा, विशाखा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, रेवती, पुनर्वसु, पुष्य, अश्विनी और ज्येष्ठा नक्षत्र नाजके वृद्धि होनेके विषयमें प्रशस्त है॥३५॥

अथ धान्यमहार्घ्यादिकथनम् ।

**हशपूर्वत्रयं मूल्यं पक्षादौ लक्षयेद्बुधः ।**
**उकृमूरे समं विद्याच्छेषे धान्यमधः क्रमम् ॥ ३६ ॥ (ग)**

अर्थ-अब नाजके मूल्य जाननेकी रीति कहते हैं-हस्त, शतभिषा, तीनों

---

माह प राशर । "न्यग्रोधः सप्तपर्णो वा गाम्भारी शाल्मली तथा । उदुम्बरो विशेषेण चान्ये वा क्षीरवाहिन । एभिर्मेधि नरो मार्गे कुर्यात्पोपे विवर्जयेत् । कपित्थवंशविरनानां न च मेधिः कदाचन ॥ "

( क ) धान्यादीनां स्थापनमाह-याम्येति । याम्यादिवर्जितैर्नक्षत्रे मकरलग्ने स्थिर-लग्ने द्व्यात्मकलग्ने च शुभग्रहवारे धान्यतिलमुद्गादीनां स्थापनं कार्यम् विशेषमाह पराशर "लिखित्वा द्वाविमौ मन्त्रौ धान्यागारे विनि क्षिपेत् ।"ओं धनदाय सर्वलोकहिताय देहि मे धनं स्वाहा । ओं नवे हार्ये नवे देवि सर्वलोकविवर्द्धिनि । कामरूपिणि सुभगे धनं मे देहि स्वाहा " इति ।

( ख ) वृद्धिनिमित्तं धनधान्यदाने विहितनक्षत्रमाह-श्रवणेति । स्पष्टार्थम् ।

( ग ) धान्यमूल्यज्ञानमाह-हशेति । आद्यक्षरसंकेतेन नक्षत्रकथनं हस्तशतभिषापूर्वात्रयं रोहिणी पक्षादौ प्रतिपदारम्भकाले एतानि नक्षत्राणि यदि स्युः तदा परम् अधिकं मूल्यं धान्यस्य लक्षयेत् । एवम् 'उकृमूरे' उत्तरात्रयं कृत्तिकामूलं रेवती प्रतिपदारम्भकाले यदि स्यात्तदा धान्यमूल्यं समं गतपक्षे यन्मूल्यं तदेव वर्तमानेऽपि न साहाय्यं नच

पूर्वा अथवा रोहिणी नक्षत्र यदि प्रतिपदाके आरम्भकालमें होय तब नाज महँगा विकता है, तीनों उत्तरा, कृत्तिका, मूल अथवा रेवती नक्षत्र यदि प्रतिपदाके आरम्भकालमें होय तो नाज समान मूल्यमें विकता है और उक्त नक्षत्रोंको छोडकर अन्य नक्षत्र यदि प्रतिपदाके आरंभ कालमें होय तो धान्य ( नाज ) सस्ता विकता है ॥ ३६ ॥ इति पाक्षिकधान्यमूल्यज्ञानम् ।

आपिच ।

यदाह्नि मेपसंक्रांतिस्तुलासंक्रमणं निशि ।
तदा प्रजा विवर्द्धन्ते धनधान्यसमृद्धिभिः ॥ ३७ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावलीमें लिखा है कि–यदि मेपकी संक्रान्ति दिनमें और तुलाकी संक्राान्ति रातमें लगै तो प्रजा धनधान्यसे सुखी होती है ॥ ३७ ॥

अन्यच्च ।

कुजार्कशनिवारेण महासंक्रमणं यदा ।
भवेत्तदा प्रजाहानिर्दुर्भिक्षादिभयं तदा ॥ ३८ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–सत्कृत्यमुक्तावलीमें लिखा है कि–मङ्गल, रवि वा शनिवारमें यदि संक्रान्ति होय तो प्रजाका नाश और अत्यन्त दुर्भिक्षादिका भय होता है ॥ ३८ ॥

अथ वार्पिकधान्यमूल्यज्ञानम् ।

रवौ शनौ कुजे चैव पौपे दर्शो भवेद्यदा ।
तदा धान्यस्य मूल्यं स्यादेकद्वित्रिगुणं क्रमात् ॥ ३९ ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ–अब वार्पिक नाजका मूल्य जाननेकी रीति कहते हैं– सत्कृत्यमुक्तावलीमें लिखा है कि, पौपके महीनेमें रविवारके दिन यदि अमावस्या तिथि होय तो नाजका मूल्य एक गुण बढजाता है, इसी प्रकार शनिवारमें होनेसे नाज दूना महँगा होजाता है, और मङ्गलवारमें पौष महीनेकी अमावस हो तो नाजका मूल्य तिगुना होजाता है ॥ ३९ ॥

आपिच ।

दर्शे पौपस्य रात्रौ चेज्ज्येष्ठामूलजलानि च ।

---

–माहार्घ्यमित्यर्थः । एतेषां शेषनक्षत्रे प्रतिपदारम्भकाले धान्यानामधः क्रयोऽल्पमूल्यं स्यात्सदा शुक्ले कृष्णे चात्र च प्रतिपदारम्भकाले तन्मुहूर्ताधिपनक्षत्रं ज्ञात्वा अतिशय समार्घं ज्ञातव्यमिति श्रीमत्पितृचरणाः ॥ इति ।

क्रमान्मूलस्य वृद्धिः स्याद्धान्यानां वत्सरे तदा ॥ ४० ॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ-सत्कृत्यमुक्तावलीमें लिखाहै कि-पौष महीनेकी अमावस्या तिथिकी रातमें ज्येष्ठा, मूल वा पूर्वाषाढा नक्षत्र होय तो उस वर्षमें उत्तरोत्तर नाजका मूल्य बढजाता है ॥ ४० ॥

अन्यच्च ।

संक्रान्तिऋक्षं तिथिवारयुक्तं द्रव्याक्षरं त्रामहृतं भवेत्तु ।
एके समर्घं समता द्वितीये शून्ये महर्घ्यमुनयो वदन्ति ॥४१॥

इति सत्कृत्यमुक्तावल्याम् ।

अर्थ-अब प्रकारान्तरसे नाजका मूल्य निर्णय करतेहैं-सत्कृत्यमुक्तावलीग्रन्थमें लिखाहै कि, संक्रान्तिसमय जो नक्षत्र होय उसकी संख्या उस दिनकी तिथिकी संख्या, वारकी संख्या और द्रव्यके अक्षरोंकी संख्याको मिलाकर जितनी संख्या होय उसको तीनसे भाग करै भाग करनेसे यदि एक बचै तो पूर्वके भावसे कुछ महँगा नाज होजाताहै इस प्रकार दो बचनेसे पहिलेके समान भाव रहता है और कुछ न बचनेसे पहलेके भावसे अत्यन्त महँगा नाज होता है, इस प्रकार मुनियोंने कहा है ॥ ४१ ॥

अथ गोशालाप्रवेशः ।

पूर्वात्रये धनिष्ठायां पौष्णे सौम्यविशाखयोः ।
आश्लेषा चाश्विनी चैव यात्रा सिद्धिश्चतुष्पदाम् ॥ ४२ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहके वचनानुसार गौआदिका शाला ( घर ) में जानेका मुहूर्त कहते हैं-तीनों पूर्वा, धनिष्ठा, रेवती, मृगशिर, विशाखा, आश्लेषा और अश्विनी नक्षत्रमें चतुष्पद ( गौ ) इत्यादिके गृहप्रवेशकी यात्रा सिद्ध होती है ॥४२॥

अथ गोयात्रादिनिषेधः ।

त्रिपूत्तरासु रोहिण्यां सिनीवाली चतुर्दशी ।
श्रवणा चैव हस्ता च चित्रा चैव तथाष्टमी ।
गवां यात्रां न कुर्वीत प्रवेशन्नापि कारयेत् ॥ ४३ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा, रोहिणी, श्रवण, हस्त, चित्रा नक्षत्रमें, अमावस्या, चतुर्दशी और अष्टमी तिथिमें, गौयात्रा वा गोप्रवेश न करावै इस प्रकार ज्योतिःसारसंग्रहमें लिखा है ॥ ४३ ॥

अथ गवामानयनादि ।

**दर्शाष्टमीभूततिथिप्रजेशपूर्वोत्तराकेशवयाम्यचित्राः ।**
**क्रूराहविष्टिव्यतिपातयोगा नेष्टा गवाञ्चानलविक्रयादौ ॥४४॥(क)**

अर्थ–अमावस्या अष्टमी और चतुर्दशी तिथिमें रोहिणी, पूर्वाफाल्गुनी, पूर्वाषाढा पूर्वाभाद्रपदा, तीनों उत्तरा, श्रवण, भरणी और चित्रा नक्षत्रमें, रवि, मङ्गल और शनिवारमें, विष्टि भद्रा तिथिमें और व्यतीपातयोगमें गोचालन और बेंचनेसे शुभफल नहीं होता है ॥ ४४ ॥

अथ वृष्टिज्ञानम् ।

**वर्षप्रश्ने सलिलनिलयं राशिमाश्रित्य चन्द्रो**
**लग्ने यातो भवति यदि वा केन्द्रगः शुक्लपक्षे ।**
**सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोऽल्पमम्भः**
**प्रावृट्काले सृजति न चिराचन्द्रवद्भार्गवोऽपि ॥ ४५ ॥(ख)**

इति प्रश्नाद्वृष्टिज्ञानम् ।

अर्थ--अब प्रश्नद्वारा वृष्टि ( वर्षा ) जाननेकी रीति कहते हैं–कर्क, मकर वा मीन यदि प्रश्नकी लग्न होय और उसमें चन्द्रमा स्थित होय अथवा चन्द्रमा यदि शुक्लपक्षमें लग्नके केन्द्रस्थानमें होय और उस चन्द्रमाको शुभ ग्रह देखते होंय

---

( क ) गवां यात्राप्रवेशक्रयविक्रयेषु निषेधमाह-दर्शेति । अमावस्याष्टमी चतुर्दशी तिथि नेष्टा । रोहिणी पूर्वात्रयोत्तरात्रयश्रवणभरणीचित्रा रविशनिमङ्गलवाराः विष्टिव्यतीपातयोगाश्च नेष्टाः ।गवामित्युपलक्षणं सर्वेषां पशूनामिति राजमार्त्तण्डे–"व्युत्तरेषु च रोहिण्यां सिनीवाली चतुर्दशी । श्रवणेपि च नक्षत्रे चित्रायामष्टमीषु च । गोषु कार्यं न कुर्वीत प्रनयश्च प्रवेशनम् । पशवस्तस्य नश्यन्ति ये चान्ये तृणचारिणः " इति ।

( ख ) प्रश्नाद्वृष्टिज्ञानमाह–वर्षेति । वृष्टिप्रश्ने चन्द्रो यदि सलिलनिलयराशिं कर्कटमकरमीनमाश्रित्य लग्नमुदयं प्राप्तः स्यात् यदि वा केन्द्रगश्चन्द्रः शुक्लपक्षे स्यात्तदा शुभग्रहदृष्टः प्रचुरमुदकं जलं सृजति पापदृष्टोऽल्पजलं एव शुक्रोऽपि । वर्षाकाले जलराशिगः जलराशिलग्ने स्यात् शुक्लपक्षे केन्द्रगो वा स्यात्तदा शुभदृष्टः–प्रचुरं जलं पापदृष्टोऽल्पजलं सृजति वर्षति । सौभरिस्तु जलराशिमाश्रित्य चन्द्रस्तिष्ठति यत्किञ्चिद्वा लग्नं वा प्रश्ने भवति केन्द्रगो वा स्यादिति व्याचष्टे तदशुद्धं तिष्ठतीति क्रियान्तराध्याहारात् तथा दैवज्ञवल्लभायाम् "कर्कटमृगमीनानामुदये चन्द्रः सितो वा वृष्टिकरः । तद्वत्केन्द्रोपगतौ सितश्चन्द्रश्च शुभदृष्टौ " योगान्तरमुक्तं तत्रैव " पक्षे सिते सलिलराशिगताः शुभाश्च केन्द्रद्वितीयसलिलालयगाश्च सम्यक् । चन्द्रोऽथवा सलिलराशिविलग्नगश्च वृष्टिं वदेन्नियतमेव ततो धरित्र्याम् " तथा कृषिपराशरः–" जलस्थो जलहस्तो वा निकटे च जलस्य वा । पृष्टोऽवृष्टौ च वृष्ट्यर्थं वृष्टिः सञ्जायतेऽचिरात् ॥ " इति ।

तो प्रचुर ( इच्छानुसार ) वर्षा होती है और चन्द्रमाको यदि पापग्रह देखते हों तब अल्प ( थोडी ) वर्षा होती है वर्षा समयमें कर्क, मकर वा मीन लग्नमें यदि शुक्र स्थित होय अथवा शुक्लपक्षमें लग्नके केन्द्रस्थानमें होय और शुक्रपर शुभग्रहोंकी दृष्टि होय तो इच्छानुसार जलकी वर्षा होती है और यदि शुक्रपर पापग्रहोंकी दृष्टि होय तो अल्प वर्षा होती है ॥ ४५ ॥

अथ ग्रहसंस्थानेन सद्योवृष्टिज्ञानम् ।

**प्रावृषि शीतकरो भृगुपुत्रात्सप्तमराशिगतः शुभदृष्टः ।**
**सूर्यसुतान्नवपञ्चमगो वा सप्तमगोऽपि जलागमनाय ॥४६॥ (१)**

अर्थ-वर्षाकालमें ग्रहसंस्थापनद्वारा वृष्टि ( वर्षा ) जाननेकी रीति कहते हैं, वर्षाकालमें यदि शुक्रसे सातवें स्थानमें चन्द्रमा स्थित होय और चन्द्रमाको शुभग्रह देखते होंय तो उसी दिनमें वर्षा होती है और शनिसे नववें, पांचवें, वा सातवें, चन्द्रमा होय और उसको शुभग्रह देखते होंय तो उसी दिन वर्षा होती है ॥ ४६ ॥

अथ नवान्नम् ।

**भेपूग्राहिशिवान्येषु विभौमशनिवासरे ।**
**अन्नप्राशनवत्कुर्यान्नवान्नफलभक्षणम् ॥ ४७ ॥ ( २ )**

अर्थ-अब नये नाजके तथा नये फलके खानेका मुहूर्त्त कहते हैं- तीनों पूर्वा,

---

( १ ) वर्षाकाले ग्रहसंस्थानवशेन वृष्टिज्ञानमाह-प्रावृषीति । यस्मिन्दिने चन्द्रः शुक्रात्सप्तमगः शुभदृष्टः स्यात्तस्मिन् दिने जलागमनाय वर्षाकाले स्यात् । तथा सूर्यसुतान्नवपञ्चमगः सप्तमगो वा चन्द्रः शुभदृष्टो यत्र दिने तस्मिन्दिने वृष्टिर्भवती-त्यर्थः । इति ।

( २ ) पूर्वोक्तान्नप्राशनप्रकरणप्राप्तं नवान्नफलभक्षणमाह-भेष्विति । उग्रगणः ११। २० । २५ । १० । २ अहिः ९ शिवः ६ एतदन्येषु नक्षत्रेषु मङ्गलशनिवर्जितेषु वारेषु नवान्नस्य नवफलस्याम्रादेश्च भक्षणं कुर्यात् । अन्नप्राशनवदितिएतदतिरिक्तं पूर्वस्मिन् अन्नप्राशनोक्तश्लोके योऽन्नप्राशनविधिः "गो ज्ञर्क्षमीनोदय " इत्यादिरुक्तः सोऽत्रैव विधेय इत्यर्थः । एतच्च कृष्णपक्षादौ न कर्त्तव्यमिति । तथाच-" नवान्न नैव नन्दायां न च सुप्ते जनार्दने । न कृष्णपक्षे धनुषि तुलायां न कदाचन । तथा च वराहः-"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः । अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् । यत्कृतं धनुषि श्राद्धं मृगनेत्रासु रात्रिषु । पितरस्तन्न गृह्णन्ति नवान्नामिषकांक्षिणः ॥" अपरे कृष्णपक्षे मृगनेत्रा ज्येष्ठानक्षत्रपरार्द्धगते सूर्ये भवति । शुक्रवारे तु सावकाशश्राद्ध-निषेधादेव प्राप्तोऽत्र निषेधः । स च त्रयोदशी जन्मदिनश्चेत्यादिना वक्ष्यते । इति । नवान्नं मलमासेऽपि कार्यम् । " गर्हितो मलमासः स्यादुत्तरे मासि तत्क्रिया । नित्य-श्राद्धं नवान्नश्च विना निरवकाशतः " इति स्मृतिसागरधृतवचनात् ।

मघा, भरणी, आश्लेषा और आर्द्रा इन सब नक्षत्रोंको छोडकर अन्य नक्षत्रोंमें, मंगल और शनिभिन्न वारमें, शुक्लपक्षमें, अन्नप्राशनकी लग्नोंमें नया अन्न और नया फल खाना चाहिये ॥ ४७ ॥

द्वितीया च तृतीया च पञ्चमी सप्तमी तथा ।
दशमी च प्रशस्यन्ते नवान्नाशनकर्मणि ॥ ४८ ॥

इति दीपिकायाम् ।

अर्थ--अब नये अन्न खानेकी तिथियें कहते हैं दीपिकामें लिखा है कि, द्वितीया, तृतीया, पञ्चमी, सप्तमी और दशमी तिथि नये अन्नके खानेमें प्रशस्त है ॥४८॥

हरियुगलेऽदितिपुष्ययुगले विरिञ्चियुगले च ।
करपञ्चोत्तरेश्विनबुधगुरुशशिषु नवान्नभक्षणम् ॥ ४९ ॥

इति दीपिकायाम् ।

अर्थ-दीपिकामें लिखा है कि, श्रवण, धनिष्ठा, पुनर्वसु, पुष्य, रेवती, अश्विनी, रोहिणी, मृगशिर, हस्त, चित्रा, स्वाति, विशाखा, अनुराधा, उत्तराफाल्गुनी, उत्तराषाढा और उत्तराभाद्रपदा नक्षत्रमें, रवि, बुध, बृहस्पति और सोमवारमें नया अन्न खाना चाहिये ॥ ४९ ॥

आपिच ।

सूर्ये चैव विशाखगे (१) स्मरतिथौ पापे त्रिजन्मान्विते
नन्दामन्दमहीजकाव्यदिवसे पौषे मघौ कार्तिके ।
भेपूर्वादिशिवेषु विष्णुशयने कृष्णे शशिन्यष्टमे
श्राद्धं भोजनकं नवान्नविहितं पुत्रार्थनाशप्रदम् ॥ ५० ॥

इति ज्योतिस्तत्त्वे श्राद्धतत्त्वे च ।

अर्थ-ज्योतिषतत्त्वमें और श्राद्धतत्त्वमें लिखा है कि, सूर्य विशाखा नक्षत्रगत होनेसे त्रयोदशी और नन्दा तिथिमें, तीनों जन्मतारा ( २ ) और तीनों प्रत्यरि ( ३ ) तारामें,सौर पौष चैत्र और कार्तिकके महीनेमें, शनि मंगल और शुक्रवारमें

---

( १ ) सूर्ये चैव विशाखगे मार्गशीर्षस्य विंशतिदण्डाधिकप्रथमादिनत्रयावस्थिते सूर्ये स्मरतिथौ त्रयोदश्यां पापे पञ्चमतारात्रये त्रिजन्मान्वित इत्यत्र त्रिजन्मपदं जन्मचन्द्रजन्मतिथिजन्मनक्षत्रपरमिति श्राद्धतत्त्वे - स्मार्त्तेनाभिहितम् ।

( २ ) स्मार्त्तभट्टाचार्यने जन्मराशि, जन्मतिथि और जन्मनक्षत्रकोही त्रिजन्मशब्दका अर्थ करा है ।

( ३ ) जन्मनक्षत्रसे पांचवें नक्षत्रको पापतारा वा प्रत्यरितारा कहते हैं । अत एव सत्ताईस नक्षत्रोंको जन्म, सम्पत् इत्यादिसे गिननेमें ही तीन प्रत्यरितारा होते हैं ।

विष्णुके शयनकालमें, कृष्णपक्षमें, आठवें चन्द्रमामें और तीनों पूर्वा, मघा, भरणी, आश्लेषा और आर्द्रा नक्षत्रमें जो मनुष्य नया अन्न श्राद्धकर्म्ममें वा भोजनमें स्वीकार करता है उसके पुत्र और धन आदिका नाश हो जाता है ॥ ५० ॥

अन्यच्च ।

पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः ।
भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते ॥ ५१ ॥

इति भोजराजः ।

अर्थ-भोजराजने कहा है कि-सौर पौषमें, सौर चैत्रमें और कृष्णपक्षमें नये अन्नसे श्राद्ध न करना चाहिये, जो मनुष्य उक्तकालमें नये अन्नसे श्राद्ध करता है वह जन्मान्तरमें रोगी होता है और उक्त श्राद्धमें पितृगण नहीं स्थित होते हैं ॥ ५१ ॥

अपरश्च ।

ज्येष्ठाशेषार्द्धगे सूर्ये मृगनेत्रानिशात्मके । (क)
नवान्नैर्भोजनं श्राद्धं जन्मचन्द्रे तिथौ न च ॥ ५२ ॥

इति ज्योतिषतत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, ज्येष्ठानक्षत्रके शेषार्द्धमें सूर्यके होनेसे अर्थात् सौर अग्रहायणके २३ दिन २०दण्डके गतमें मृगनेत्रा रात्रि होती है, उसमें और जन्मराशिमें और जन्मतिथिमें नये अन्नसे श्राद्ध और नये अन्नका भोजन न करना चाहिये ॥ ५२ ॥

प्रकारान्तरश्च ।

ब्रह्मा विष्णुबृहस्पती शशधरो मार्त्तण्डपौष्णादितौ
मैत्रे चित्रविशाखवायुधनभे मूलाश्विवह्नौ तथा ।
शाक्रे वारुणऋक्षके शुभदिने श्राद्धं नवं शस्यते
नन्दाभार्गवभूमिजेषु न भवेच्छ्राद्धं नवान्नोद्भवम् ॥५३॥ (ख)

इति भोजराजः ।

अर्थ-राजा भोजने कहा है कि, रोहिणी, श्रवण, मृगशिर, हस्त, रेवती, पुन-

---

( क ) "दिनत्रयाधिके विंशे मार्गशीर्षस्य वै गते । मृगनेत्रा स्मृता रात्रिः श्राद्ध तत्र न कारयेत् " इति ज्योतिःसारसंग्रहे ।

( ख ) अत्र वचने नवान्नश्राद्धे मूलकृत्तिकाज्येष्ठाविधानात्तच्छेषभक्षणमात्रे वक्ष्यमाणाश्लेषाकृत्तिकाज्येष्ठामूलाजपादकेषु च इत्यादि वचनं श्राद्धशेषाभोजिमात्रपरम् । इति श्राद्धतत्त्वे स्मार्त्तेनाभिहितम् ।

वसु अनुराधा, चित्रा, विशाखा, स्वाति, धनिष्ठा, मूल, अश्विनी, कृत्तिका, ज्येष्ठा और शतभिषा नक्षत्रमें, शुभदिनमें, नये अन्नसे श्राद्ध करना चाहिये किन्तु ( प्रतिपदा, एकादशी और षष्ठी ) तिथिमें, शुक्र और मङ्गलवारमें, नए अन्नसे श्राद्ध न करै ॥ ५३ ॥

आपिच ।

आश्लेषाकृत्तिकाज्येष्ठामूलाजपादकेषु च ।
भृगुभौमदिने रिक्तातिथौ नाद्यान्नवौदनम् ॥ ५४ ॥

अर्थ–आश्लेषा, कृत्तिका, ज्येष्ठा, मूल और पूर्वाभाद्रपदा नक्षत्रमें, शुक्र और मङ्गलवारमें और रिक्तातिथिमें नया अन्न न खाना चाहिये [ इस वचनमें जो नये अन्नके खानेमें मूल कृत्तिका और ज्येष्ठा, नक्षत्रका निषेध होनेसे नये अन्न द्वारा श्राद्ध न करके जो मनुष्य नया अन्न खाते हैं उन्हींके पक्षमें जानना चाहिये ॥ ५४ ॥

अन्यच्च ।

रवौ बुधे गुरौ चन्द्रे नवान्नस्य च भक्षणम् ।
भक्षयेन्न शनौ शुक्रे तथा भूमिजवासरे ॥ ५५ ॥

अर्थ–ज्योतिःसारसंग्रहमें लिखा है कि–रवि, बुध, बृहस्पति और सोमवारमें नया अन्न खाना चाहिये शनि और शुक्र और मंगलवारमें नये अन्नको न खावै ॥ ५५ ॥

अपरञ्च ।

वृषे मिथुनकन्यायां मीनलग्ने शुभान्विते ।
भक्षणं स्यान्नवान्नस्य ददात्यायुर्वलं धनम् ॥ ५६ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–ज्योतिःसारसंग्रहमें लिखाहै कि वृष, मिथुन, कन्या और मीन लग्न शुभग्रहयुक्त होनेसे यदि उसमें नया अन्न खायाजाय तो खानेवालेकी आयु बल और धनकी वृद्धि होती है ॥ ५६ ॥

नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि ।
अत्र श्राद्धं न कुर्वीत पुत्रदारधनक्षयात् ॥ ५७ ॥ (१ ।

अर्थ–नन्दातिथि, जन्मतिथि, त्रयोदशी, शुक्रवार, जन्मराशि और जन्म-

---

( १ ) अत्र त्रिजन्मनीत्यस्य जन्मतिथिः जन्मतारा जन्मराशिस्वरूप इत्यर्थः । हलायुधोऽप्येवं वक्ष्यमाणोक्तत्रयोदशीम् । जन्मदिनञ्च नन्दामित्यत्र दिनपदं तिथिपरं तिथि-

तारामें श्राद्ध करनेसे पुत्र भार्या और धनकी हानि होती है ॥ ५७ ॥

**नक्षत्रेऽपि न कुर्वीत यस्मिञ्जातो भवेन्नरः।**
**न प्रोष्ठपदयोः (×) कार्यं न चाग्नेये च भारतः।**
**दारुणेषु ( क ) च सर्वेषु प्रत्यरा च विवर्जयेत् ॥ ५८ ॥**

इति महाभारते।

अर्थ-महाभारतमें लिखा है कि-मनुष्यका जिस नक्षत्रमें जन्म होय उसमें श्राद्ध न करे और पूर्वाभाद्रपदा, कृत्तिका, आश्लेषा, आर्द्रा, ज्येष्ठा और मूल नक्षत्रमें भी श्राद्ध न करना चाहिये [ फल यह है कि, "ब्रह्मा विष्णुबृहस्पती शशधरः" इत्यादि वचनसे नये अन्नसे श्राद्ध करनेमें मूल, कृत्तिका और ज्येष्ठा नक्षत्र विहित है। उक्त वचनमें मूल कृत्तिका और ज्येष्ठानक्षत्रक श्राद्धमें निषेध है अतएव उसको नये अन्नके श्राद्धमें कहाहै ॥ ५८ ॥

**वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः।**
**अपरे क्रियमाणं हि धनुष्येव कृतं भवेत् ॥ ५९ ॥**

इति वराहमिहिराचार्यः।

अर्थ-वराहमिहिराचार्यने कहाहे कि, सौर अग्रहायणके महीनेमें विशाखा नक्षत्र और ज्येष्ठानक्षत्रमें और ज्येष्ठानक्षत्रके शेषार्द्धमें सूर्य स्थित न होनेसे शुक्लपक्षमें नया अन्न खाना चाहिये, किन्तु कृष्णपक्षमें नये अन्नसे श्राद्धकरनेसे धनुमें (सौर पौषमें) नवान्नश्राद्ध जिस प्रकार निष्फल होताहै उसी प्रकार होताहै ॥५९॥

**यत्कृतं धनुषि श्राद्धं मृगनेत्रासु रात्रिषु।**
**पितरस्त गृह्णन्ति नवान्नामिषकांक्षिणः ॥ ६० ॥**

इति वराहमिहिराचार्यः।

अर्थ-वराहमिहिराचार्यने कहाहै कि, सौर पौषके महीनेमें वा मृगनेत्रामें ( ज्येष्ठाके शेषार्द्धमें सूर्य होनेसे ) जो मनुष्य नये अन्नसे श्राद्ध करताहै, उसके पितृगण उस श्राद्धके अन्नको ग्रहण नहीं करते हैं ॥ ६० ॥

अनावश्यकश्राद्धकालकथनम्।

**नवान्नं नैव नन्दायां न च सुप्ते जनार्दने।**

---

संदशपाठात् त्रिजन्मनि त्रिजन्म नक्षत्रमिति व्याख्यान गुरुचरणानामपि प्रामाणिकं राजमार्त्तण्डात् यथा ताराप्रकरणे "सर्वमङ्गलकार्याणि त्रिषु जन्मसु कारयेत्। विवादश्राद्धभैषज्ययात्राक्षौराणि वर्जयेत् " इति मलमासतत्त्वे स्मार्त्तेन लिखितम्।

( + ) प्रोष्ठपदा पूर्वाभाद्रपदा द्वितारकत्वाद्द्विवचनम्। इति '

( क ) "दारुणश्चौरगं रौद्रमैन्द्र नैर्ऋतमेव च " इति च श्राद्धविवेककृद्धृतवचनम्।

न कृष्णपक्षे धनुषि तुलायां नैव कारयेत् ॥ ६१ ॥ (क)

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, नन्दातिथिमें, श्रीहरिके शयनमें, कृष्णपक्षमें, सौर पौषमें और सौर कार्त्तिकमें नये अन्नसे श्राद्ध न करना चाहिये॥६१॥

इति ज्योतिषसारसंग्रहे ।

अपिच ।

शुक्लपक्षे नवं धान्यं पक्कं ज्ञात्वा सुशोभनम् ।
गच्छेत्क्षेत्री विधानेन गीतवाद्यपुरःसरः ॥ ६२ ॥

इत्यभिधाय ।

तेन देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा ॥ ६३ ॥

इत्याश्विनाधिकारे ब्रह्मपुराणम् ।

अर्थ–ब्रह्मपुराणमें लिखाहै कि,आश्विनके महीनेमें शुक्लपक्षमें,धान पकताहै उस समय खेतका मालिक गीतवाद्यादिको आगे करके खेतमें आकर नाजको कटावे पीछे उस धानके चावलोंसे देवताओंकी और पितरोंकी पूजा करनी चाहिये । [ इस ब्रह्मपुराणके वचनसे प्रतीत होता है कि, पूर्ववचनमें श्रीहरिके शयनकालमें, जो नये अन्नसे श्राद्ध करनेका निषेध है उसको आश्विनमासके शुक्लपक्षके इतर जानना चाहिये ॥ ६२ ॥ ६३ ॥

अन्यच्च ।

त्रयोदशीं जन्मदिनञ्च(×)नन्दां
जन्मर्क्षतारां सितवासरं च ।
त्यक्त्वा हरीशेन्दु(१)करान्त्यमैत्र-
ध्रुवेषु च श्राद्धविधानमिष्टम् ॥ ६४ ॥ (२)

अर्थ–अब अनियत अर्थात् अनावश्यक श्राद्धका समय कहते हैं, त्रयोदशी, जन्मतिथि, नन्दातिथि, जन्मराशि,जन्मतारा और शुक्रवारको छोडकरके श्रवण,

(क) न च सुप्ते जनार्दने इति आश्विनशुक्लपक्षेतरपरम् । इति श्राद्धतत्त्वेस्मार्त्तेनोक्तम् ।

(×) जन्मतिथिश्चेति पाठान्तरम् ।

(१) हरीज्येन्द्विति मलमासतत्त्वादौ पाठः । तत्र हरिः श्रवणः इज्यः पुष्य इति स्मार्त्तेन व्याख्यातम् ।

(२) अनावश्यकश्राद्धमाह–त्रयोदशीमिति । त्रयोदशीं जन्मदिनं नन्दातिथिं जन्मराशिं जन्मतारां शुक्रवारञ्च त्यक्त्वा हरिरीशो यस्य स हरीशः श्रवणः इन्दुर्मृगशिरः करो

मृगशिर, हस्त, रेवती, अनुराधा, तीनों उत्तरा और रोहिणी नक्षत्रमें श्राद्ध करना चाहिये ॥ ६४ ॥

नवान्नाकरणेनिन्दाकथनम्।

**नवं ( अ ) कृशरपूपानि पायसं मधुसर्पिषी।**
**वृथा मांसं न चाश्नीयात्पितृदेवविवर्जितम् ॥६५॥(❀)**

इति देवीपुराणम्।

अर्थ–देवीपुराणमें लिखा है, नये धानोंके चांवल, कृशर ( गुडयुक्ततिल चाँवल ) पिष्टक, पायस, मधु, घृत और मांस इन सब वस्तुओंसे पहिले पितरोंकी और देवताओंकी पूजाकरके पीछेसे खाना चाहिये ॥ ६५ ॥

अपिच।

**वृथा कृशरसंयावपायसापूपशष्कुलीः।**
**भुक्त्वा त्रिरात्रं कुर्वीत व्रतमेतत्समाहितः ॥६६॥ ( क )**

इति शंखः।

अर्थ–कसार, संयाव ( घृतक्षीरादिद्वारा पक्क गोधूमचूर्ण ) पायस, पिष्टक,

हस्तः अन्त्यं रेवती मैत्रम् अनुराधा एषु ध्रुवगणेषु च श्राद्धमिष्टम्। एतच्च सावकाशश्राद्धविषय यच्छ्राद्धमन्यदिने कर्त्तुं शक्यते यदकरणे प्रत्यवायाभावः यथा व्रीहियवपाकश्राद्धं द्रव्यब्राह्मणप्राप्तिश्राद्ध संक्रान्त्यादिकाम्यातिथिश्राद्धश्चेति अमावस्यादिनित्यश्राद्धन्तु तद्दिनाकरणे प्रत्यवायादवश्यकर्त्तव्यत्वेन नास्य विषय इति सौभरिणा तु हरिः श्रवण ईश आर्द्रा इति व्याख्यात तदशुद्धम् आर्द्राया निषेधश्रवणात्। यथा विष्णुधर्मोत्तरे " नक्षत्राणितथैवात्र दारुणोग्राणि वर्जयेत् " दारुगण उक्तः "दारुणश्चोरगं रौद्रमैन्द्रं नैर्ऋतमेव च " इति। उरगमाश्लेषा रौद्रमार्द्रा ऐन्द्रं ज्येष्ठा नैर्ऋत मूलेति। उग्रगणन्तु उग्रः पूर्वमघान्तकेति। तथा महाभारते–"नक्षत्रे न च कुर्वीत यस्मिञ्जातो भवेन्नरः। न प्रोष्ठपदयोः कार्यं तथाग्नेये च भारत। दारुणेषु च सर्वेषु प्रत्यरौ च विवर्जयेत् " प्रोष्ठपदा पूर्वाभाद्रपदा आग्नेयं कृत्तिका प्रत्यरिः पञ्चतारा अत्र यत्र च साक्षाच्छन्दोच्चारणेन विशेषाविधिररित तत्र विधिवैयर्थ्यभयान्नानेन निषेध इति यथान्नप्राशने सितेन्दुजीवदिवस इति। शुक्रवारेऽपि कण्ठोक्तत्वात् विधानमेव। कुर्यात्पुसवनं सुयोगकरणे चन्द्रे सभद्रे तिथाविति वचनान्नन्दायामपि पुसवन कर्त्तव्यमेव। तथा च मूलानुराधा मघेति वचनाद्दारुणोग्रगणत्वेन निषिद्धयोरपि मूलमघयोर्विवाहः कर्त्तव्य एवान्यथा विधिवैयर्थापत्तेः एवमन्यत्राप्युक्तः। इति।

( अ ) नव नवान्नम्।

( + ) पितृदेवविवर्जित पितृदेवोद्देशं विना कृतम् नवान्नादि मासान्तं अतएव वृथा कृतमिति।

( क ) तेन देवपित्रातिथिवर्ज्जं कामतः सकृदमीषां भक्षणे त्रिरात्र कृशरादिसाहचर्येण नवान्नेऽपि तथा। इति मलमासतत्त्वे स्मार्त्तेनोक्तम्।

और शष्कुली ( तिलतण्डुलादिमिश्रित यवागुविशेष ) जो मनुष्य इन सब वस्तुओंको देवताओंको और पितरोंको निवेदन न करके वृथा भोजन करता है तो उसको त्रिरात्रि उपवासका प्रायश्चित्त होता है अथवा तदनुकल्प दान करना चाहिये । और नया अन्नभी जो देवताओंको और पितरोंको विना निवेदन किये भोजन करनेसे इसी प्रकारका प्रायश्चित्त करना चाहिये ॥ ६६ ॥

नवान्नभोजनविधिः ।

**प्राश्नीयाद्दधिसंयुक्तं नवं विप्राभिमन्त्रितम् ॥ ६७ ॥(ख)**

इति ब्रह्मपुराणम् ।

अर्थ–ब्रह्मपुराणमें लिखा है कि, नये अन्नमें दही मिलाकर ब्राह्मणसे गायत्री मन्त्रद्वारा अभिमन्त्रित कराकर भोजन करना चाहिये ॥ ६७ ॥

अपिच ।

**गृहीत्वा ब्राह्मणानुज्ञां स दधि प्राशयेन्नवम् ॥ ६८ ॥**

इति स्मृतिः ।

अर्थ–स्मृतिमें लिखा है कि, ब्राह्मणकी आज्ञासे दधिमें मिलाकर नये अन्नको खाना चाहिये ॥ ६८ ॥

अन्यच्च ।

**अत्र व्रीह्यभावे शालिना नूतनाभावे पुरातनेनापि श्राद्धादिकमाह भट्टभाष्ये स्मृतिः । गृहमेधी व्रीहियवाभ्यां शरद्वसन्तयोर्यजेत । श्यामाकैर्वनीवर्षासु आपत्कल्पे अन्येन पुरातनैर्वेति ॥ ६९ ॥**

अर्थ–नवान्नश्राद्ध नये व्रीहिनामक धानोंके चावलोंसे करना चाहिये, उसके अभाव होनेसे साँठीके चावलोंसेभी किया जासक्ता है, नये धानोंका अभाव होनेसे नवा श्राद्ध पुराने धानोंके चावलोंसे करना चाहिये भट्टभाष्यधृत स्मृतिके वचनमें इसी प्रकार लिखा है कि, गृहस्थमनुष्य व्रीहिके चावलोंसे शरत्कालमें श्राद्ध करै और यवद्वारा वसन्तकालमें श्राद्धकरै, वानप्रस्थाश्रमीको श्यामाकधान्यके चावलोंसे वर्षाकालमें श्राद्ध करना चाहिये, किन्तु आपत्कालमें पुराने धानोंके चावलोंसेही श्राद्धका निर्वाह होजाता है ॥ ६९ ॥

---

( ख ) अभिमन्त्रितम् । " मन्त्रानादेशे गायत्री " इति वचनाद्गायत्र्या इति श्राद्धतत्त्वे स्मार्त्तः ।

अपरश्च ।

**प्रेतमातापितृकस्य पुरातनधान्यालाभे नवेनैव वैश्वदेवं कृत्वा । नवञ्च ब्राह्मणेभ्यो दत्त्वा ब्राह्मणानुज्ञां गृहीत्वा भोजनादिकं कर्त्तव्यम् ॥ ७० ॥**

अर्थ–माता वा पिताके प्रेत होनेसे पुराणे धानोंके चावलोंका अभाव होनेसे नये धानोंके चावलोंसे विश्वेदेवका बलि देकर नया अन्न ब्राह्मणोंको दान करके और ब्राह्मणोंकी आज्ञासे नये अन्नका भोजन करे इसका प्रमाण नीचे लिखा है ॥ ७० ॥

**दत्त्वैवं ब्राह्मणेभ्यश्च हुत्वा वा वैश्वदेविकम् ।**
**अन्यो (*) नवान्नमश्नीयादिति बौधायनोऽब्रवीत् ॥ ७१ ॥**

इति नव्यवर्धमानधृतास्मृतिः ।

अर्थ–नवान वर्द्धमानकी स्मृतिमें लिखा है कि, श्राद्धके करनेमें असमर्थ मनुष्य वैश्वदेवकी आहुति और ब्राह्मणोंको दानकरके स्वयं नया अन्न खाना चाहिये ॥ ७१ ॥ इति नवान्नम् ।

अथ जन्मदिनकृत्यम् । (क)

**सर्वैश्च जन्मदिवसे स्नातैर्मङ्गलपाणिभिः ।**
**गुरुदेवाग्निविप्राश्च पूजनीयाः प्रयत्नतः ॥ ७२ ॥**
**स्वनक्षत्रञ्च पितरौ तथा देवः प्रजापतिः ।**
**प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सवः ॥ ७३ ॥**

इति ब्रह्मपुराणे ।

अर्थ–मनुष्यकी जन्मतिथिके दिनमें जलमें तिल मिलाकर उससे स्नान करके नये वस्त्रको पहनकर दूर्वा गोरोचनादियुक्त जन्मग्रन्थि दहिने हाथमें धारण करके गुरु, देवता, अग्नि, ब्राह्मण, स्वीय जन्मनक्षत्र, पिता, माता और प्रजापति देवताकी (ब्रह्माकी) विधानपूर्वक पूजा करनी चाहिये । प्रतिवर्षकी जन्मतिथिमेंही उक्तप्रकारसे महोत्सव करना चाहिये ॥ ७२ ॥ ७३ ॥

---

(*) अन्यः श्राद्धाकरणसमर्थः श्राद्धानधिकारी च अत एव विधया नवमेकोद्दिष्टे दीयते भुज्यते च । इति श्राद्धतत्त्वे स्मार्त्तः ।

(क) जन्मतिथिकृत्यं मलमासे न कर्त्तव्यं चान्द्रमासीयत्वेन सावकाशत्वात् । न च तस्य सौरमासीयत्वं तथात्वे तन्मासे तत्तिथेः कदाचिदप्राप्तौ तद्वर्षे तत्कृत्यलोपापत्तेः । नचेष्टापत्तिः प्रतिसंवत्सरे तद्विधानात् । इति तिथितत्त्वे स्मार्त्तेनाभिहितम् ।

अपिच ।

तिलोद्वर्तीस्तिलस्नायीतिलहोमी तिलप्रदः ।
तिलभुक्तिलवापी च षट्तिली नावसीदति ॥ ७४ ॥

इति तिथितत्त्वे ।

अर्थ-तिथितत्त्वमें लिखा है कि जन्मतिथिमें तिलोद्वर्तन, तिलस्नान, तिलहोम, तिलप्रदान, तिलभोजन और तिल बोनेसे उस मनुष्यको अवसन्नताप्राप्ति नहीं होती है ॥ ७४ ॥

अन्यच्च ।

गुडदुग्धतिलान्नद्याज्जन्मग्रन्थेश्च बंधनम् ।
गुग्गुलं निम्बसिद्धार्थं दूर्वागोरोचनायुतम् ॥ ७५ ॥

इति कृत्यचिन्तामणौ ।

अर्थ-कृत्यचिन्तामणिमें लिखा है कि, जन्म तिथिमें दूधमें गुड और तिल मिलाकर खाय और गुग्गुल, निम्ब, श्वेतसर्षप, दूर्वा और गोरोचनायुक्त सूत्रसे दहने हाथमें ग्रन्थि बन्धन करै ॥ ७५ ॥

अपरञ्च ।

खण्डनं नखकेशानां मैथुनाध्वानमेव च ।
आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत् ॥ ७६ ॥

इति स्कन्दपुराणे ।

अर्थ-स्कंदपुराणमें लिखा है कि-जन्मतिथिमें नाखून और बालोंका कटाना, मैथुन, अध्वगमन ( यात्रा ) आमिषभक्षण, कलह और हिंसा इन सब कार्योंको न करना चाहिये ॥ ७६ ॥

प्रकारान्तरञ्च ।

स्नात्वा जन्मदिने स्त्रियं परिहरन्प्राप्नोत्यभीष्टां श्रियं
मत्स्यान्मोचयतो द्विजाय ददतोऽप्यायुश्चिरं वर्द्धते ।
सक्तून्खादति यस्तु तस्य रिपवो नाशं प्रयान्ति ध्रुवं
भुङ्क्ते यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः ॥ ७७॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि-जन्मतिथिमें स्नान करके और स्त्रीसंसर्ग

संयुता ॥ ७९ ॥ सोमपुत्रस्य वारे जया स्यान्मृगोपेन्द्रगुर्वि-न्द्रयाम्याभिजिद्वाजिभिः। गीष्पतेरह्नि युक्ता च रिक्ता यदा विश्वशक्राग्निपुष्यपित्र्यादित्यम्बुभिः ॥ ८० ॥ सूर्यसुतस्य दिने यदि पूर्णा ब्रह्मदिनाधिपतिद्रविणैः स्यात् ॥ योगवा-रास्त्रिभिरेव समेताः सर्वसमीहितसिद्धिनियुक्ताः ॥ ८१ ॥ (×)

अर्थ-अब अमृतयोग कहते हैं:- मंगलवारमें वा रविवारमें नन्दातिथि, स्वाति, शतभिषा, आर्द्रा, रेवती, चित्रा, आश्लेषा, मूल वा कृत्तिका नक्षत्रके होनेसे अमृतयोग होता है इसी प्रकार शुक्रवारमें वा सोमवारमें भद्रातिथि, पूर्वाफाल्गुनी, उत्तराफाल्गुनी, पूर्वाभाद्रपदा, उत्तराभाद्रपदाके होनेसे बुधवारमें जयातिथि, मृगशिर, श्रवण, पुष्य, ज्येष्ठा, भरणी अभिजित् वा अश्विनीनक्षत्रके होनेसे बृहस्पतिवारमें रिक्तातिथि, उत्तराषाढा, ज्येष्ठा कृत्तिका, रोहिणी, मघा, हस्त वा पूर्वाषाढा नक्षत्रके होनेसे और शनिवारमें पूर्णातिथि, रोहिणी, हस्त, वा धनिष्ठा नक्षत्रके होनेसे अमृतयोग होता है। यह अमृतयोग सब योगोंसे श्रेष्ठ है इस योगमें मनुष्यको वाञ्छित फल प्राप्त होता है ॥ ७९-८१ ॥

अथ तिथ्यमृतयोगः।

बुधमन्दगता नन्दा कुजे भद्रा जया गुरौ।
भृगौ रिक्तामृतं प्रोक्तं पूर्णा च रविचन्द्रयोः ॥८२॥ (१)

इति ज्योतिःसारसंग्रहे।

अर्थ-अब तिथ्यमृतयोग कहते हैं, ज्योतिःसारसंग्रहमें लिखा है कि-बुधवारमें वा शनिवारमें नन्दा ( प्रतिपदा, एकादशी, षष्ठी ) तिथिके होनेसे अमृतयोग होता है, इसी प्रकार मंगलवारमें भद्रा ( द्वितीया, द्वादशी, सप्तमी, ) तिथिके होनेसे बृहस्पतिवारमें जया ( त्रयोदशी, अष्टमी, तृतीया ) तिथिके होनेसे, शुक्रवारमें

(×) दण्डकश्लोकेन अमृतयोगमाह-भूमिपुत्रेति। सुगमम्। अन्यत् अमृतयोगभेदेषां फलञ्चाह-सूर्यसुतस्येति। उक्तैस्त्रिभिर्वारतिथिनक्षत्रैर्युक्ता योगाः सर्वसमीहितसिद्धिकराः।

(१) "चन्द्रार्कयोर्भवेत्पूर्णा कुजे भद्रा जया गुरौ। बुधमन्दौ च नन्दायां शुक्रे रिक्तामृतातिथिः" इति राजमार्त्तण्डे। अथ नन्दादितिथिमाह सारसंग्रहे "एकादशी च प्रतिपत् षष्ठी नन्दा सदा भवेत्। द्वितीया सप्तमी भद्रा द्वादशी चापि सा भवेत्। अष्टमी च तृतीया च जया स्याच्च त्रयोदशी। चतुर्थी नवमी रिक्ता तथैव स्याच्चतुर्दशी। पञ्चमी दशमी पूर्णा पौर्णमासी ततः परम् ॥"

रिक्ता ( चतुर्थी नवमी, चतुर्दशी ) तिथिके होनेसे, और रविवारमें वा सोमवारमें पूर्णा ( पञ्चमी, दशमी, अमावस्या पूर्णिमा ) होनेसे अमृतयोग होता है ॥८२॥

अन्यच्च ।

**अर्केह्नि पूर्णाथ जया शशाङ्के भौमे च भद्रा बुधवारनन्दा ।**
**गुरौ द्वितीया भृगुजे तृतीया शनौ जया चेदमृतं वदन्ति॥८३॥(×)**

इति ज्योतिःसारे ।

अर्थ—ज्योतिःसारमें लिखा है कि—रविवारमें पूर्णातिथि, सोमवारमें जयातिथि मङ्गलवारमें भद्रातिथि, बुधवारमें नन्दातिथि, बृहस्पति वारमें द्वितियातिथि, शुक्रवारमें तृतीयातिथि और शनिवारमें जयातिथिके होनेसें अमृतयोग होता है ॥ ८३ ॥

अथ सिद्धियोगः ।

**शुक्रे नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया ।**
**गुरौ पूर्णा च संयुक्ता सिद्धियोगः प्रकीर्तितः ॥ ८४ ॥**

इति ज्योति सारसंग्रहे ।

अर्थ—अथ सिद्धियोग कहते हैं ज्योतिः सारसंग्रहमें लिखाहै कि—शुक्रवारमें नन्दातिथि बुधवारमें भद्रातिथि, शनिवारमें रिक्तातिथि, मंगलवारमें जयातिथि और बृहस्पतिवारमें पूर्णातिथिके होनेसे सिद्धियोग होताहै ॥ ८४ ॥

अथ रत्नांकुरयोगः ।

**यदि सोमदिने नन्दा विहाय हरिवासरम् ।**
**जया भद्रार्कयोर्वारे रिक्ता भूमिसुते तथा ॥**
**पूर्णा बुधसिताह्वे च भद्रा चेद्गुरुवासरे ।**
**रत्नांकुराख्यो योगोऽयं सर्वकार्ये प्रशस्यते॥८५॥(*)**

इति ज्योतिःसारसंग्रहे ।

अर्थ—अथ रत्नांकुरनामक योग कहते हैं—ज्योतिःसारसंग्रहमें लिखाहै कि-सोमवारमें एकादशी तिथिको छोडकर नन्दातिथि, शनिवारमें वा रविवारमें जयातिथि, मंगलवारमें रिक्तातिथि, बुधवारमें वा शुक्रवारमें पूर्णातिथि और बृहस्पतिवारमें भद्रातिथिके होनेसे रत्नांकुरनामक योग होता है यह योग समीकार्यमें प्रशस्त है ॥ ८५ ॥

---

(×) इदं वचनं ग्रन्थान्तरे लिखितमिति ज्योतिःसारे स्मार्त्तेनाभिहितम् ।

(*) अयन्तु स्मार्त्तभोजराजसंग्रहकारदीपिकाकारादिभिर्बहुभिरलिखितत्वादप्रमाणमिव लक्ष्यते इति ज्योतिःसारसंग्रहे ।

अथ पापयोगः ।

आदित्यभौमयोर्नन्दा भद्रा शुक्रशशाङ्कयोः ।
बुधे जया गुरौ रिक्ता शनौ पूर्णा च पापदा ॥ ८६ ॥

इति दीपिकायाम् ।

अर्थ–अब पापयोगको कहते हैं, दीपिकामें लिखा है कि, रविवारमें वा मङ्गलवारमें नन्दातिथि, शुक्रवारमें वा सोमवारमें भद्रातिथि, बुधवारमें जयातिथि, बृहस्पतिवारमें रिक्तातिथि और शनिवारमें पूर्णा तिथिके होनेसे पापयोग होता है ॥ ८६ ॥

अथ विषयोगः ।

सूर्ये सूर्यसुते भद्रा नन्दा वाक्पतिवासरे ।
जया सोमसिताहे च पूर्णा च धरणीसुते ॥
बुधवारे यदा रिक्ता तथा चन्द्रार्कयोरपि ।
विषयोगोऽयमुद्दिष्टः सर्वकर्मसु गर्हितः ॥ ८७ ॥ *

इति ज्योतिःसारसंग्रहे ।

अर्थ–अब विषयोग कहते हैं–ज्योतिःसारमें लिखा है कि, रविवारमें वा शनिवारमें भद्रातिथि, बृहस्पतिवारमें नन्दातिथि, सोमवारमें वा शुक्रवारमें जयातिथि, मंगलवारमें पूर्णातिथि और बुधवार सोमवार वा रविवारमें रिक्तातिथि होनेसे विषयोग होता है, इस योगको सभी कार्यमें परित्याग करना चाहिये ॥ ८७ ॥

आपिच ।

अमृतं सिद्धियोगश्च यद्येकस्मिन्दिने भवेत् ।
तद्दिनन्तु भवेद्दुष्टं मधुसर्पिर्यथा विषम् ॥ ८८ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि–मधु और घृतके मिलानेसे जिस प्रकार विषके समान होजाता है उसी प्रकार नक्षत्रामृतयोग और सिद्धि एक समयमें होनेसे विषयोग होजाता है कोई २ कहते हैं कि, एक दिनमें अमृत (तिथ्यमृत) और सिद्धियोगके होनेसे विषयोग होजाता है ॥ ८८ ॥

अथ सिद्धिदग्धपापयमघण्टयोगाः ।

नन्दाद्याः सिद्धियोगा भृगुजबुधकुजार्कीज्यवारैः प्रशस्ताः
सूर्यंशशाग्निषड्दृङ्मुनिमिततिथयोर्कादिवारैःप्रदग्धाः ॥ ८९ ॥

---

* अयमपि रत्नांकुरयोगवादीति ज्योतिःसारसंग्रहे ।

पापोर्काह्ने विशाखात्रयमयमसुडुपस्याह्नि चित्राचतुष्कम्
तोयं विश्वाभिजिद्धं त्वथ कुजदिवसे स्वत्रयं विश्वरुद्रौ॥९०॥(क)
ज्ञाहे मूलाविशाखा यमधनतुरगान्त्यानि जीवेऽह्नि पैत्र्य-
रोहिण्यार्द्रायमेन्दुं शतभमथ भृगोरह्नि पुष्यत्रयेन्द्रौ ॥ ९१ ॥
सौराहे हस्तयुग्मार्यमयमजलयुक्पौष्णपुष्यां धनानि
घण्टोऽखण्डर्क्षयुक्ते स्वगृहपतिदिने सौम्यवारेऽर्यमापि ॥ ९२ ॥

इति दीपिकायाम् ।

अर्थ-अब सिद्धि, दग्ध, पाप और यमघण्टयोग कहते हैं-दीपिकामें लिखा है कि,शुक्रवारमें नन्दा, बुधमें भद्रा, मङ्गलमें जया,शनिवारमें रिक्ता और बृहस्पति वारमें पूर्णातिथिके होनेसे सिद्धियोग होता है-रविवारमें द्वादशी, सोमवारमें एकादशी, मङ्गलवारमें दशमी, बुधवारमें तृतीया, बृहस्पतिवारमें षष्ठी, शुक्रवारमें द्वितीया, और शनिवारमें सप्तमी तिथिके होनेसे दिनदग्धनामक योग होता है । रविवारमें विशाखा, अनुराधा, ज्येष्ठा, वा भरणी नक्षत्रके होनेसे पापयोग होता है इसी प्रकार सोमवारमें चित्रा, स्वाति, विशाखा, अनुराधा, पूर्वाषाढा, उत्तराषाढा, वा अभिजित् नक्षत्रके होनेसे मङ्गलवारमें धनिष्ठा, शतभिषा, पूर्वाभाद्रपदा, उत्तरा षाढा,वा आर्द्रा नक्षत्रके होनेसे बुधवारमें मूल, विशाखा, भरणी, धनिष्ठा, अश्विनी वा रेवती नक्षत्रके होनेसे, बृहस्पतिवारमें मघा, रोहिणी, आर्द्रा, भरणी, मृगशिर वा शतभिषा नक्षत्रके होनेसे, शुक्रवारमें पुष्य,आश्लेषा, मघा, ज्येष्ठा नक्षत्रके होनेसे और शनिवारमें हस्त,चित्रा,उत्तराफाल्गुनी, भरणी, पूर्वाषाढा, उत्तराषाढा,रेवती पुष्य अथवा धनिष्ठा नक्षत्रके होनेसे पापयोग होता है नक्षत्रोंके मध्यमें जो अभग्न

(क) सिद्धिदग्धपापयमघण्टयोगानश्लोकद्वयेनाह-नन्दाद्या इति । ज्ञाह्न इति । भृगुजादिवारे यथासंख्य नन्दाद्यास्तिथयः प्रशस्ताः सिद्धियोगाः स्युः । तथाच "भृगौ नन्दा बुधे भद्रा शनौ रिक्ता कुजे जया । गुरौ पूर्णा च सिद्धिः स्यात् त्रिकोऽस्य साधयेद्ध्रुवम् " इति । तथा यथाक्रममर्कादिवारैः द्वादश्याद्यास्तिथयो दग्धाः स्युः । फलन्तु सञ्ज्ञानुरूपमिति । तथाच राजमार्तण्डे-"मास १२ रुद्रा ११ दिशो १० रामाः ३ षट् ६ पक्ष २ मुनयस्तथा । दह्यन्ते तिथयः सप्त सूर्याद्यैः सप्तभिर्ग्रहैः " तथा रव्यादिवारे यथोक्तनक्षत्रैः पापयोगाः स्युः । स्वत्रय धनिष्ठादित्रयमित्यर्थः । अभग्ननक्षत्रयोगे स्वगृहपतिदिने यमघण्टयोग स्यात् । बुधवारे अर्यमा उत्तराफाल्गुनी यमघण्टः तत्रैव व्याख्या राशिद्वयगत भग्ननक्षत्र एकराशिगत त्वभग्ननक्षत्रम् अभग्ननक्षत्रस्य यद्गृह यो राशिः तत्पतिवारे अभग्न नक्षत्रयोगे यमघण्टः स्यात् । तथा रविवारे मघा, उत्तरा, फाल्गुनी, सोमवारे पुष्याश्लेषा, मङ्गलवारे अश्विनी, भरणी, अनुराधा, ज्येष्ठा, बुधवारे आर्द्रा, हस्त बृहस्पतिवारे मूल, पूर्वाषाढा, उत्तराभाद्रपदा, रेवती शुक्रवारे रोहिणी, स्वाती, शनिवारे श्रवण, शतभिषा इत्यर्थः इति ।

नक्षत्र हैं वह सब नक्षत्र क्षेत्रके मालिक रव्यादिवारमें युक्त होनेसे यमघण्टकयोग होताहै ॥ उदाहरण यथा-मघा पूर्वाफाल्गुनी और उत्तराफाल्गुनीका एकपाद् सिंहराशि इनका मालिक सूर्य है अतएव भग्ननक्षत्र उत्तराफाल्गुनी भिन्न मघा वा पूर्वाफाल्गुनी नक्षत्र रविवारमें युक्त होनसे यमघण्टयोग होताहै ॥ ८९ ॥ ॥ ९० ॥ ९१ ॥ ९२ ॥

अथ यमघण्टयोगादीनां त्याज्यकालकथनम् ।

**यमघण्टे (१) त्यजेदष्टौ मृत्यौ द्वादशनाडिकाः ।**
**अन्येषां (२) पापयोगानां मध्याह्नात्परतः शुभम् ॥ ९३ ॥(३)**

अर्थ-अब यमघण्टादियोगका त्याज्यकाल कहते हैं यथा-यमघण्टयोगमें सूर्योदयके बाद आठ दण्ड और मृत्युयोगमें द्वादशदण्ड परित्याग करना चाहिये अन्यान्य समस्त पापयोगमें मध्याह्नकालके बादही शुभ होताहै ॥ ९३ ॥

विष्टयादीनां प्रतिप्रसवः ।

**विष्टावङ्गारके चैव व्यतीपाते शनैश्वरे ।**
**निधने जन्मनक्षत्रे मध्याह्नात्परतः शुभम् ॥ ९४ ॥**

इति श्रीपतिव्यवहारनिर्णये ।

अर्थ-विष्टि भद्रा, मङ्गलवार, व्यतीपातयोग, शनिवार, जन्मतारा और जन्मतारासे सातवाँ तारा-इन सब तिथि, नक्षत्र, वार और योगके कर्मसमय मध्याह्नके उपरान्त शुभ होताहै इस प्रकार श्रीपतिभट्टाचार्यने व्यवहारनिर्णयनामक ग्रन्थमें कहाहै ॥ ९४ ॥

अथ त्रिपुष्करयोगकथनम् ।

**वाराः क्रूरास्तिथिर्भद्रा पादैकखण्डितश्च भम् ।**
**एतत्त्रयसमायोगे त्रिपुष्करमुदाहृतम् ॥ ९५ ॥**

इति ज्योतिषतत्त्वे ।

अर्थ-अब त्रिपुष्करयोग कहते हैं-ज्योतिषतत्त्वमें लिखाहै कि, क्रूर अर्थात् रवि शनि वा मंगलवारमें यदि भद्रा ( द्वितीया, द्वादशी वा सप्तमी ) तिथि और भग्नपादनक्षत्र पुनर्वसु, उत्तराषाढा, कृत्तिका, उत्तराफाल्गुनी, पूर्वाभाद्रपदा और विशाखा नक्षत्रके होनेसे त्रिपुष्करयोग होताहै ॥ ९५ ॥

---

( १ ) कालघण्टे इति पाठः ।

( २ ) सर्वेषामिति च पाठान्तरम् ।

( ३ ) एतेषां निन्दनीयकालमाह-यमघण्ट इति । सूर्योदयादष्टौ दण्डान् यमघण्टे त्यजेत् । मृत्युयोगस्य द्वादश दण्डान् त्यजेत् । ततः परं शुभमित्यर्थः । अन्येषां दग्धादीनामनिष्टयोगान् मध्याह्नात् परकाले शुभं मध्याह्नात् पूर्वकालं त्यजेदित्यर्थः इति ।

फलम् ।

त्रिपुष्करे तु यत्किञ्चिच्छुभं वा यदि वाऽशुभम् ।
जायते त्रिगुणं सर्वं प्राणी जातस्तु जारजः ॥ ९६ ॥ ( * )

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखाहै कि, शुभ वा अशुभ जो कार्य होय त्रिपुष्कर-योगमें त्रिगुना फल होताहै, किन्तु प्राणी उत्पन्न होनेसे वह जारज होताहै॥९६॥

अथ कालघण्टयोगः ।

षष्ठीं शीतांशुवारे परिहर दशमीं सप्तमीं भार्गवे च
अष्टम्यां देवमंत्री बुधदिननवमीं सौरिवारे दशम्याम् ॥
भौमे चैकादशीञ्च दशशतकिरणे वर्जयेद्द्वादशीञ्च ।
सर्वारम्भ न कुर्याज्जनयति विपदं कालघण्टोऽपियोगः॥ ९७॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–अब कालघण्टयोग कहते हैं–ज्योतिःसारसंग्रहमें लिखाहै कि, सोमवा-रमें षष्ठीतिथिके होनेसे कालघण्टयोग होताहै, इसी प्रकार शुक्रवारमें दशमी वा सप्तमी तिथिके होनेसे, बृहस्पतिवारमें अष्टमी होनेसे, बुधवारमें नवमी होनेसे, शनिवारमें दशमी होनेसे मंगलवारमें एकादशी होनेसे रविवारमें द्वादशी तिथिके होनेसे कालघण्ट योग होता है इस कालघण्टयोगमें कार्यके करनेसे विपत्तियाँ होती हैं अतएव इसमें कोई कार्य न करना चाहिये ॥ ९७ ॥

अथ महादग्धाकथनम् ।

द्वादशी च मघादित्ये कृत्तिकैकादशी विधौ ।
दशम्यङ्गारके चार्द्रा बुधे मूलतृतीयका ॥ ९८ ॥
गुरौ षष्ठी भरण्याश्च शुक्रेऽश्विन्यां द्वितीयका ।
आश्लेषा सप्तमी मन्दे महादग्धाः प्रकीर्त्तिताः ॥ ९९ ॥

अर्थ–अब महादग्धायोग कहते हैं–रविवारमें द्वादशी तिथि और मघा नक्षत्रके होनेसे महादग्धा होताहै,इसी प्रकार सोमवारमें कृत्तिकानक्षत्र और एकादशी तिथिके होनेसे,मङ्गलवारमें दशमीतिथि और आर्द्रा नक्षत्रके होनेसे, बुधवारमें मूलनक्षत्र,

( * ) "लाभो हानिर्जयो वृद्धिः पुत्रजन्म तथैव च । नष्ट दत्त मृतं वापि तत्सर्वं त्रिगु-णायते । सर्वदेशविशेषेण फलं स्यात्त्रयोगजम् ।

और तृतीया तिथिके होनेसे, बृहस्पतिवारमें षष्ठीतिथि और भरणी नक्षत्रके होनेसे, शुक्रवारमें अश्विनी नक्षत्र और द्वितीया तिथिके होनेसे और शनिवारमें आश्लेषानक्षत्र और सप्तमी तिथिके होनेसे महादग्धा होता है ॥ ९८ ॥ ९९ ॥

अथ दग्धादिनकथनम्।

द्वादश्येकादशी चैव दशमी च त्रिषष्ठिका।
द्वितीया सप्तमी चैव दग्धा सूर्यादिवारतः ॥ १०० ॥

इति ज्योतिःसारसंग्रहे।

अर्थ-रविवारमें द्वादशी, सोमवारमें एकादशी, मंगलवारमें दशमी, बुधवारमें तृतीया, बृहस्पतिवारमें षष्ठी, शुक्रवारमें द्वितीया और शनिवारमें सप्तमी तिथिके होनेसे वह दग्धादिन होता है इस प्रकार ज्योतिःशारमें लिखा है ॥ १०० ॥

अपिच।

आदित्यरुद्रकाष्ठाग्निरसपक्षतुरङ्गमाः।
आर्कादिवारयोगेन दह्यन्ते तिथयः क्रमात् ॥ १ ॥

इति ज्योतिःसारसंग्रहे।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है, रव्यादि सात वारमें द्वादशी, एकादशी, दशमी, तृतीया, षष्ठी, द्वितीया और सप्तमी इन सब तिथियोंके होनेसे वह दिन दग्ध होता है ॥ १ ॥

अन्यच।

मासा रुद्रा दिशो रामाः षट्पक्षमुनयस्तथा।
दह्यन्ते तिथयः सप्त रव्यादिसप्तभिर्ग्रहैः ॥ २ ॥

इति राजमार्त्तण्डे।

अर्थ-राजमार्त्तण्डमें लिखा है कि, रव्यादि सात वारमें क्रमानुसार द्वादशी, एकादशी, दशमी, तृतीया, षष्ठी, द्वितीया और सप्तमी तिथि दग्धा होती है ॥२॥

अपरञ्च।

द्वादश्यर्कयुता भवेदशुभदा सोमेन चैकादशी
भौमे चापि युता तथैव दशमी नेष्टा तृतीया बुधे।
षष्ठी नेष्टफलप्रदा सुरगुरौ शुक्रे द्वितीया तथा
सर्वारम्भविनाशविघ्नजननी सूर्यात्मजे सप्तमी ॥ ३ ॥

इति ज्योतिस्तत्त्वे।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि; रविवारमें द्वादशी तिथि शुभ नहीं होती है

इसी प्रकार सोमवारमें एकादशी, मंगलवारमें दशमी, बुधवारमें तृतीया, बृहस्पतिवारमें षष्ठी, शुक्रवारमें द्वितीया और शनिवारमें सप्तमी तिथि सभी कार्यमें विघ्नदात्री होती है ॥ ३ ॥

अथ देशविशेषे योगव्यवस्था ।

**सर्वेषु देशेषु विशेषतोऽमी**
**विष्कुम्भकाद्या मुनिभिः प्रदिष्टाः ॥ ( × )**
**वारर्क्षयोगास्तिथिवारयोगा**
**वङ्गेषु योज्या न तु तेऽन्यदेशे ॥ ४ ॥ ( क )**

अर्थ–विष्कुम्भादि सत्ताईस नित्ययोगका फल सभी देशोंमें होता है किन्तु अमृतयोग पापयोगादि, नक्षत्रामृतादि और तिथिवारयोगमें जो सिद्धि और दग्धादियोग हैं उनका शुभाशुभ केवल वङ्गदेशमें ही होता है अन्य किसी देशमें इनकी व्यवस्था नहीं है अतएव और जगह शुभाशुभ फल नहीं होता है ॥ ४ ॥

अथ यात्रादिषु करणव्यवस्था ।

**गरवणिजविष्टिवर्ज्जितानि करणानि यातुरिष्टानि ।**
**गरमपि कैश्चिच्छस्तं वणिजस्तु वणिक्क्रियास्वेव ॥५॥ (+)**

अर्थ–अब यात्रादिमें करण कहते हैं, गर वणिज और विष्टिभिन्न सभी करण यात्रादिमें प्रशस्त हैं- किसी २ मुनिके मतसे गर करणभी यात्रामें प्रशस्त है और वणिज करण वाणिज्यमें प्रशस्त है ॥ ५ ॥

---

( × ) यह वचन नित्ययोगप्रकरणमें लिखा है परन्तु आवश्यकता समझकर यहाँ भी लिखा है।

( क ) सर्वेषां शुभाशुभयोगानां देशविशेष एव फलमाह–सर्वेष्विति । वारर्क्षयोगा अमृतयोगादयः तिथिवारयोगाः सिद्धिदग्धादयः वङ्गेषु योज्याश्चान्यदेशे गुणदोषौ नास्तीत्यर्थः । इति । ‘विरुद्धसञ्ज्ञास्तिथिवारयोगा नक्षत्रवारप्रभवाश्च ये वै । हूणाङ्गवङ्गेषु खशेषु वर्ज्याः शेषेषु देशेषु न ते विरुद्धाः ॥”

इति श्रीपतिः ।

( + ) यात्रायां करणान्याह–गरेति । गरवणिजविष्टिसंज्ञकं करणत्रयं त्यक्त्वान्यानि करणानि यातुर्जनस्य इष्टानि शुभानि । कैश्चिन्मुनिभिर्गरमिति प्रशस्तमुक्तम् । वणिजमपि वणिक्क्रियासु वाणिज्येष्वेव कैश्चिदुक्तं शस्तं नान्यत्रेति । तथाच वशिष्ठः–“गरं हि शुभदं याने वाणिज्ये वणिजं तथा । विष्टिः सर्वात्मना वर्ज्या यातुः प्राणार्थनाशिनी ”

अथ यात्रायां नक्षत्रवत्क्षणव्यवस्था।

**नक्षत्रवत्क्षणानां परिघः शूलं समयभेदश्च ।**
**ताराचन्द्रविशुद्धिः सर्वं तत्स्वामिभिश्चिन्त्यम् ॥ ६ ॥ (अ)**

अर्थ-अब यात्रामें नक्षत्रकी समान नक्षत्रके मुहूर्त्तकी व्यवस्था कहते हैं, नक्षत्रके समान नक्षत्रके क्षणमें ( मुहूर्त्तमें ) दण्डमें, नक्षत्र शूलमें, समयके भेदसे नक्षत्रके मालिक और मुहूर्त्तका मालिक ऐक्य होनेसे और तारा चन्द्रमा शुद्ध होनेसे नक्षत्रविहित कर्म नक्षत्रके मुहूर्त्त होसकते हैं ॥ ६ ॥

अथ निषिद्धलग्नकथनम् ।

**मीने कर्किण्यलिनि च वृषे जन्मकालस्थपापे**
**वामे वा दिग्द्युनिशबलिनां जन्मलग्नाष्टमे वा ।**
**वर्गे पापानुपचयकृतां वाक्रिणां पृष्ठलग्ने**
**पापास्तम्भे न गतिरबले जन्मलग्नाधनाथे ॥ ७ ॥ (×)**

अर्थ-अब यात्रामें निषिद्ध लग्न कहते हैं-मीन कर्क, वृश्चिक और वृष इन सब लग्नमें और जन्मसमय पापग्रह जिस राशिमें होय उस लग्नमें वा राशिमें

---

( अ ) यात्रायां मुहूर्त्तफलमाह-नक्षत्रवदिति । नक्षत्रवत्क्षणानामपि परिघोऽत्र दण्डोऽन्तरे वाय्वग्न्योरित्यनेनोक्तो दण्डः । तज्ज्येष्ठाजपदमित्यनेनोक्त शूल समयभेदो दग्धु शत्रुपुरमित्यादिनोक्तः । कालभेदश्चन्द्रताराविशुद्धिः चकारात्सार्वद्वारिकश्च चिन्त्यमित्यर्थः । न केवलं यात्रायां किन्तु यस्मिन्यस्मिन्नक्षत्रे विहित यद्यत्कर्मोक्त तत्तत्सर्वं कर्म च क्षणानामपि चिन्त्य कथमिति चेदाह तच्च स्वामिभिरेवेति । तेषां क्षणानां स्वामिभिः पूर्वोक्तैर्नक्षत्रैरित्यर्थः । तथा चोक्त नक्षत्रे यद्विहित तत्कार्यं तन्मुहूर्त्तैरिति । बृहद्यात्रायाम् । " अहोरात्रश्च सम्पूर्णं चन्द्रनक्षत्रयोजितम् । तन्नक्षत्रमुहूर्त्ताश्च सर्वकर्मगुणाः स्मृताः " यद्वा तयोर्नक्षत्रक्षणयोः स्वामिभिर्दैवैरिति अश्वियमदहनेत्यादिना नक्षत्राधिपदेवा उक्ताः । शिवभुजग इत्यादिना मुहूर्त्ताधिपा देवाश्चोक्ताः तयोर्दैवैक्यवशेन नक्षत्रविहित कर्म क्षणेऽपि कार्यमित्यर्थः । अन्ये त्वन्यथा प्रलपन्ति तदुपेक्षितामिति ।

( × ) यात्रायां निषिद्धलग्नमाह-मीन इति । मीने कर्कटे वृश्चिके वृषलग्ने गमन न शुभमित्यर्थः । तथाच बृहद्यात्रायाम् । " वृषवृश्चिककर्कटे नृणामनुकूलेऽपि लग्नमाश्रितेः । गमन प्रवदन्त्यशोभन मुनयोऽन्यर्क्षसमाश्रितेरपि " तथा लघुयात्रायाम् । " मीने कुटिलो मार्गो भवति तदंशेऽपि " इत्यादि वक्ष्यति । एतेन नौयान मीनकर्कटयोरपि शस्त जलचरराशित्वादिति । जन्मेति जन्मकालस्थपापग्रहो यस्मिन् तत्र राशौ लग्ने वा गमन न शस्तमिति। तथा लघुयात्रायाम् । " आसन् जन्मनि राशिषु येषु शुभा भास्कराद्द्वितीयाश्च । ते लग्ने शस्यन्ते नेष्टाः पापग्रहाध्युषिताः " इति । एतेन मीनादीना विशेषण जन्मकालस्थपाप इति कस्यचित् प्रलापो हेय इति । वाममिति दिशां वाम दिवाबलिना निशाबलिनाश्च लग्नानां वाम विपरीत

और दिवाबली राशि लग्नमें रात्रिसमय निशाबली राशिलग्नमें दिनके समय और जन्मराशिके वा जन्मलग्नके आठवें लग्नमें और पापग्रहोंके क्षेत्रमें वा नवांशादिमें गोचरमें अथवा दशादिमें अनुपचयकारक शुभग्रहोंके और वक्री ग्रहोंके क्षेत्रादिमें और पृष्ठोदय लग्नमें दो पापग्रहोंके मध्य स्थित लग्नमें बलहीन लग्नमें जन्मलग्न और जन्मराशिके अवशीभूत लग्नमें यात्रा न करनी चाहिये ॥ ७ ॥

अथ शुभाशुभलग्नकथनम् ।

**मीने कुटिलो मार्गो भवति तदंशेऽन्यराशिलग्नेऽपि ।**
**नौयानमाप्यलग्ने कार्यं तेषां नवांशे वा ॥ ८ ॥**

–गमन न शुभमेतदुक्तं भवति दिशा वाम यस्यान्दिशि गन्तव्य तद्दिशो विमुखलग्ने न गन्तव्यम् । यथा बृहद्यात्रायाम् । " यातव्यदिङ्मुखगतस्य सुखेन सिद्धिर्व्यर्थे प्रभोर्भवति दिक्पतिनोऽलग्ने " इति । एतेन पूर्वादिग्लग्ने पूर्वोत्तरदक्षिणेषु गमनं शस्त न कदाचित् पश्चिम इति । एव मन्यदप्यूह्यम् । तथा गोऽजा–श्रीत्यादिना दिवाबलिनो निशाबलिनश्च राशयः उक्तास्तेषा वामं दिवाबलिराशिलग्ने रात्रौ गमनं न शुभम् । निशाबलिराशिलग्ने च दिवा गमन न शस्तमिति । यथा बृहद्यात्रायाम् "शस्ते दिवा दिनबले निशि नक्तवीर्ये राशौ विपर्ययबले गमन न शस्तमिति " जन्मेति जन्मराशेर्जन्मलग्नस्य चाष्टमे लग्ने न शुभ गमनम् । वाशब्दश्चार्थे । तथा पापग्रहस्य वर्गे ग्रहनवांशादौ गोचरे दशापाके वा अनुपचयकृता शुभानामपि वर्गे गमन न शुभम् । एतेनोपचयकरस्यापि पापग्रहस्य च वर्गे गमन शस्तमिति ध्वनितम् । तथाच लघुयात्रायाम् " उपचयकरस्य वर्गः क्रूरस्यापि प्रशस्यते लग्ने । चन्द्रेऽपि च तद्युक्ते न तु विपरीतस्य सौम्यस्य " इति तथा वक्रिणा वर्गे गृहनवांशादौ गमन न शस्तम् । तथा लघुयात्रायाम् " वक्री न शुभकेन्द्रे तदहस्तद्वर्गशुभलग्नश्च " इति । तथाच पृष्ठलग्ने पृष्ठोदये लग्ने गमनं न शस्तम् । यथा बृहद्यात्रायाम् । " शीर्षोदये स्वमभिवाञ्छितकार्यसिद्धिः पृष्ठोदया विफलता बलविद्रवश्च " इति । एतेन पापाना पापग्रहाणांस्थितराशीनाम् अनुपचयकरस्थित राशीनाञ्च वर्गे गमन न शुभ वक्रिग्रहाणा पृष्ठलग्ने पश्चाल्लग्ने च न शुभमिति सौभरेर्मतिविभ्रमजन्यप्रलाप इति । पापान्तस्थ इति पापद्वयमध्यगे लग्ने न शुभम् । तथा अबले बलहीने च लग्ने न शुभम् । तथा जन्मलग्नस्य जन्मराशेश्चाविधेये विधेयो विधातव्यः । आज्ञाप्यो वशग इति यावत् । तथा चामरसिंहः–विधेयो विनयग्राही वचने स्थित आश्रवः । वश्यः प्रणेयो निभृतविनीतप्रश्रिताः समाः ॥ इत्याविधेयेऽवले लग्ने गमनं न शुभमित्यर्थः । द्विपदवशगा इत्यादिना तु वश्यावश्यत्वमुक्तमेवेति । तथा बृहद्यात्रायाम् " अविधेय यद्भवन स्वजन्मलग्नर्क्षयोः प्रयातॄणाम् । अप्यनुकूल लग्न धनक्षयाय स्वेदमद्भवाति । सविवश्यतामुपेते स्वजन्मलग्नर्क्षयोर्विलग्नस्थे । अपचयकरकेऽपि यातुर्जयधनमानागमाः क्षिप्रम् " इति सौभरिणात् अविधेयेत्यादि । अविधेयाविलाभर्खुकर्मस्थानवर्जिते लग्ने इति सर्वार्थाज्ञानादेव प्रलपित तदशुद्धमेवेति । इति वामे विपरीते " घटमिथुनकुलीराश्चापगो मीनकन्याः खलु शुभभवनत्वाद्राशयः सप्त सौम्याः । अलिधटमृगसिंहाजाश्च पापाश्रयत्वान्मुनिभिरभिहितास्ते राशयः क्रूरभावाः " इति ज्योतिस्तत्त्वे स्मार्त्तेनोक्तम् ।

अर्थ-मीनलग्नमें वा अन्यराशिकी लग्नमें मीनके अंशमें गमन करनेसे यात्रीकी वक्रपथमें गति होती है। जलजराशिकी लग्नमें वा जलजराशिकी लग्नके नवांशादिमें नौकामें सवार होकर यात्रा करनी चाहिये ॥ ८ ॥

अपिच ।

लग्ने कार्मुकमेपतौलिगमने कार्ये विलम्बो नृणां
पञ्चत्वं मकरे तथा शशिगृहे तद्वत्फलं वृश्चिके ।
सिंहे वा यदि गोघटेषु गमनं सर्वार्थसिद्धिप्रदं
स्यादाशापतिषु प्रयाति सकलं कन्याझपे मन्मथे॥९॥(क)

इति ज्योतिस्तत्त्वे ।

अर्थ--ज्योतिषतत्त्वमें लिखा है कि, धन, मेष और तुलालग्नमें यात्रा करनेसे यात्रीका विलम्बसे कार्य सिद्ध होता है, मकर, कर्क और वृश्चिकलग्नमें यात्रा करनेसे पञ्चत्व प्राप्ति होती है. सिंह, वृष और कुम्भलग्नमें यात्रा करनेसे सर्वार्थसिद्धि होती है और दिग्वदनलग्नमें और कन्या मीन वा मिथुन लग्नमें यात्रा करनेसे मनोरथ पूर्ण होता है ॥ ९ ॥

अन्यच ।

नेष्टं दिशन्ति मकरालिकुलीरलग्ने
मेपे घटे धनुपि दीर्घकरी हि यात्रा ।
युग्माङ्गनाझपवृषे ध्रुवमर्थलाभो
ज्योतिर्विदः सकलसिद्धिमुपैति लक्ष्मीः ॥ १० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वके वचनान्तरमें लिखाहै कि, मकर, वृश्चिक कर्क,मेष, तुला और धनलग्नमें यात्रा करनेसे शुभफल नहीं होता है. मिथुन कन्या, मीन और वृष लग्नमें यात्रा करनेसे अर्थलाभ और लक्ष्मीयुक्त होता है ॥ १० ॥

अपरञ्च ।

पूर्वान्तु गच्छेद्धनुः सिंहमेषे अथोत्तरां कर्कटकीटमीने ।
प्रतीचिकां मन्मथतौलिकुम्भे ह्यपाचिका गोमकराङ्गनासु११(ख)

इति ज्योतिःसारसंग्रहे ।

अर्थ--ज्योतिषसारसंग्रहमें लिखाहै कि, धन, सिंह और मेष लग्नमें पूर्वदिशाकी

(क) " सिंहे वा यदि गोघटे गतनरः सर्वार्थसिद्धिं लभेत् कन्यायां मिथुने झषे स्वभिमते प्राप्नोत्यवश्य फलम् " ॥ इति ज्योतिःसारसंग्रहे परार्द्धस्य पाठः ।

(ख) "मेषसिंहधनुः प्राच्यां वृषकन्यामृगा यमे । तुलाद्वन्द्वघटाः पश्चात्सौम्यां मीनालिकर्कटाः । इत्यपि सारसंग्रहे ।

यात्रा करे. कर्क, वृश्चिक, और मीन लग्नमें उत्तरदिशाकी यात्रा करे. मिथुन, तुला और कुम्भलग्नमें पश्चिमदिशाकी यात्रा करे और वृष, मकर वा कन्या लग्नमें दक्षिणदिशाकी यात्रा करनी चाहिये ॥ ११ ॥

प्रकारांतरश्च ।

**यानेभं जन्मराशेरुपचयमुदयारित्रिलाभश्च वेशिर्मित्रं वश्यं स्वजन्मस्वतनुभवनयोर्यद्ग्रहेर्नोनिरंशम् ॥ स्थानं सौम्यस्य जन्मन्यभिमतफलदस्यापि यत्र ध्रुवश्च याम्यांत्यक्त्वाभिजिद्धं शुभदिवसफलेन्दोश्च या कालहोरा ॥ १२ ॥ (+)**

अर्थ–जन्मराशिसे तीसरे, छठे वा ग्यारहवें लग्न हो, जन्मसमयके सूर्यसे

(+) विहितलग्नमाह–यान इति । जन्मराशेः सकाशात् उपचयं त्रिदशषष्ठैकाद-शस्थं लग्नं तत् शुभं एतेन जन्मराशिलग्नं न शुभमिति ध्वनितं तथा लघुयात्रायाम् "इष्टं स्वलग्नलग्नं जन्मराश्युद्गमस्ततो स्थानानि । षट् त्र्यायगृहाणि हितान्युदयेनेष्टानि शेषाणि" इति । तयोदयारित्रिलाभश्च सदुदयं स्वजन्म लग्नं अर्थात्तदीयारित्रिलाभश्च लग्नं सदेतेन जन्मलग्नाद्द्वादशमस्थानं न शस्तमिति सूचितम् ॥ तथा बृहद्यात्रायाम् क्लेशा-द्विनाफलमरिक्षयश्चेति केचित्तुदयस्यारित्रिलाभं सत् किन्तु नोदयमिति पूर्वलिखितवच-नात् । "तथा क्लेशाद्विना फलमरिक्षयमर्थसिद्धिं प्राप्नोति लग्नसहिते प्रवसन्स्वलग्ने" इति । तथा वेशिर्जन्मकाले सूर्याद्द्वितीयर्क्षं लग्नं शुभमिति । कश्चित्तु यात्राकाले सूर्यात् द्वितीयनक्षत्रमिति वदति तदसत् "आसन्नजन्मनि राशिषु येषु शुभा भास्कराद्द्वितीयाश्च" इति लघुयात्रावचनात् । तथा स्वजन्म स्वलग्नग्रहयोर्वश्यं मित्रश्च लग्नं सत् द्विपदस्यागा इत्यादिनावश्यत्वमुक्तं मित्रत्वञ्च स्वामिद्वारेति ज्ञातव्यम् । यल्लग्नं ग्रहैः शुभाशुभैर्न निर-शमशशेषीकृतं यस्य शेषांशे ग्रहो न वर्तते तल्लग्नं सदेतेन निरंशलग्नं न शुभमिति निषेध एवतात्पर्यार्थः । तथाच "यस्मिन्राशावन्यभागे सौम्यः पापोऽथवा स्थितः । गमने वर्जयेन्नित्यं भयशोकप्रदो यतः" अर्थाज्जन्मकाले सौम्यस्य स्थानं शुभाक्रान्तं यद्गृहं तल्लग्नं सत् यथा आसन्नजन्मनि राशिषु येषु शुभा इत्यादि । तथा जन्मन्यभिमतफ-लदस्य राजयोग उक्त योगादिना शुभफलदस्य पापस्यापि समाक्रान्तं स्थानं यद्गृहं तल्लग्नं सत् । तथा यत्र ध्रुवः स्यात् यल्लग्नस्वामिनो दिक् यस्मिन् राशौ गन्तुमिष्टा स्यात्त-ल्लग्नं सत् । तथा सारावल्याम्–"नरनाधिपदिङ्नामभ इह यवनैः प्रयत्नतः कथितं । तत्पृष्ठगो विनिहन्यादचिरेण महीपतिः शत्रून्" इति । एतेन ध्रुवो वेशिस्थानाधिपो यत्र स्थित इति सौभरे. प्रलापोऽशुद्ध एव । तथा याम्यां दक्षिणां दिशं त्यक्त्वाभिजिल्लग्नं अभिजिन्मुहूर्ताधिष्ठितराशिलग्नं सत् तथा लघुयात्रायाम् "पश्चाष्टमो मुहूर्तो दिनेऽभिजि-न्नामानिर्दिष्टः।तस्मिन्स्यात्त्वा याम्यामन्यत्र गतस्य जयरन्धि"इति॥शुभेति शुभं दिवस-वारफलं यस्य तस्य ग्रहस्येन्दोश्च या कालहोरा तल्लग्नं सदेतदुक्तं भवति सत्यनेदिवस इत्या-दिना निषिद्धाग वत्ताः ॥ लघुयात्रादिषु न जो जय नगभिरित्यादिना न शुभवारा उक्ताः।अनुलोमदिग्वशेन च वारस्य शुभत्वमुक्तमेवाश्च यस्यग्रहस्य वारे शुभफलं च विश तस्य

दूसरी राशिको लग्न और जन्मराशिकी वा जन्मलग्नके वश्य वा मित्र लग्न अथवा जिस राशिके शेषांशमें ग्रह न होय उस लग्नमें, जन्मसमय शुभग्रह युक्त राशिकी लग्नमें, जन्मसमय शुभ फलप्रद पापग्रहयुक्त राशिकी लग्नमें गन्तव्यादिक्पतिके क्षेत्रलग्नमें, दक्षिण दिग्भिन्न अभिजित् नक्षत्रके मुहूर्त्तकी लग्नमें और शुभग्रहोंके वारमें और चन्द्रमाके काल होरामें यात्रा शुभ होती है ॥ १२ ॥

अथ यात्रायां लग्नस्थनिषिद्धग्रहनिर्णयः ।

**पापः क्षीणो विधुररिदिनं यस्य जन्मर्क्षपीडा**
**होराजन्माष्टमगृहपतिर्जन्मभं प्रत्यनिष्टः ।**
**नीचस्थास्तं गतपराजितो जन्मलग्नेशशत्रु-**
**र्लग्ने नेष्टः खचररहितं वक्रियुक्तश्च केन्द्रम् ॥ १३ ॥ (×)**

*अर्थ-यात्रालग्नमें स्थित निषिद्ध ग्रहोंको कहतेहैं, पापग्रह, क्षीण चन्द्रमावारका*

--कालहोरा।अस्यार्थःग्रहस्य दिवसफलं वारफलं शुभाशुभं यदुक्तं तस्य कालहोरा तत्फलं करोति।तथा च लघुयात्रायाम्।"यद्यस्य फलं वारेतदशेषं तस्य कालहोरायाम्"इति।एतेना-शुभेऽपिवारे शुभफलवारस्य ग्रहस्य कालहोराया गमनं शस्तमितिध्वनितम् । एतेन जन्मकोष्ठचां शुभदिवसफलस्य शुभदस्येति सौभरव्योरव्याकौशलं हेलं दिवसपदवैयर्थ्य-पत्तेश्चेति । कालहोराधिपाश्च दैवज्ञवल्लभायामुक्ताः । "वारप्रवृत्तेर्घटिका द्विनिघ्नाः काला-ख्यहोरापतयः शराप्ताः । दिनाधिपाद्या रविशुक्रसौम्यशशाङ्कसौरेज्यकुजाः क्रमेण" ॥ इति ।

( × ) लग्ने निषिद्धग्रहानाह-पाप इति । पापग्रहो लग्ने नेष्टः न शुभः । अत्र पापोऽपि यदि गोचरे दशापाके वा शुभ ग्रहोऽप्यनिष्टदः सोऽपि लग्ने न शस्त इत्यर्थः । यथा लघु-यात्रायाम् "क्रूरोऽप्यनुकूलस्थः शस्तो लग्ने शुभोऽपि नानिष्टफलदः" इति । तथा क्षीण-श्चन्द्रो लग्ने न शस्तः । यदुक्तं "केन्द्रकोणायगो नेष्टः क्षीणः पूर्णः शशी" इति । तथा यस्य ग्रहस्यारिदिनं ग्रहवारः यस्मिन्वारे यात्रा कर्त्तव्या तस्य वारस्य स्वामी यस्य ग्रहस्य शत्रुः स ग्रहो लग्ने नेष्ट इत्यर्थः । तथा बृहद्यात्रायां "रिपुदिवसे यस्य भवेत्सौम्योऽपि स लग्नगो न शुभदाता । पापोऽपिष्टं जनयति मित्रस्वलग्नस्य विलग्नस्थः" इति । अत्र लग्नाधिपस्यारिदिने गमने योग्यमिति सौभरेर्मतविभ्रम इति । तथा यस्य ग्रहस्य जन्म-नक्षत्रपीडा स ग्रहो लग्ने नेष्टः । यस्येत्युभयत्र सम्बध्यते मध्यपाठात् ग्रहाणां जन्मनक्षत्रं यथा " विशाखा नलतोयानि वैष्णवं भगदैवतम् । पुष्यं पौष्णं यमः सर्पो जन्मर्क्षाण्य-र्कतः क्रमात् " इति । जन्मर्क्षपीडा च नक्षत्रमपट्टकिरणमित्यादिनोक्तैव तथा जन्मलग्नस्य जन्मराशेश्च यदष्टमं ग्रहं तस्य स्वामी लग्ने नेष्ट इति । तथा जन्मभं जन्मराशिं प्रति गोचरे योऽनिष्टप्रदः स शुभोऽपि लग्ने नेष्टप्रदः । तथा क्रूरोऽप्यनुकूलस्थः शस्तो लग्ने शुभोऽपि नानिष्टफलद इति । तथा ये नीचस्था ये चास्तेगता ये च युद्धे पराजितास्ते लग्ने नेष्टाः । तथा जन्मलग्नाधिपस्य जन्मराश्यधिपस्य यः शत्रुः स लग्ने नेष्टः । एवं दशा-न्तर्दशापतेः शत्रुर्लग्ने नेष्ट इति । यथा बृहद्यात्रायाम् । "पाकेशादौ लग्ने वर्गे वा तस्य

मालिक जो शत्रु वह ग्रह और जिस ग्रहका जन्मनक्षत्र पीडित होय वह जन्मलग्न और जन्मराशिके आठवें स्थानका मालिक ग्रह, गोचरमें अनिष्टप्रद शुभ वा अशुभ ग्रह नीचस्थानमें स्थित ग्रह, अस्तमित ग्रह, पराजित ग्रह जन्मलग्नका मालिकका और जन्मराशिके मालिकका शत्रु ग्रह यदि लग्नमें होय वा लग्नके केन्द्रस्थानमें ग्रह शून्य होय अथवा वक्री ग्रह केन्द्रस्थानमें होय तो उस लग्नमें यात्रा न करनी चाहिये ॥ १३ ॥

अथ यात्रायां लग्नस्य होराज्ञानम् ।

**तिर्यगध ऊर्ध्ववदनहोराः स्युः सूर्ययोगतः क्रमशः । (×)**
**वांछितफलदोर्ध्वमुखी शेषे द्वे चाशुभे यातुः ॥ १४ ॥**

अर्थ-अब यात्रामें लग्नके होरा जाननेकी रीति कहते हैं-राशिको दो भागमें विभक्त करनेसे उसको होरा कहते हैं, जिस होरामें, सूर्य स्थित होय उसका नाम तिर्यङ्मुखी, उसके पीछेके भागका नाम अधोमुखी और उसके पीछेके भागका नाम ऊर्ध्वमुखी हैं ऊर्ध्वमुखी होरामें यात्रा करनेसे यात्रीको वांच्छित फल प्राप्त होता है और शेष दोनों होरामें यात्रा करनेसे अशुभ होता है ॥ १४ ॥

अथ यात्रायां द्रेष्काणफलम् ।

**लग्ने यद्यद्ग्रहाणां फलमुदितमिहांशेऽपि तेषां दृकाणे**
**सन्नाथे सौम्यरूपे कुसुमफलयुते रत्नभाण्डान्विते वा ।**

---

-भूपतिर्गच्छन् । विनिहतशूरनराश्वः शत्रोर्गयाति वश्यतरम्” इति । तथा केन्द्र-लग्नचतुर्थसप्तमदशमस्थान सर्वमेव खचररहित ग्रहशून्य नेष्टम् । तथा वक्रिग्रहयुतश्च केन्द्र नेष्टम् तथा बृहद्यात्रायाम् “एकोऽपि वक्रोपगतो ग्रहाणां शुभाऽशुभो वापि चतुष्टयस्थः । वर्गोऽपि वास्योदयगो विनाशं बहुप्रकारं कुरुतेऽध्वगानाम् ॥” इति । अत्र च विशेषमाह राजमार्त्तण्डे-“शुभदः शुभदृष्टो वा शुभदर्क्षगतोऽथवा शुभदः । शुभगेहे वा शुभदो वक्री केन्द्रोपगो यातुः” इति । गोचरे दशापाके वा शुभदो वक्री केन्द्रस्थः शुभफलदो भवतीत्यर्थः ।

(×) होराफलमाह-तिर्यगिति । होराराश्यर्द्धं सूर्ययोगात् क्रमेण तिर्यगध ऊर्ध्ववदनसंज्ञका होरा राश्यर्द्धानि स्युः । अयमर्थः । यस्मिन् राश्यर्द्धे सूर्यस्तिष्ठति सा तिर्यङ्मुखी तत्पश्चादधोमुखी पुनस्तत्पश्चादूर्ध्वमुखीत्यादि । तथा बृहद्यात्रायाम् । यस्मिन्महस्रांशुराशिस्थितोऽर्धोतिर्यङ्मुखी सगणयेत्पुनः पुनः ”इति । तत उर्ध्वमुखी वाञ्छितफलदा शेषे द्वे होरे तिर्यङ्मुखी अधोमुख्यौ यातुर्न शुभप्रदेत्यर्थः । तथाच दैवज्ञवल्लभायाम् । “ धत्ते वाञ्छितकार्यमूर्ध्ववदना क्लेशाद्विना लग्नगा क्लेशाय्यां मपरिश्रमाश्च कुरुते तिर्यङ्मुखी गच्छतः । सैन्यभ्रंशमधोमुखी च कुरुते क्लेशाद्ग्रहे चागमः मार्गाः पुष्टफलप्रदाः स्वपतिना दृष्टा न पापग्रहैः” इति ।

**सौम्यैर्दृष्टे जयः स्यात्प्रहरणसहिते पापदृष्टे च भङ्गो**
**वह्ना दाहोऽथबंधः सभुजगनिगडे पापयुक्ते च यातुः ॥१५॥ (क)**

अर्थ–अब यात्रामें द्रेकाणका फल कहते हैं, पूर्वोक्त लग्नमें स्थित ग्रहोंका जिस प्रकार फल वर्णन किया है यात्रामें उन्हीं सब ग्रहोंके नवांशमेंभी तिसी प्रकार फल होता है शुभ ग्रहोंके द्रेकाणमें, सौम्यरूप द्रेकाणमें, फलपुष्पयुत द्रेकाणमें रत्नभाण्डान्वित द्रेकाणमें, और द्रेकाणोंपर शुभग्रहोंकी दृष्टि होनेसे यात्रा करनेवाले मनुष्यकी जय होती है और उद्यतास्त्र द्रेकाणमें वा पापग्रहोंकी दृष्टि होनेसे द्रेकाणमें यात्राभङ्ग होती है भुजगद्रेकाणमें, निगडद्रेकाणमें और पापग्रहयुक्त द्रेकाणमें यात्रा करनेसे यात्रीकी अग्निमें दाह और बन्धन होताहै ॥१५॥

अथ धरित्रीयोग ।

**लाभशत्रुसहजेषु यमारौ सौम्यशुक्रगुरवो बलयुक्ताः ।**
**गच्छतो यदि ततोऽस्य धरित्री सागराम्बुवसना वशमेति ।१६। (×)**

अर्थ–अब धरित्री योग कहते हैं–यात्रासमयमें लग्नसे ग्यारहवें, छठे और

(क) यात्रायां नवांशद्रेकाणयोः फलमाह–लग्न इति । लग्ने स्थितानां ग्रहाणां यत् फलं पापः क्षीणो विधुरित्यादिना पूर्वोक्तमिह यात्रायां तेषां ग्रहाणां नवांशेऽपि तत्फलमुदितमिति । बृहद्यात्रायाम् । "यदुदयति पर ग्रहे प्रदिष्टं जनयति तस्य नवांशको विलग्ने " इति । तथाच फलान्तरमुक्तं तत्रैव " नवभागे तिग्मांशोर्गहननाशो विलग्नसंप्राप्ते । तृष्णात्स्वगृहागमनं प्रभावमृदुता च चन्द्रांशे । कौजेऽग्निभयं चौर्ये मित्रप्राप्तिर्धनागमो जैवे । भोगविवृद्धिः शौक्रे भृत्यविनाशो रविसुतांशे " इति । द्रेकाणफलमाह सत् शुभग्रहो नाथो यस्य तस्मिन् द्रेकाणे जयः स्यात्तथा नृयुग्मभीनयोरित्यादिनोक्ते । सौम्यद्रेकाणे जयः तथा फलकुसुमयुते कर्कटादिद्रेकाणे जयस्तथा रत्नभाण्डान्विते धनुर्मध्ये तुलादिद्रेकाणे जयः स्यात्तथा सौम्यैः शुभैर्दृष्टे द्रेकाणे जयः स्यादथ प्रहरणसहिते उद्यतास्त्रद्रेकाणे भङ्गोऽसद्ग्रहद्रेकाणे दाहोऽग्निभयम् । अथ सभुजगनिगडेति । भुजगद्रेकाणे निगडद्रेकाणे च पापग्रहयुक्ते च द्रेकाणे यातुर्बन्धः स्यात् । यद्यपि भीनकर्कयोरित्यादिना सर्पनिगडयोरैक्यमुक्तं तथाप्यन्यत्र भेददर्शनादत्रापि पृथगुक्तम् । तथाच 'मृगालिपूर्वो निगडो प्रदिष्टो' इति । अत्रच कश्चित् प्रहरणसहिते पापयुक्ते इति पाठं कृत्वा विशेष्यविशेषणभावेनान्वयं करोति तदसत् । बृहद्यात्रायाम् पापदृष्ट इत्यस्यैव दृष्टत्वात् चकार य वैयर्थ्यापत्तेश्च इति ।

(×) अथकार्यवशान्तरागमने यदुक्तमेव सर्वं न लभ्यते तदा योगयात्रा कार्येति तत्र प्रथमं धरित्रीयोगमाह–लाभेति । एकादशषष्ठतृतीयेषु यथासम्भवमेकत्र पृथग्व्यव स्थितौ यमारौ शनिकुजौ यदि स्यातां बुधशुक्रगुरवस्तु यत्र कुत्रचित् स्थिता बलयुक्ता यदि स्युः तदा गच्छतोऽस्य नृपतेः पृथिवी सागराम्बुवसना समुद्रजलसीमा वशमेति । वसनेव वसना सीमेत्यर्थः । यदि । बुधशुक्रगुरूणामेकोऽप्यबलः स्यात्तदायं योगो न स्यादित्यर्थः ।

तीसरे स्थानमें शनि और मंगल रहकर यदि बुध, शुक्र और बृहस्पति उस समय बलवान् न होंय तब धरित्रीप्रद योग होता है उक्त योगमें यात्रा करनेसे सागर-पर्यन्त पृथिवी वशमें होजाती है ॥ १६ ॥

अथ किंवसुयोगः ।

**केन्द्रोपगतेन गुरुणा वीक्षिते त्र्यायचतुर्थगे सिते ।**
**पापैरनवाप्तसप्तमगैर्वसु किं तन्न यदाप्नुयाद्गतः ॥ १७ ॥ ( * )**

अर्थ-यात्रासमय लग्नसे तीसरे, ग्यारहवें वा चौथे स्थानमें शुक्र स्थित होय केन्द्र स्थानमें स्थित बृहस्पति शुक्रको देखता होय, और नववें आठवें और सातवें स्थानमें पापग्रह न होय तो किम्वसुयोग होता है, इस योगमें यात्रा करनेसे यात्रीको ऐसा कौनसा धन है कि जिसकी प्राप्ति नहीं होती है अर्थात् सब धनकी प्राप्ति होती है ॥ १७ ॥

अथ विनासमरयोगः ।

**शशिनिचतुर्थगृहे समुपगते बुधसहितेऽस्तगते भृगोःपुत्रे ।**
**गमनमवाप्य पतिर्मनुजानां जयति रिपून्समरेण विनैव ॥ १८ ॥ (क)**

अर्थ-यात्रासमय यदि बुधके साथ चन्द्रमा लग्नके चौथे स्थानमें होय शुक्र अस्त होय तो विना समर योग होता है, उक्तयोगमें यात्रा करनेसे राजा विना, युद्ध किये शत्रुओंसे जयप्राप्ति करता है ॥ १८ ॥

अथ विनारणयोगः ।

**सितेन्दुजौ चतुर्थगौ निशाकरश्च सप्तमे ।**
**यदा तदा गतो नृपः प्रशास्त्यरीन्विनारणम् ॥ १९ ॥ (ख)**

अर्थ-यात्रासमय लग्नसे यदि चौथे स्थानमें शुक्र और चन्द्रमा सातवें स्थानमें स्थित होय तो विनारणयोग होता है, इस योगमें यात्रा करनेसे राजा विना युद्धसे शत्रुओंको पराजय करता है ॥ १९ ॥

---

( * ) किंवसुयोगमाह-केन्द्रेति । लग्नात्त्र्यायचतुर्थस्थे शुक्रे लग्नान्नवमसप्तमाष्टमस्था-नरहितैः पापैर्गतः पुमान्यत्राप्नुयात्तत्किं वसु धनं जगत्यस्ति । नवमाष्टमसप्तस्थेकोऽपि पापो यदि विद्यते तदा योगभङ्ग इत्यर्थः ।

( क ) विनासमर योगमाह-शशिनीति । चन्द्रे लग्नाच्चतुर्थस्थानं प्राप्ते बुधयुक्ते शुक्रेऽ-स्तगते सप्तमस्थे गमनं प्राप्य मनुजानां पतिर्नृपः समरेण युद्धेन विनैव रिपुं जयति । अस्मिन्योगे रिपुजयकर्तुरेवाधिकारः नान्यस्य धनाद्यकांक्षिण इति ।

( ख ) विनारणयोगमाह-सितेति । चतुर्थस्थौ शुक्रबुधौ सप्तमे च चन्द्रो यदा स्यात्तदा गतो नृपः शत्रून् प्रशास्ति अत्रापि रिपुजेतुरेवाधिकारो नान्यस्येति ।

अथ अरिप्रध्वंसयोगः ।

एकान्तरर्क्षे भृगुजात्कुजाद्वा सौम्ये स्थिते सूर्यसुताद्गुरौ वा ।
प्रध्वंसतेऽरिस्त्वचिराद्गतस्य वेशाधिके भृत्य इवेश्वरस्य ॥२०॥ (ग)

अर्थ-यात्रासमय शुक्र वा मङ्गलसे तीसरे स्थानमें शुभग्रह होय बुध और शनिसे तीसरे स्थानमें बृहस्पतिके होनेसे अरिप्रध्वंसनामक योग होताहै, इसमें यात्रा करनेसे यात्रीके शत्रुओंका शीघ्रही नाश होताहै ॥ २० ॥

शशिनरेन्द्रयोगः।

गुरुरुदये रिपुराशिगतोऽर्कौ यदि निधने न च शीतमयूखः ।
भवति गतोऽत्र शशीव नरेन्द्रो रिपुवनिताननतामरसानाम् ॥२१(घ)

अर्थ-यात्रासमय लग्नमें बृहस्पति और लग्नके छठे स्थानमें सूर्य होय और आठवें स्थानमें चन्द्रमा न होय तो शशिनरेन्द्र योग होताहै, उक्त योगमें यात्रा करनेसे राजाके शत्रुओंकी स्त्रियोंका मुख संकुचित होजाताहै ॥ २१ ॥

अथ शिलाप्रतरणयोगः।

लग्नारिकर्महिबुकेषु शुभेक्षिते ज्ञे
द्यूनान्त्यलग्नरहितेष्वशुभग्रहेषु ।
यानुभयं न भवति प्रतरेत्ससुद्रं
यद्यश्मनापि किमुतारिसमागमेषु ॥ २२ ॥ (ङ)

अर्थ-यात्रासमय यदि लग्नमें वा लग्नके छठे, दशवें वा चौथे स्थानमें बुधपर शुभग्रहोंकी दृष्टि होय और सातवें, बारहवें और लग्नमें पापग्रह स्थित न होंय

(ग) अरिप्रध्वसयोगमाह-एकेति । शुक्राद्वा कुजाद्वा एकान्तरर्क्षे तृतीयगृहे सौम्येऽपापबुधे सूर्यसुताद् गुरौ च स्थिते सति गतस्य राज्ञोऽचिरादेवारिः प्रध्वसते नश्यति यथेश्वरस्य सेव्यस्य वेशाधिकोऽतिरेकवेशो भृत्योऽचिरान्नश्यति । अत्र तु रिपुजेनुरेवाधिकारो न लाभायाकाङ्क्षिण इति । एवमुत्तरत्रापि विशेषदर्शनाद्बोद्धव्यमिति ।

(घ) शशिनरेन्द्रयोगमाह-गुरुरिति । उदये लग्ने गुरुः षष्ठे स्थितोऽर्को यदि स्याद्स्मिन् योगे निधनेऽष्टमे चन्द्रो यदि न स्यादष्टमस्थे तु चन्द्रे योगभङ्ग एवेति । अत्र योगे गतो नरेन्द्रो रिपुवनिताननतामरसानां शत्रुस्त्रीमुखपद्मानां शशीव सङ्कोचको भवति । पङ्केरुह तामरसमित्यमरः । रिपुस्त्रीणां पद्मत्वेन निरूपितस्य मुखस्य शोकादिना म्लानिकारकत्वेन राजा चन्द्रेणोपमीयत इति ।

(ङ) शिलाप्रतरणयोगमाह-लग्नेति । लग्नषष्ठचतुर्थदशमेषु शुभदृष्टे ज्ञे बुधे सति पापेषु सप्तमद्वादशलग्नरहितेषु सत्सु अश्मना प्रस्तरेणापि यदि समुद्रं प्रतरेत्तथापि यातुर्भयं न भवेत् किमुत शत्रुसमागमेषु भयमिति ।

तब शिलाप्रतरण योग होताहै उक्त योगमें यात्राकरनेसे यात्री पाषाण ( पत्थर ) लेकरभी समुद्रमें तैर सकताहै तब शत्रुके निकटसे उसे क्या भय होसक्ताहै ॥२२

अथ अरिशलभयोगः ।

**मूर्तिवित्तसहजेषु संस्थिताः शुक्रचन्द्रसुततिग्मरश्मयः ।**
**यस्य यानसमये रणानले तस्य यान्ति शलभा इवारयः२३॥(च)**

अर्थ-यात्रासमय लग्नमें शुक्र, लग्नके दूसरे स्थानमें बुध और लग्नके तीसरे स्थानमें सूर्यके होनेसे अरिशलभयोग होताहै, इसमें यात्राकरनेसे यात्रीके शत्रुगण रणमें पतङ्गकी समान नष्ट होजातेहैं ॥ २३ ॥

अथ अरिवैनतेययोगः ।

**शुक्रवाक्पतिबुधैर्धनसंस्थैः सप्तमे शशिनि लग्नगतेऽर्के ।**
**नृपनिर्गतो यातिरेति कृतार्थो वैनतेयवदरीन्विनिगृह्य ॥ २४ ॥ ( छ )**

अर्थ-यात्रासमयमें शुक्र, बृहस्पति और बुध यदि लग्नके दूसरे स्थानमें स्थित होंय और सातवें स्थानमें चंद्रमा और लग्नमें सूर्य होंय तो अरिवैनतेय-नामक योग होता है इस योगमें यात्रा करनेसे राजा गरुडकी समान अपने शत्रुओंका नाश करके समरमें कृतार्थ होता है ॥ २४ ॥

अथ अरियोषाभरणयोगः ।

**त्रिषष्ठनवान्त्येऽबलः शशाङ्कश्चान्द्रिर्बली यस्य गुरुश्च केन्द्रे ।**
**तस्यारियोषाभरणैःप्रियाणि प्रियाःप्रियाणां जनयन्तिसैन्ये २५॥(ज)**

अर्थ-यात्रासमयमें यदि बलहीन चन्द्रमा तीसरे,छठे, नवर्वे वा बारहवें स्थानमें होय और बलवान् बुध और बृहस्पति केन्द्रस्थानमें स्थित होंय तो अरियोषाभरणयोग होताहै, इसमें यात्रा करनेसे उस राजाके बान्धव गणोंकी स्त्रियें शत्रुओंकी स्त्रियोंके आभूषणोंसे अपने प्रियाओंकी प्रीतिको उत्पन्न करते हैं ॥ २५॥

( च ) अरिशलभयोगमाह-मूर्त्तीति । शुक्रबुधसूर्या यथाक्रमं लग्नद्वितीयतृतीयेषु स्थिता यस्य यानकाले स्युस्तस्यारयो रणानले युद्धाग्नौ शलभा इव यान्ति नश्यन्तीत्यर्थः ।

( छ ) अरिवैनतेययोगमाह-शुक्रेति स्पष्टार्थम् ।

( ज ) अरियोषाभरणयोगमाह-त्रिषष्ठेति । यस्य पुंसो यानकाले बलहीनश्चन्द्रस्त्रिषष्ठनवान्त्येषु स्थितः चान्द्रिर्बुधो बली गुरुश्च बली केन्द्रस्थितावुभौ स्यातां तस्य सैन्ये प्रियाः प्रियजना बान्धवाः शत्रुवनितालङ्कारैः प्रियाणां स्वपत्नीनां प्रियाणि प्रीतिं जनयन्ति तत्पत्नयोऽपि शत्रुजये समर्थाः भवन्तीति तात्पर्यार्थः ।

अथ यात्रायां राजयोगः ।

**वर्गोत्तमगते चन्द्रे लग्ने वा चन्द्रवर्जितैः ।**
**चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशतिः स्मृताः ॥ २६ ॥ (झ)**

अर्थ-अब यात्रामें राजयोग कहते हैं, यात्रीकी जन्मराशि वा जन्मलग्न यदि वर्गोत्तमगत होय और चन्द्रमाको छोडकर चारों ग्रहोंकी यदि उसमें दृष्टि होय तो बाईस ( २२ ) प्रकारसे राजयोग होता है ॥ २६ ॥

अथ यात्रायां राजयोगफलम् ।

**यात्रिणां तु नृपयोगगतानां प्रत्यहं भवति राज्यविवृद्धिः ।**
**वातघूर्णितमिवार्णवयानं वैरिणां बलमुपैति विनाशम् ॥ २७ ॥ (ञ)**

अर्थ-जो राजा राजयोगमें यात्रा करता है उसका राज्य प्रतिदिन बढता जाता है और विशेषकरके समुद्रमें नौका जिस प्रकार वायुसे घूर्णित होकर नष्ट होजाती है तिसी प्रकार उस राजाके शत्रुओंका सैन्य नष्ट होजाता है ॥ २७ ॥

अथ धनवृद्धियोगः ।

**लाभार्थलग्नेषु शुभो रविश्चेद्यस्यारसौरौ सहजेऽरिभे च ।**
**तस्यार्थकोशः समुपैति वृद्धिं लाभो यथा प्रत्यहमर्थवृद्ध्या ॥ २८ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, यात्रासमयमें लग्न ग्यारहवें वा दूसरे

---

( झ ) अथ राजयोगमाह-वर्गोत्तमेति । प्रतिराशौ द्वादशगतिप्रमाणेन लग्नचन्द्रवशात् द्वाविंशत्यधिकानि पञ्चशतानि राजयोगाः स्युः । स्थानान्तरे व्याख्यातोऽयं श्लोक इति । बृहज्जातके राजयोगान्तरमुक्तम् । यथा " कर्कणिलग्ने तत्स्थे जीवे चन्द्रासित-कुजैरेपं प्राप्तः । मेषगतेऽर्के जातः विद्यादिक्रमयुक्तः भूमेर्नाथम् । वृषे सेन्दौ लग्ने सवितृगुरु-तीक्ष्णांशुतनये सुहृज्जायार्थस्थैर्भवति नियमान्मानवपतिः । मृगे मन्दे लग्ने सहजरिपु-धर्मव्ययगतैः शशाङ्काद्यैः ख्यातः पृथुगुणयशाः पुंगणपतिः " । एवमन्ये च योगास्त त्रैव ज्ञेया इति मेषादिद्वादशराशीनां स्वीयनवांशस्थे लग्ने चन्द्रे च यत्र कुत्रापि स्थिते चन्द्रवर्जितैश्चतुरादिभिर्ग्रहैर्वीक्षिते । अयमर्थः । द्वादशराशिषु लग्नस्य द्वादश एव स्वीय नवांशास्तत्र कुम्भं वर्जयित्वा एकादशैव स्थिताः । एवं च द्रस्यापि वृश्चिकवर्जनात् एकादशैव स्थानानि स्युरिति द्वाविंशतिः कुम्भलग्ने दोषदर्शनात्त्यागः । यथा " न कुम्भ लग्ने शुभमाह सत्यो न भागभेदान्यवना वदन्ति " वृश्चिकराशिश्चन्द्रस्यनीचगृहमिति चन्द्रपक्षे वृश्चिकवर्जनम् । " सर्वैर्गगनभ्रमणैर्दृष्टे लग्ने भवति महीपालः । बलिभिः शुभैः सर्वैर्वर्गतमयो दीर्घजीवी च " इति जातकोक्तराजयोग इति ज्योतिस्तत्त्वेस्मार्त्ते-नाभिहितम् ॥

( ञ ) राजयोगगमने फलमाह-यात्रेति बृहज्जातकादौ जातके जन्मनि ये राजयोगा

स्थानमें अथवा लग्नमें यदि शुभ सूर्य होय और मंगल और शनि तीसरे वा छठे स्थानमें होय तो धनवृद्धि योग होता है अर्थात् उक्तयोगमें यात्रा करनेसे जिस प्रकार लोभी धनकी लालसाको बढाता है उसी प्रकार यात्रीका धन प्रतिदिन बढता है ॥ २८ ॥

अथ फलाप्तियोगः ।

लग्ने गुरुर्बुधभृगू हिबुकात्मजस्थौ
षष्ठौ कुजार्कतनयौ दिनकृत्तृतीयः ।
चन्द्रस्य यस्य दशमो भवति प्रयातु-
स्तस्याभिवाञ्छितफलाप्तिरलं नृपस्य ॥ २९ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, यात्रासमय लग्नमें बृहस्पति चौथे और पांचवें स्थानमें बुध और शुक्र छठे स्थानमें मङ्गल और शनि तीसरे स्थानमें और सूर्य दशवें स्थानमें चन्द्रमा होनेसे इस समयमें जो राजा यात्रा करै तो उसको वाञ्छित फलप्राप्ति होती है ॥ २९ ॥

अथ यात्राजनित्रीयोगः ।

गुरौ विलग्ने यदि वा शशाङ्के षष्ठे रवौ कर्मगतेऽर्कपुत्रे ।
सितज्ञयोर्बन्धुसुतस्थयोश्च यात्राजनित्रीव सुखानि धत्ते ॥३०॥

इति ज्योतिस्तत्त्वे ।

अर्थ–जन्मसमय बृहस्पति वा चन्द्रमा यदि लग्नमें होय और सूर्य छठे स्थानमें शनि दशवें स्थानमें, शुक्र चौथे स्थानमें और बुध पांचवें स्थानमें स्थित होय तो उस यात्रामें यात्रीको माताकी समान सुख प्राप्त होता है ॥ ३० ॥

अथ योगोऽतियोगा योगातियोगश्च ।

एकेन वा बुधबृहस्पतिभार्गवाणां
यागा भवेन्नवमपञ्चमकण्टकेषु ।
द्वाभ्यां वदन्ति मुनयोऽप्यतियोगमेव
योगातियोगमपरे त्रिभिरुद्दिशन्ति ॥ ३१ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, यात्रासमय लग्नमें वा लग्नके नवमें, पांचवें

–उक्तागतम गतानां जनानां प्रत्यहं सम्पद्वृद्धिः स्यात् शत्रुबलञ्च विनाशं प्राप्नोति तथा वायुना घूर्णितं समुद्रमध्यस्थं यानं नौका नाशमेति तद्वदिति ।

चौथे सातवें अथवा दशवें स्थानमें बुध, बृहस्पति और शुक्र इन तीन ग्रहोंमेंसे जो कोई ग्रह होय तो उसको योग कहते हैं दो ग्रह होनेसे मुनिगण उसको अतियोग कहतेहैं और तीनों ग्रह उपरोक्त स्थानमें होनेसे उसको योगातियोग कहते हैं ॥ ३१ ॥

अथ योगयात्रादीनां व्यवस्था ।

**महीभृतां योगवशात्फलोदयो द्विजन्मनामृक्षगुणैश्च जायते ।**
**शतन्धुरादेः शकुनिप्रभावतो जनस्य शेषस्य मुहूर्तशक्तितः॥३२॥**

इति ज्योतिस्तत्त्वे ।

अर्थ–अब योगयात्रादिकी व्यवस्था कहते हैं–ज्योतिषतत्त्वमें लिखा है कि, राजाके योगबलाधीन यात्राका फल होता है, द्विजातिगणके नक्षत्रबलाधीन फल होता है, शतन्धुरादिके शकुनिसे यात्राका शुभाशुभ फल होता है, और अन्यान्य मनुष्यके मुहूर्तके अधीन यात्राका फल होताहै ॥ ३२ ॥

अथ उषादियोगे यात्राकथनम् ।

**तिथ्यादिषु निषिद्धेषु चन्द्रताराविलोमतः । (*)**
**उषां गोधूलियोगं वा स्वीकृत्य गमनञ्चरेत् ॥ ३३ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, तिथिनक्षत्रादिविरुद्ध और चन्द्रताराके प्रतिकूल होनेसे यदि स्थानान्तरमें जानेकी अत्यन्त आवश्यकता होय तो उषा वा गोधूलि योगको स्वीकार करके यात्रा करे कोई २ आचार्य कहते हैं कि, चन्द्रतारा गोचरमें शुद्ध होनेसेही उषा और गोधूलियोगमें यात्रा करनी चाहिये ॥ ३३ ॥

दिग्विशेषे उषादिनिन्दा ।

**प्राच्यामुषां प्रतीच्याञ्च गोधूलिं वर्जयेन्नृप ।**
**दक्षिणे चाभिजिच्चैव उत्तरे च निशां तथा ॥ ३४ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ–पूर्वदिशाकी यात्रा उषामें न करनी चाहिये इसी प्रकार पश्चिमकी यात्रा गोधूलिमें न करे दक्षिणकी यात्रा अभिजिन्मुहूर्त्तमें न करे और उत्तरकी यात्रा रात्रिमें न करनी चाहिये इस प्रकार ज्योतिषतत्त्वमें लिखा है ॥ ३४ ॥

---

(*) अवलोमतः विशुद्धितो वा पाठो दृश्यते ।

अपिच ।

**लग्नशुद्धिर्यदा नास्ति प्राप्तकालोऽतिवर्त्तते ।**
**अविशेषेण वर्णानां तदा गोधूलिरिष्यते ॥ ३५ ॥**

इति व्यासः ।

अर्थ–व्यासजीने कहा है कि, स्थानान्तरमें जाना आवश्यक हो प्रशस्त वार और तिथ्यादि न होंय और लग्नभी शुद्ध न होय तो इस प्रकारकी अवस्थामें सभी वर्णोंको गोधूलिमें यात्रा करनी चाहिये ॥ ३५ ॥

**उषा करोति कल्याणं यदि पूर्वं न गच्छति ।**
**वारुण्यां धूलियोगे तु न गन्तव्यं कदाचन ॥ ३६ ॥**

अर्थ–पूर्वदिशाको छोडकर अन्य दिशामें यात्रा करनेसे उषा मङ्गलकारक होती है और गोधूलिमें पश्चिमदिशाकी यात्रा कभी न करना चाहिये ॥ ३६ ॥

अथ उषाकालकथनम् ।

**आरक्तसन्ध्यं रजनीविरामं वदन्त्युषायोगमिह प्रवीणाः ॥**
**आहुः प्रयातुःसकलार्थसिद्धिः संलक्ष्यते हस्ततलस्थितेव॥३७॥(ख)**

इति ज्योतिस्तत्त्वे ।

---

( ख ) उषायोगमाह–आरक्तेति । उषायोग इति कृत्वा रजनीविराम रात्रिक्षयकालं वदन्ति ज्योतिष्प्रवीणाः । आरक्ता ईषद्रक्तवर्णा सन्ध्या यत्र रात्रिशेषे इति । तत्रोषायोगे यातुर्हस्तस्थेव सकलकार्यसिद्धिर्लक्ष्यते । तथाच "प्रभ्रष्टद्युतितारका स्फुटतटी प्राची भवेन्निर्मला ईषद्रक्तविलोहिता च पतती नीटस्थितानां रविः । नो वारं न तिथिं न योगकारणं चन्द्रश्च नापेक्षते हत्वा दोषसहस्रक प्रतिदिन चोषा करोत्युन्नतिम् ॥" अत्र च रविगुरुमंगलवारस्योषापातीव प्रशस्ता इति । अत्र च पूर्वगमने नोषा विहिता ललाटिकत्वात् । तथाच "उषा करोति कल्याणं यदि पूर्वं न गच्छति" इति । अत्र च सर्वेषामधिकारः सामान्येनोक्तत्वात् एवं किं वसुयोगादिति बोद्धव्यमिति । तथा नास्मिन् ग्रहा इत्यदिना गोधूलियोगे यात्रा प्रशस्तोक्ता । गोधूलियोगलक्षणञ्च पूर्वस्मिन्नुक्तमिति । तथा "केन्द्रे गुरुशुक्रौ बलिनौ सर्वदोषक्षयकरौ" । यथा "किं कुर्वन्ति ग्रहाः सर्वे यस्य केन्द्रे बृहस्पतिः । मत्तवारणसंघातः सिंहेनैकेन हन्यते ॥ लग्नदोषाश्च ये केचिद्ग्रहदोषास्तथापरे । ते सर्वे विलयं यान्ति लग्ने गुरुभृगू यदा" । तथा योगमालायाम्–"उदये गुरुसौम्यभार्गवैः सहजेऽर्कार्किकुजैश्च गच्छतः । न भवन्त्यरयो रणे स्थिताः कितवानामिव वित्तसञ्चयाः । येषां गमे नवमपञ्चमकण्टकस्थाः सौम्यास्तृतीयरिपुलाभगताश्च पापाः । आयान्ति ते स्वभवनानि पुनः कृतार्था दत्ता द्विजातिषु पुरा विविधचयार्थाः" ॥ इत्यादि योगा उक्तास्ते अन्यगौरवादुपेक्षिता इति एवं केचिदपि दुर्गगमने प्रस्थानान्तर वदन्ति । यथा "चन्द्रं वृषादौ जानियान्मेषादामुदयं तथा । तिथिना सह संयोज्य त्रिभिर्भागं समाहरेत् । शून्येमृत्युर्द्वये

अर्थ–ज्योतिषतत्त्वमें लिखा है कि,रात्रिके शेषमें पूर्वदिशा ( ईषत् रक्तवर्णा ) कुछेक लालवर्ण होनेसे पण्डितगण उस कालकोही उषा कहते हैं इस समय यात्रा करनेसे यात्रीके सब कार्य करतलगत होजाते हैं ॥ ३७ ॥

अथाभिजित्कथनम् ।

**अष्टमे दिवसस्यार्द्धे त्वभिजित्संज्ञकः क्षणः ।**
**स ब्रह्मणो वरान्नित्यं सर्वकामफलप्रदः ॥ ३८ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, दिनके आठवें मुहूर्त्तका नाम अभिजित् है यह अभिजित् मुहूर्त्त ब्रह्माके वरसे सभी कार्योंमें शुभफल प्रदान करता है॥३८॥

अन्यच्च ।

**दिनमध्यगते सूर्ये मुहूर्ते ह्यभिजित् ( १ ) प्रभुः ।**
**चक्रमादाय गोविन्दः सर्वान्दोषान्निकृन्तति ॥ ३९ ॥**

इति ज्योतिःसारसंग्रहे ज्योतिस्तत्त्वे च ।

अर्थ–ज्योतिःसारसंग्रहमें और ज्योतिषतत्त्वमें लिखा है कि, सूर्यदेव पृथिवीके मध्यस्थलमें जानेसे अर्थात् आठवें मुहूर्त्तका नाम अभिजित् है इस समयमें स्वयंगोविन्द भगवान् चक्रको लेकर सब दोषोंका नाश करते हैं ॥ ३९ ॥

अथाभिजिद्गमनकथनम् ।

**अभिजिन्न बुधे शस्तं याम्यान्तु गमने तथा ।**
**अन्यदिग्गमने शस्तं सर्वसिद्धिप्रदायकम् ॥ ४० ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ–ज्योतिषतत्त्वमें लिखा है कि, अभिजित् मुहूर्त्त बुधवारमें प्रशस्त नहीं है दक्षिणकी यात्रा अभिजित् मुहूर्त्तमें न करना चाहिये, अन्य दिशाओंकी यात्रा अभिजित्समयमें करनेसे सभी कार्य सिद्ध होते हैं ॥ ४० ॥

अथैकार्गलयोगः ।

**वृषादौ चन्द्रमा ज्ञेयो मेषादौ लग्नमेव हि ।**

---

–ह्यानिरेकांके विजयी भवेत्" इति । अधुना राज्ञो यात्रादिवसात्पूर्वं सप्ताहादिनत्रये प्रथमं प्रथमबलिदान तत्पर दिनत्रय विजयस्नान तत्पर सप्तमदिने ग्रहयागस्तत्परं यात्रेति । तथा वृहद्यात्रायाम्–" यात्रा प्राक्सप्ताहाद्ग्रहक साहाय्यक त्र्यहं पूर्वं त्र्यहमथ विजयस्नान ग्रहयोगः सप्तमे दिवसे " इति ।

( १ ) "सर्वेषां वर्णानामभिजित्सञ्ज्ञके मुहूर्त्तः स्यात्" इति ज्योतिस्तत्त्वे ।

परियोज्य समं तिथ्या त्रिभिर्भागं हरेत्ततः।
शून्ये मृत्युर्द्वये हानिरेकाङ्के विजयी भवेत् ॥ ४१ ॥ ( २ )

इति देवज्ञवल्लभायाम् ।

अर्थ–अब एकाङ्की योग कहते हैं, यात्रासमयमें वृषादिको गिननेसे राशिकी जितनी संख्या हो और मेषादिसे गिनकर जो लग्नकी संख्या होय इन दोनों संख्याओंको उस समयकी तिथिकी अङ्कके साथ मिलाकर तीनसे भाग देवै शून्य बचनेसे यात्रीकी मृत्यु होती है दो बचनेसे हानि होती है और एक बचनेसे जयप्राप्ति होती है ॥ ४१ ॥

अथ सर्वाङ्की योगः ।

दिनं तिथिं वारयुक्तं स्वनक्षत्राङ्कयोजितम् ।
सप्तभिश्च हरेद्भागं शेषे यात्रां विनिर्दिशेत् ॥ ४२ ॥

इति भीमपराक्रमे ।

अर्थ–अब सर्वाङ्की योग कहते हैं–भीमपराक्रममें लिखा है कि, महीनेके जिस दिनमें यात्रा करनेकी इच्छा होय उस दिनकी संख्याङ्क, तिथिके अङ्क, वारके अङ्क और जन्मसमयके नक्षत्राङ्कको मिलाकर सातसे भाग देवै भागके शेषाङ्कको देखकर यात्रा करनी चाहिये फल नीचे लिखते हैं ॥ ४२ ॥

फलम् ।

प्रथमे शोभना यात्रा द्वितीये लाभकृद्भवेत् ।
तृतीये वित्तलाभः स्याच्चतुर्थे सिद्धिरुत्तमा ॥ ४३ ॥
पञ्चमे मार्गविघ्नः स्यात्षष्ठे निधनमेव च ।
उक्तं प्रत्ययमुनिना शून्ये श्रीः सर्वतः सुखी ॥ ४४ ॥

इति भीमपराक्रमे ।

अर्थ–भीमपराक्रममें लिखा है कि,पूर्वोक्त अङ्क एक बचनेसे यात्रा शुभ होती है, इसी प्रकार दो बचनेसे यात्रा लाभदायिका होती है, तीन बचनेसे धनप्राप्ति होती है, चार बचनेसे कार्यसिद्धि होती है, पांच बचनेसे मार्गमें विघ्न उपस्थित होते हैं, छः बचनेसे मृत्यु होती है और शेषमें शून्यपडनेसे अर्थात् ( कुछ न बचनेसे ) यात्रामें सर्वप्रकारके सुख और लक्ष्मीकी वृद्धि होती है ॥ ४३ ॥४४॥

इति ज्योतिःसारसंग्रहे ।

---

( २ ) "वृषादौ चन्द्रमा ज्ञेयो मेषादावुदयस्तथा । तिथिना सह योगेन वह्निना भागमाहरेत् । शून्ये मृत्युर्द्वये हानिरेकाङ्के विजयी भवेत् । " इति ज्योतिःसारसंग्रहे ।

अथ घातचन्द्रमावर्णम् ।

**चन्द्रभूतग्रहद्वयमरसदिग्वह्निसागराः ।**
**वेदसिद्धिशिवादित्यो घातचन्द्रः प्रकीर्तितः ॥ ४५ ॥**

अर्थ-मेषराशिवाले मनुष्यको जन्मचन्द्र घातक होता है इसी प्रकार वृषराशिको पांचवाँ चन्द्रमा, मिथुन राशिको नववाँ चन्द्रमा, कर्कराशिको दूसरा चन्द्रमा, सिंहराशिको छठा चन्द्रमा, कन्या राशिको दशवाँ चन्द्रमा, तुलाराशिको तीसरा चन्द्रमा, वृश्चिक राशिको सातवाँ चन्द्रमा, धनराशिको चौथा चन्द्रमा, मकरराशिको आठवाँ चन्द्रमा कुम्भराशिको ग्यारहवाँ चन्द्रमा और मीन राशिवाले मनुष्यको बारहवाँ चन्द्रमा घातक होता है ॥ ४५ ॥

फलम् ।

**घातचन्द्रे कृता यात्रा कृतोद्वाहादिमङ्गलम् ।**
**दुःखाय मृत्यवे वा स्याद्गर्गाचार्येण भाषितम् ॥ ४६ ॥**

अर्थ-घातक चन्द्रमामें जो मनुष्य यात्रा वा विवाहादि माङ्गलिक कर्म करता है उसको क्लेश भोगना पडता है वा मृत्यु होती है ॥ ४६ ॥

अथाकालवृष्ट्यादौ यात्रानिषेधः ।

**पौषादिचतुरो मासान्वृष्टिं दृष्ट्वा न संव्रजेत् ।**
**यस्तु संप्रस्थितो यात्रां ब्राह्मणाननुमन्यते ॥ ४७ ॥**

इति ज्योतिस्तत्त्वे ।

अथ-ज्योतिषतत्त्वमें लिखा है कि, पौषसे चैत्रतक वृष्टि होनेसे यात्रा न करनी चाहिये यदि जाना चाहे तो ब्राह्मणोंकी आज्ञासे यात्रा करे ॥ ४७ ॥

अथ यात्रादिगमनविधिः ।

**दिगीशं हृदये ध्यात्वा गन्तव्याशामुखस्थितः ।**
**अन्तः समीरणे देही प्रवेशे समुपस्थिते ।**
**स्वस्तीति दक्षिणं पादमासनादवतारयेत् ॥ ४८ ॥**

इति भागुरिः ।

अर्थ-अब यात्रा करनेकी रीति कहते हैं-जिस दिशामें यात्रा करनी हो उस दिशाके मालिक देवताका हृदयमें ध्यान करके उसी दिशामें अपना मुखकरके शरीरमें स्थित समीरण देहको प्रवेशकर जाने समय "स्वस्ति" इस प्रकारका शब्द उच्चारण करके आसनसे दहना पैर आगे रखकर यात्रा करनी चाहिये।४८।

अपिच ।

व्रजेद्दिगीशं हृदये निधाय यथेन्द्रमैन्द्र्यामपराश्च तद्वत् ।
सुशुक्लमाल्याम्बरभृन्नरेन्द्रो विसर्जयेद्दक्षिणपादमादौ ॥ ४९ (×)

इति राजमार्त्तण्डे ।

अर्थ-राजमार्त्तण्डमें लिखा है कि, जिस दिशामें यात्रा करे उस दिशाके स्वामी देवताका हृदयमें ध्यान करके सफेद वस्त्रोंको पहनकर और सफेद फूलोंकी मालाको अपने गलेमें धारण कर राजा पहिले अपने दहिने पैरको आगे रखकर यात्रा करे ॥ ४९ ॥

अथ यात्राविधिकथनम् ।

गृहाद्गृहान्तरं गर्गः सीम्नः सीमान्तरं भृगुः ।
शरक्षेपाद्भरद्वाजो वसिष्ठो नगराद्बहिः ॥ ५० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-यात्रा करनेके बाद यात्रीकी स्थिति कहते हैं, गर्गमुनिने कहा है कि, यात्रा करके एक घरसे दूसरे घरमें रह सकता है-भृगु मुनिने कहा है कि, एक सीमासे दूसरी सीमामें रहना चाहिये, भरद्वाज मुनिके मतसे एक तीरको चलावे जितनी दूर तक वह तीर जाय उसके बहिर्देशमें यात्रा करके रहना चाहिये और वसिष्ठ मुनिने कहा है कि, यात्रा करके एक ग्रामको त्यागकर दूसरे ग्राममें वास करना चाहिये ॥ ५० ॥

अथ यात्रानन्तरं निषिद्धानि ।

संत्यजेद्भोजनागारं तथा शयनमन्दिरम् ।
दूरस्थं जलमध्यस्थं शयानं व्याधिपीडितम् ।
गच्छन्तमपि यानस्थं ब्राह्मणं नाभिवादयेत् ॥ ५१ ॥

इति वराहः ।

अर्थ-वराह मुनिने कहा है कि, यात्राके बाद यदि घरमें रहना होय तो भोजनके मकानको और शयनके घरको छोडदेवे अर्थात् यात्रा करनेके बाद उक्त दोनों घरमें न जाना चाहिये अन्यान्य घरमें रहे यात्राके उपरान्त दूरस्थित, जलस्थ, शयान, रोगयुक्त अथवा यानस्थ ब्राह्मणको प्रणाम न करे ॥ ५१ ॥

( × ) यात्राविधिमाह-व्रजेदिति । इन्द्रादिदिग्गीश्वरं हृदये निवेश्य व्रजेत् । दिक्पतिमाह-यथेति । यथा ऐन्द्र्यां पूर्वस्यां गमने इन्द्रं हृदये निवेश्येति । एवमाग्नेय्यादिषु अपरानग्न्यादींश्च दिगीशान् तद्वत् हृदये निवेशयेत्यर्थः । अतिशुक्लमाल्यवस्त्रधरो राजा प्रथमं दक्षिणं पादं विसर्जयेत् दद्यात् ।

बृहद्यात्रायाम्।

**प्राच्यामहानि मुनयः प्रवदन्ति सप्त**
**याम्यामतीव शुभदानि दिनानि पञ्च।**
**त्रीण्येव पश्चिमदिशि क्षितिनायकानां**
**प्रस्थानकेषु दिवसत्रयमुत्तरस्याम् ॥ ५२ ॥ (*)**

इति राजमार्तण्डे।

अर्थ-यात्रा करनेके बाद राजाको कितने दिन रहकर किस दिशामें जाना चाहिये अब उसको कहते हैं-राजमार्तण्डमें लिखाहै कि, यात्राके उपरान्त राजाको सात दिनके मध्यमें पूर्वदिशामें जाना चाहिये, इसी प्रकार दक्षिणदिशामें पांच दिनके बाद यात्रा करनी चाहिये, पश्चिमदिशामें तीन दिनके बाद यात्रा करे और उत्तर दिशामें तीन दिनके बाद यात्रा करनी चाहिये इस प्रकार मुनियोंने कहा है ॥ ५२ ॥

अपिच।

**यात्रां त्रिपञ्चसप्ताहात्पुनर्भद्रेण योजयेत्।**
**वांच्छितार्थफलावाप्तौ (+) यात्रा परिसमाप्यते ५३॥ (क)**

इति भैरवाचार्यः।

अर्थ-यदि कोई मनुष्य यात्रा करनेके बाद तीन दिन वा पांच दिन अथवा

(*) एतच्चायुक्तमित्याहुर्होराशास्त्रविदो बुधाः ॥ राजमार्तण्डोक्त "प्राच्यामहानि मुनयः प्रवदन्ति" इत्यादि वचनकी व्यवस्थाको दूषित कहकर होराशास्त्रवित् पण्डित गणोंने निर्देश करी है।

(+) केश्चिदिष्टफलावाप्तौ इति पाठान्तरम्।

(क) यात्रां कृत्वा स्थितस्य राज्ञः पुनः प्रस्थानमाह-यात्रामिति। एकस्थाने त्रिपञ्चसप्ताह स्थित्वा तत्परं तस्मात्स्थानात् भद्रेण शुभलग्नेन पुनर्यात्रां योजयेदिति भैरवाचार्यो वदति। यदर्थं यात्रा कृता तत्फलप्राप्तावेव यात्रा समाप्यते सम्पूर्णा तु स्यात् न तु पुनर्भद्रेण योजयेत्। यथा बृहद्यात्रायाम्। "एकत्राप्युषितस्यात्रिगीतमच्यवना जगुः। यात्रां पञ्चत्रिसप्ताह पुनर्भद्रेण योजयेत्। तच्चायुक्तमिति प्राहुर्होराशास्त्रविदो जनाः। वाञ्छितार्थफलावाप्तौ यात्रा परिसमाप्यते" तथा चात्रिः-"यात्रायां निर्गतो राजा त्र्यहं पञ्चाहमेव च। सप्ताहं वा स्थितो यत्र पुनस्तस्माच्छुभे दिने। शुभे लग्ने च यातव्या यात्रा येनाप्नुयाच्छुभम्" इति। अत्र च नक्षत्रविशेषे कृतयात्रस्य स्थितिनियम उक्तो बृहद्यात्रायाम्। "सौम्ये गत्वा विष्णुरौद्राऽदितीशे संप्रस्याता बाधते शत्रुसंघान्। भैत्रे गत्वा पौरुहूत ममूष्य मूले यायाच्छत्रुनाशाय भूपः। हस्ते गत्वा स्वातिचित्रे समूष्य शक्रान्याख्ये प्रस्थितो बाध्यतेऽरीन्। तिष्ये पौष्णे वासवे चैकरात्रं सौम्ये स्थित्वा भूतिमाप्नोति यात्रा "अस्यार्थः। मृगशिरसि यात्रां कृत्वार्द्रायां स्थित्वा पुनर्वसौ

सात दिन रहे तो दूसरे बार शुभलग्नादिमें यात्रा करनी चाहिये, किन्तु जबतक मनोरथसिद्धि न होय तबतक यात्राभङ्ग नहीं होताहै इस प्रकार भैरवाचार्यने कहाहै ॥ ५३ ॥

अन्यच्च ।

**जन्मर्क्षे चाष्टमे चन्द्रे वारे भौमशनैश्चरे ।**
**प्रस्थितेऽपि न गन्तव्यमत्यन्तगर्हिते दिने ॥ ५४ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखाहै कि, यात्रा करनेसे भी जन्मनक्षत्रमें, आठवें चन्द्रमामें, मङ्गल, रवि और शनिवारमें और अत्यन्त दूषित दिनमें न जाना चाहिये ॥ ५४ ॥

अथ यात्रायां मनःशुद्धिप्रशंसा ।

**शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः ।**
**एकतस्तु मनो यातुस्तद्विशुद्धं जयावहम् ॥५५॥ (+)**

अर्थ-अब यात्राकर्ममें मन- शुद्धिकी प्रशंसा करते हैं-शुभ वा अशुभके निमित्त ( तिथिनक्षत्रादि ) और मन यात्रामें इन दोनोंके समान होताहै अतएव तिथि नक्षत्रादिके शुभ होनेसे भी यदि मन अप्रसन्न होय तो यात्रा न करनी चाहिये, अतएव मनके प्रसन्न होनेसेही यात्रा शुभ होती है ॥ ५५ ॥

अपिच ।

**शुभं वाप्यशुभं वापि तिथियोगादिकञ्च यत् ।**
**लब्ध्वा मनोबलं तत्र प्रयाणं शुभदं स्मृतम् ॥ ५६ ॥**

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखाहै कि, यात्रामें तिथि, नक्षत्र, वार और योगादि शुभ हो वा अशुभ हो मनका बल ग्रहणकरके यात्रा करनी चाहिये, अर्थात् तिथि नक्षत्रादिके शुभ होनेसेभी यदि इच्छा न होय तो यात्रा न करनी चाहिये ॥५६॥

---

-पुनर्गमनं तथा हस्तायां गत्वा चित्रास्वात्योः स्थित्वा विशाखायां पुनर्गमनं तथा पुष्यरेवतीधनिष्ठासु गत्वैकरात्रं स्वसीम्नि स्थित्वा पुनर्यानम् । एवमन्येष्वप्यूहनीयम् इति ।

( × ) मनःशुद्धिप्रशंसामाह-शुभेति । निमित्तानि फलसूचकानि शुभाशुभानि सर्वाण्येकतः एकस्मिन् पक्षे स्युः एकतोऽन्यस्मिन् पक्षे यातुः केवलं मनः फलदायकं तन्मनो विशुद्धं प्रसन्नं सत् जयावहं स्यात् । यदर्थं यात्रा कृता तदनन्तरं तदर्थं मनःप्रसादो यदि स्यात्तदा शुभम् अप्रसादे त्वशुभमित्यर्थः । तथाच बृहद्यात्रायाम् "प्रीयते न मनोऽनर्थे नासिद्धावभिनन्दति । तस्मात्सर्वात्मना यातुरस्तुगेयं सदामनः " इति ।

यात्रासमयेऽशुभदर्शनम्।

शीर्षे तैलाभिषिक्तं भुजगमभिमुखं वामनं काष्ठभारं
प्रव्राजं छिन्ननासं जटिलनखयुतं मुक्तकेशं च नग्नम्।
प्रस्थाने शून्यकुम्भं भयमदकुशलं रोदनं क्रोशनं च
प्रस्थाने प्रस्थितानां यदि च न मरणं कार्यसिद्धिर्न च स्यात् ॥५७॥

इति ज्योतिःसारसंग्रहे।

अर्थ–अब यात्रासमयमें अशुभदर्शनादि कहते हैं–ज्योतिःसारसंग्रहमें लिखा है कि, यात्रासमयमें तेल लगाये हुए मनुष्य, सर्प, वामन, काष्ठका बोझा लिये मनुष्य, संन्यासी, नकटा आदमी, जटिल दीर्घनखयुक्त मुक्तकेश ( जिसके शिरके बाल खुले हों ), नग्न ( वस्त्रहीन ) प्रस्थानमें स्थित शून्यकुम्भादिको देखना और रोना सुनना वा पीछेसे कोई पुकारे तो उस समय यात्रा करनेसे यात्रीकी तो मृत्यु न होय किन्तु कार्य कभीभी सिद्ध नहीं होता है ॥ ५७ ॥

अपिच।

कार्पासौषधिकृष्णधान्यलवणक्लीवास्थितैलं वसा-
पङ्काङ्गारगुडाहिचर्मशकृतः केशायसव्याधिताः।
खर्वोन्मत्तजटाधरं तृणतुषक्षुत्क्षामतक्रारयो
मुण्डभ्यङ्गविमुक्तकेशपतिताः काषायिणश्चाशुभाः॥५८॥(+)

अर्थ–यात्रासमयमें कर्पास, औषधि, तिल, लवण, क्लीब ( नपुंसक ) अस्थि, तेल, मांस पङ्क, अङ्गार, गुड, सर्प, चमडा, विष्ठा, केश, लोहा, रोगी, वामन, उन्मत्त, जटाधारी मनुष्य, काष्ठ, तृण, तुषार, भूँखसे कृश ( दरिद्री मनुष्य, ) तक्र ( मट्ठा ), शत्रु, शिरको मुँडाए हुए मनुष्य, तेल लगाए हुए मनुष्य, जिस मनुष्यके शिरके बाल खुले हैं वह मनुष्य, पतित, कषैले वस्त्रोंको पहिने हुए मनुष्यका यदि दैवयोगसे दर्शन होजाय तो उस यात्रामें अमङ्गल होता है ॥५८॥

---

+ अमङ्गलद्रव्याण्याह–कार्पासेति। औषध द्रव्यप्रयोग., क्लीबो, नपुसक, वसा मेदः, अहि, सर्पः, शकृद्विष्ठा, आयसो लोहविकारः कुठारादयश्च वा व्याधितो रोगाभिभूतः उन्मत्तो वातुलः जटी जटायुक्तः पुरुषः। जटेति पाठे श्रोत्रादीन्द्रियहीनो नट इति। इन्धन काष्ठ, क्षुत्क्षामः कृश, दरिद्र इत्यर्थः। तक्र मथितम्, अरिः शत्रुः, मुण्डी मुण्डितमुण्डः, अभ्यङ्गस्तैलादिना कृताभ्यङ्गः, विमुक्तकेशोऽबद्धकेशो जनः, काषायिणः काषायवस्त्रा एते अनिष्टप्रदाः॥ इति।

अथ क्षुतनिषेधः ।

सर्वतः क्षुतमशोभनं स्मृतं गोक्षुतं मरणमेव करोति ।
केचिदाहुरफलं बलात्कृतं वृद्धपीनसितबालकृतञ्च ॥५९॥ *

अर्थ-सभी कार्योंमें छींकसे अमङ्गल होता है, किन्तु यात्रादि कार्यमें गौकी छींक मृत्युजनक होती है । किसी २ आचार्यने कहाहै कि, जो तृनका नाकमें डालकर छींके वह छींक, वृद्धकी छींक, रोगीकी छींक, और बालककी छींकसे शुभाशुभ कुछभी फल नहीं होता है ॥ ५९ ॥

अथ क्षुतादिफलम् ।

वित्तं ब्रह्माणि कार्यसिद्धिरतुला शक्रे हुताशे भयं
याम्यामग्निभयं सुरद्विषि कलिर्लाभः समुद्रालये ।
वायव्यां वरवस्त्रगन्धसलिलं दिव्यांगना चोत्तरे
ऐशान्यां मरणं ध्रुवं निगदितं दिग्लक्षणं खञ्जने ॥ ६० ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-ग्रन्थकारने खञ्जन देखनेका फलाफल मनुष्यकरके ज्येष्ठी (टिकटिकी) और क्षुतका ( छींकका ) फल उसी प्रकारसे कहा है, यथा ऊर्ध्वदिशामें खञ्जनको देखनेसे धन मिलता है, इसी प्रकार पूर्वदिशामें देखनेसे कार्य सिद्ध होताहै, अग्निकोणमें भय, दक्षिणमें अग्निभय, नैर्ऋतमें कलह, पश्चिममें लाभ, वायुकोणमें श्रेष्ठवस्त्र, गन्ध और सलिलादिकी प्राप्ति, उत्तरमें उत्तमा स्त्रीका लाभ और ईशानकोणमें खञ्जनको देखनेसे मृत्यु होती है ॥ ६० ॥

अपिच ।

ज्येष्ठीरुते क्षुतेऽप्येवमूचुः केचिच्च कोविदाः ॥ ६१ ॥

इति ज्योतिस्तत्त्वे ।

अर्थ-कोई पण्डित टिकटिकीके रुदनमें छींकहीके सदृश फल कहते हैं ॥६१॥

(*) क्षुतस्य फलमाह-सर्वत इति । सर्वकार्येषु प्रवेशेष्वपि क्षुतमशोभनं गोक्षुतञ्च मरणमेव करोति । तथा बृहद्यात्रायाम्-" प्रारम्भयानसमयेषु तथा प्रवेशे ज्ञेयं क्षुतं न च शुभं क्वचिदप्युशन्ति" केचित्तु बलात्कृतं नासायां तृणादिना कृतं क्षुतं वृद्धकृतं पीनसितः श्लेष्मरोगार्त्तस्तेन कृतं शिशुकृतञ्च क्षुतमफलं फलशून्यमाहुः । तत्र बहूनां मतमिति ।

विष्णोरित्यधिकृत्य ।

**नामसंकीर्तनं नित्यं क्षुतप्रस्खलितादिषु ।**
**वियोगं शीघ्रमाप्नोति सर्वत्र नात्र संशयः ॥ ६२ ॥**

इति विष्णुधर्म्मोत्तरे ।

अर्थ-विष्णुधर्म्मोत्तरमें लिखा है कि, छींकादि दोषशान्तिके निमित्त विष्णुका नाम सम्यक् प्रकारसे कीर्त्तन करनेसे दोषका नाश हो जाता है ॥ ६२ ॥

यात्रासमये परकीयस्वीयस्त्रीपुरुषयोस्ताडनादिनिषेधः ।

**स्वकीयां परकीयां वा स्त्रियं पुरुषमेव च ।**
**ताडयित्वा तु यो गच्छेत्तदन्तं तस्य जीवितम् ॥ ६३ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, जो मनुष्य यात्रासमयमें अपनी स्त्री वा पराई स्त्री अथवा पुरुषको मारकर यात्रा करता है उसकी शीघ्र मृत्यु होती है ६३

अपिच ।

**यात्राकाले तु संप्राप्ते मैथुनं यो निषेवते ।**
**रोगार्त्तः क्षीणकायश्च स निवर्त्तेत वा न वा ॥ ६४ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, जो मनुष्य यात्रासमयमें स्त्रीसेवन करके जाता है वह रोगसे युक्त और क्षीणकलेवर होकर फिर नहीं आता है ॥ ६४ ॥

अन्यच्च ।

**कृत्वा तु मैथुनं रात्रौ प्रभाते यः प्रतिष्ठते ।**
**नासौ प्रतिनिवर्त्तेत दुःखञ्च प्राप्नुयान्नरः ॥ ६५ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-रात्रिमें स्त्रीसंभोग करके जो मनुष्य प्रातः कालमें यात्रा करता है वह मनुष्य अनेक प्रकारके दुःखोंको भोगकर फिर नहीं आता है इस प्रकार ज्योतिषतत्त्वमें लिखा है ॥ ६५ ॥

अपरञ्च ।

**कटुतैलगुडक्षीरपक्वमांसाशनं तथा ।**
**भुक्त्वा यो यात्यसौ मोहाद्व्याधितः स निवर्त्तते॥६६॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखा है कि, कटुरस, तैल, गुड, दूध और पक्वमया

मांसको यात्रा समय न खावे, जो मनुष्य इन चीजोंको खाकर यात्रा करता है वह रोगी होकर उस स्थानसे दूसरे स्थानको चला जाता है ॥ ६६ ॥

प्रकारान्तरञ्च ।

**मार्जारयुद्धे कलहे प्रवृत्ते रजस्वलास्त्रीजननीनिषेधे ॥ ( क )**
**अकालवृष्टौ मृतसूतके च प्रस्थानयात्रा मरणं ध्रुवञ्च ॥६७॥**

अर्थ-बिल्लीके साथ बिल्लीकी लडाई होनेसे, कलह करके, अपनी रजस्वला स्त्रीको घरमें रखकर, माताके निषेध करनेपर वा अकालवृष्टि ( ख ) होनेसे और मरणाशौच वा जननाशौचमें जो मनुष्य यात्रा वा प्रस्थान ( दूरगमन ) करै तो उसको निश्चयही मृत्यु होती है अथवा मृत्युके समान रोगादि होते हैं ॥ ६७ ॥

अपिच ।

**वामे शवशिवाकुम्भा दक्षिणे गोमृगद्विजाः ।**
**नकुलः सर्वतो भद्रो न सर्पस्तु कदाचन ॥ ६८ ॥**

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है, कि, यात्रासमय वामभागमें शव ( मृतदेह ) शिवा ( जम्बूक ) और पूर्णकुम्भके देखनेसे शुभफल होता है, दक्षिणभागमें गो, मृग और ब्राह्मणके दर्शन होनेसे शुभफल होता है, नकुलका ( निउलाका ) जिस दिशामें दर्शन हो उसमें शुभफल होता है और सर्पके देखनेसे अमङ्गल होता है ॥ ६८ ॥

यात्राकाले शुभदर्शनम् ।

**धेनुर्वत्सप्रयुक्ता वृषगजतुरगा दक्षिणावर्त्तवह्नि-**
**र्दिव्यस्त्री पूर्णकुम्भो द्विजनृपगणिकाः पुष्पमालाः पताकाः ।**
**सद्योमांसं घृतं वा दधि मधु रजतं काञ्चनं शुक्लधान्यं**
**दृष्ट्वा श्रुत्वा पठित्वा फलमिह लभते मानवो गन्तुकामः ६९ (+)**

इति ज्योतिःसारसंग्रहे ।

अर्थ-यात्रासमयमें जिनके देखनेसे मंगल होताहै अब उनको कहते हैं-ज्यो-

( क ) "कुटुम्बकलहो गृहज्वलनमार्त्तव योषितां बिडालसमरं क्षुतं स्खलितमम्बरादेस्तथा । दुरुक्तमतिकोपतो महिषयोश्च युद्धं भवेत्प्रयाणसमये नृणामभिमतार्थविच्छित्तये" इति ज्योतिस्तत्त्वे ।

( ख ) अनावृष्टि विवाहमें कालशुद्धिप्रकरणमें लिखी है ।

× "तृणोदकाढ्येषु वनेषु मत्ताः क्रीडन्तु गावः सवृषाः सवत्साः । क्षीरं प्रमुञ्चन्तु सुखं स्वपन्तु शीतातपव्याधिभयैर्वियुक्ताः " इति । ज्योतिस्तत्त्वघृतमन्त्रं यात्राकाले शृणुयात् ।

तिःसारसंग्रहमें लिखाहै, कि, बछरासहित गाय, बैल, हाथी, घोडा, दाहिनीतर्फ अग्नि, उत्तमा स्त्री, पूर्णकुम्भ, द्विजाति, राजा, गणिका, फूलोंकी माला, पताका, नयामांस, घृत, दही, मधु, चाँदी, सोना, शुक्लधान्य ( गोधूम ) इन सब द्रव्योंके देखनेसे वा इनका शब्द सुननेसे अथवा इन शब्दोंका उच्चारण करनेसे यात्रीका मनोरथ सिद्ध होताहै ॥ ६९ ॥

अथ यात्रासमये माङ्गल्यद्रव्यदर्शनस्पर्शनादि
शुभफलानि ।

सिद्धार्थकादर्शपयोऽञ्जनानि बद्धैकपश्वामिषपूर्णकुम्भाः ।
उष्णीषभृङ्गारनृवर्द्धमानपुंयानवीणातपवारणानि ॥ ७० ॥ ( क )
दधिमधुघृतरोचनाकुमार्यो ध्वजकनकाम्बुजभद्रपीठशङ्खाः ।
सितवृषकुसुमायुधाम्बराणि मीनद्विजगणिकाप्रजनाश्च चारुवेपाः ७१ख
ज्वलितशिखिफलाक्षतेक्षुभक्ष्यद्विरदवराङ्कुशचामरायुधानि ।
मरकतकुरुविन्दपद्मरागस्फटिकमणिप्रमुखाश्च रत्नभेदाः ॥७२॥ (ग)
स्वयमथ रचितान्ययत्नतो वा यदि कथितानि भवन्ति मङ्गलानि ।
स जयति सकलां ततो धरित्रीं ग्रहणदृशालभने न युतैरुपास्य ७३घ

---

( क ) यात्रायां मङ्गलद्रव्याणि चतुर्भिः श्लोकैराह सिद्धार्थकेति । सिद्धार्थकाः श्वेतसर्षपाः, आदर्शो दर्पण, पयो दुग्ध, जलमिति केचित्तन्न पूर्णकुम्भस्यापि वक्ष्यमाणत्वात् । बद्ध एक पशु , आमिष मांस, उष्णीषः मस्तकवेष्टनवस्त्र, भृङ्गारो जलपात्रविशेषः, नृवर्द्धमानः ना पुरुष वर्द्धमान समृद्ध्या यशसा चोभयतः, पुयान नृयान दोलादि, आतपवारण छत्रमिति ।

(ख) कुमार्य कन्यका', भद्रपीठ भद्रासनम्, अम्बर श्वेतवस्त्र, गणिका वेश्या इत्यर्थः।

( ग ) ज्वलिताग्निश्चारुफलानि । अक्षता यवाः इक्षुदण्डः भक्ष्यद्रव्य उपदशादिः द्विरदवरो हस्तिश्रेष्ठ', मृदिति पाठे प्रशस्तमृत्तिकेत्यर्थ । मरकतकुरुविन्दौ प्रस्तरविशेषौ पद्मरागो मणिविशेषः ।

( घ ) एतानि कथितान्युक्तानि मङ्गलद्रव्याणि यदि स्वय रचितानि अयत्नतोऽकस्माद्रचितानि एतेषां नामानि यदि कथितानि यदा यस्य भवन्ति स राजा ततस्तदा कानिचिन्मङ्गलानि सिद्धार्थकादीनि ग्रहणेनोपास्य स्पृष्ट्वा कानिचिद्गणिकादीनि दृशा चक्षुषोपास्य दृष्ट्वा कानिचित्फलादीनि आलभनेनोपलब्धप्रकारेणोपास्य स्वीकृत्य कानिचिद् वीणागीतादीनि श्रुतेन श्रवणेनोपास्य श्रुत्वा सकलां धरित्रीं जयति ॥ इति ।

अर्थ–अब यात्रासमयमें मङ्गलकारक द्रव्यके देखनेसे और छूनेसे जो फल होताहै उसको कहते हैं–श्वेतसर्षप, दर्पण, ( सीसा ) दूध, ( मतान्तरमें जल ) अञ्जन, बँधाभया एक पशु, मांस, पूर्णकुम्भ, उष्णीष ( शिरोवेष्टनवस्त्रविशेष ) भृङ्गार ( जलपात्रविशेष गडुआ ) समृद्ध और यशस्वी मनुष्य, दोलादि,वीणा, छत्र, दधि, मधु, घृत, रोचना ( गोरोचना वा हरिद्रा )। कुमारी, ध्वजा, कनक, पद्म, भद्रासन, पीठ, शङ्ख, सफेद घोडा, कुसुम, आयुध, शुक्लवस्त्र, मत्स्य (मछली) द्विज, वेश्या, आप्तजन और सुवेषधारी मनुष्य, ज्वलिताग्नि, चारुफल, यव, इक्षुदण्ड, भक्ष्य द्रव्य, श्रेष्ठहाथी, अंकुश, चामर, शस्त्र,मरकत, कुरुविन्द (मस्तरविशेष ) पद्मराग ( मणिविशेष ) और स्फटिकादि मणि यह सब माङ्गल्य द्रव्य यात्रासमयमें निकट ( समीप ) होय अथवा अचानक उपस्थित होजाय तब राजा श्वेतसर्षपादि द्रव्यविशेषको ग्रहणकरै वेश्यादिको देखै फलादिको छूवै और वीणादिको श्रवण ( सुन ) करके यात्राकरनेसे समस्त पृथिवीको जीतसकाहै परन्तु चिरप्रवासी ( बहुत दिनोंकी ) यात्रामें सूर्य शुद्ध होना चाहिये उसको स्थानके अभावसे नीचे लिखते हैं ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ( × )

अथ स्वप्नदर्शनफलम् ।

**यान्यत्र मङ्गलामङ्गलानि निर्गच्छतां प्रदिष्टानि ।**
**स्वप्नेष्वपि तानि शुभाशुभानि विष्ठानुलेपनं धन्यम् ॥७४॥ (१)**

अर्थ–अब स्वप्नदेखनेका फल कहते हैं–यात्राविषयमें जो सब माङ्गल्यामाङ्गल्य द्रव्य कहे हैं स्वप्नमेंभी उन्ही सब द्रव्योंके देखनेसे और छूनेसे तिसि प्रकार फल होता है किन्तु स्वप्नमें विष्ठालेपन करनेसे धनप्राप्ति होती है ॥ ७४ ॥

---

(×) " चिरप्रवासयात्रायां गृहे कर्णस्य वेधने।चूडाकृतौ प्रतिष्ठायां भानुशुद्धिर्विधीयते इति व्यासवचनम् ।

( १ ) अत्र दृष्टस्य स्वप्नस्य शुभाशुभफलमाह–यानीति । निर्गच्छतां जनानामत्र यात्रायां मङ्गलान्यमङ्गलानि द्रव्याणि यानि प्रदिष्टानि कथितानि तानि स्वप्नेऽपि दृष्टानि शुभाशुभानि । किन्तु स्वप्ने विष्ठानुलेपनं धन्यं धनप्रदमिति संक्षेपः । विस्तरश्च बृहद्यात्रायां द्रष्टव्यः । तथा " सर्वाणि शुक्लानि सुशोभनानि कार्पासभस्मास्थिकपालवर्ज्यम् । सर्वाणि कृष्णान्यतिनिन्दितानि गोहस्तिदेवाद्विजवर्जितानि " अत्र च सुस्वप्नदर्शने पुनर्न शयनं कार्यम् । दुःस्वप्नदर्शने तु पुनःशयनं विहितमेव । यथा बृहद्यात्रायाम्–"दृष्टं स्वप्नं शोभनं नेह सुप्यात्पश्चाद्दृष्टो यश्च पाकं विधत्ते।शंसेद्दृष्टं तज्ज्ञसाधुद्विजेभ्यस्ते चाशीर्भिःपूजयेयुर्नरेन्द्रम् । भूयः प्रस्वपनं नचास्य कथनं गङ्गाभिषेको जपः स्वस्ति स्वस्त्ययनं निवेदनमपि मातङ्गवाश्वत्थयोः । विप्रेभ्यश्च तिलान्नहेमकुसुमैः पूजा यथाशक्तितः पुण्यं भारतकीर्तनञ्च कथितं दुःस्वप्नविच्छित्तये " नाधिकं च विस्तरभयादुपेक्षितम् ।

अथ यात्रासमये वायोः शुभा शुभलक्षणम् ।

**अनुलोमगते प्रदक्षिणे सुरभौ देहसुखेऽनिले गतः । (२)**
**तिमिराणि गभस्तिमानिव प्रसभं हन्ति बलानि विद्विषाम् ॥७५॥**

अर्थ-अब यात्रासमयमें वायुके शुभाशुभलक्षण कहते हैं-यात्रासमयमें यदि सुगन्धियुक्त अनुकूल वायु चले तो यात्रीको सुख होता है जिस प्रकार सूर्यके उदय होनेसे समस्त अन्धकारका नाश होजाता है तिसी प्रकार उक्तवायुमें यात्रा करनेसे राजा शत्रुओंका नाश करता है ॥ ७५ ॥

अपिच ।

**बलिकर्मणि यात्रायां प्रवेशे नववेश्मनः ।**
**महोत्सवे च मांगल्ये तत्र स्त्रीणां ध्वनिः शुभः ॥ ७६ ॥**

इति मत्स्यसूक्ते ।

अर्थ-मत्स्यसूक्तमें लिखा है कि, बलिकर्ममें, यात्रामें नवीन घरमें प्रवेशसममें, महोत्सवमें और मांगल्यकर्ममें स्त्रियोंकी ध्वनि शुभ होती है ॥ ७६ ॥

इति यात्राप्रकरणम् ।

इति वंशावरेल्यांतर्वर्तिकान्यकुलभूषणभारद्वाजगोत्रत्रिपाठ्युपनामकेन पण्डितवंकिलालात्मजेन श्यामसुन्दरशर्मणा सम्पादिते भाषाटीकयाविभूषिते ज्योतिषतत्त्वसुधार्णवे यात्राप्रकरणं नाम षष्ठस्तरङ्गः ॥ ६ ॥

---

(२) वायोः शुभफलमाह-अनुलोमेति । गन्तव्यदिगनुकूलगतौ सुगन्धे शरीरसुखजनके वायौ गतः पुमान् शत्रूणां बलानि प्रसभं हठात् हन्ति सूर्य्योऽन्धकारं नित्यमिव । एतेन प्रतिकूलोऽप्रदक्षिणः दुर्गन्धो झञ्झावायुर्नेष्ट इति ।

# सप्तमस्तरङ्गः ७.

अथ नौकाघटनम् ।

शुभहरिघटलग्ने देवराड्युग्मिशाखा ।
त्रिनयनविधियाम्यद्वन्द्वसर्पान्त्यभेषु ।
सुकरणतिथियोगे शुक्रजीवार्कवारे
तरणिघटनमिष्टं चन्द्रताराविशुद्धौ ॥ १ ॥ (अ)

इति दीपिकायाम् ।

अर्थ-अब नौका जडवानेका मुहूर्त कहते हैं-दीपिकामें लिखा है कि, मिथुन कन्या सिंह और तुलालग्नमें, ज्येष्ठा, मूल, विशाखा, आर्द्रा, रोहिणी, भरणी, कृत्तिका, आश्लेषा, और रेवती नक्षत्रमें, शुभकरण, शुभतिथि और शुभयोगमें, शुक्र, बृहस्पति और रविवारमें चन्द्रमा और ताराके शुद्ध होनेसे नौका जडवाना चाहिये किसी २ आचार्यका मत है कि, " याम्यद्वन्द्वसर्पान्त्यभेषु " इसको पढकर उपरोक्त नक्षत्रोंके सिवाय अन्य नक्षत्रोंमें नौका बनवाना चाहिये ॥ १ ॥

अन्यच्च ।

अश्विनीरेवतीहस्तशतभं मृगशिरास्तथा ।
अनुराधा तथा स्वातिश्चित्रा चैव प्रशस्यते ॥ २ ॥
शुक्रेन्दुगुरुवारेषु रिक्तावर्जे तिथौ पुनः ।
पापाहश्च परित्यज्य नौकाघटनमुत्तमम् ॥ ३ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, अश्विनी, रेवती, हस्त, शतभिषा, मृगशिर, अनुराधा, स्वाति और चित्रानक्षत्रमें, शुक्र, सोम और बृहस्पतिवारमें रिक्ताभिन्न तिथिमें, मासदग्धादियुक्त पापाहको त्यागकरके नौका बनवाना चाहिये ॥ २ ॥ ३ ॥

(अ) नौकाघटनमाह-शुभेति । शुभं मिथुनं कन्या च हरिः सिंहः घटस्तुला लग्ने देवराड्युग्मं ज्येष्ठामूले विशाखा त्रिनयनमार्द्रा रोहिणीयाम्यद्वन्द्वं भरणी कृत्तिका सर्पः आश्लेषा अन्त्यं रेवती एतेषु तरणिघटनं नौकानिर्माणमभिष्टम् । शेषं सुगमम् । इति । केचित्तु याम्यद्वन्द्वसर्पान्त्यभेष्विति पाठं कृत्वा ज्येष्ठादिसर्पान्तनक्षत्रेतरेषु तरणिघटनं वदन्ति ।

अथ घटनस्थानान्नौकाचालनम्।

**शुभाह्वे विष्णुयुग्मेन्दुभगमैत्राश्विपाणिषु।**
**चालनं घटनस्थानान्नावः शुभतिथीन्दुषु ॥ ४ ॥**

इति दीपिकायाम्।

अर्थ–अब नौका चलानेका मुहूर्त्त कहतेहैं दीपिकामें लिखाहै कि,सोम, बुध, बृहस्पति और शुक्रवारमें, श्रवण, धनिष्ठा, मृगशिर, पूर्वाफाल्गुनी, अनुराधा, अश्विनी और हस्त नक्षत्रमें, शुभ तिथिमें और शुभ चन्द्रमामें नौकाको चलाना चाहिये ॥ ४ ॥

अथ नौकायात्रा।

**अश्विकरेज्यसुधानिधिपूर्वा मैत्रधनाच्युतभेषु सुलग्ने।**
**तारकयोगतिथीन्दुविशुद्धौ नौगमनं शुभदं शुभवारे ॥ ५ ॥**

इति दीपिकायाम्।

अर्थ–अब नौकामें चढकर यात्रा करनेका मुहूर्त्त कहते हैं–दीपिकामें लिखाहै कि, अश्विनी, हस्त, पुष्य, मृगशिर, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, अनुराधा, धनिष्ठा और श्रवण, नक्षत्रमें, शुभलग्नमें, शुभतारामें, शुभयोगमें, शुभतिथिमें शुभवारमें और गोचरमें चन्द्रमाके शुद्ध होनेसे नौकामें चढकर यात्रा करनी चाहिये ॥ ५ ॥

अथ वाणिज्यकरणम्।

**क्षिप्राणि यानि ऋक्षाणि चराणि च मृदूनि च।**
**वाणिज्ये तानि शस्यन्ते तिथिरिक्तां विवर्जयेत् ॥ ६ ॥**

इति विष्णुधर्मोत्तरे।

अर्थ–वाणिज्य करनेका मुहूर्त्त कहतेहैं–विष्णुधर्मोत्तरमें लिखाहै कि, पुष्य, अश्विनी, हस्त, स्वाति, पुनर्वसु, श्रवण, धनिष्ठा, शतभिषा, चित्रा, अनुराधा, मृगशिर और रेवती नक्षत्रमें रिक्ताभिन्न तिथिमें वाणिज्यकर्म करना चाहिये॥६॥

अथ कुसीदकरणम्।

**प्रतिपद्द्वादशीषष्ठी नक्षत्राणि ध्रुवाणि च ॥**
**कुसीदेवर्जनीयानि दिनं सूर्यसुतस्य च ॥ ७ ॥**

इति विष्णुधर्मोत्तरे।

अर्थ–अब ऋण देनेका ( कर्ज देनेका ) मुहूर्त्त कहते हैं–विष्णुधर्मोत्तरमें लिखाहै कि, प्रतिपदा. द्वादशी और षष्ठी तिथिको छोडकर अन्य तिथिमें,

उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा और रोहिणीनक्षत्रको छोडकर अन्य नक्षत्रोंमें और शनिवारको छोडकर अन्यवारोंमें कर्ज देना चाहिये ॥ ७ ॥

अथ नक्षत्रविशेषे रोगकथनम् ।

अश्विन्यां दशरात्रेण ज्वरितः कल्यतामियात् ।
भरण्यां संशयप्राप्तिरनले दशभिर्दिनैः ॥ ८ ॥
रोहिण्यां पञ्चदिवसैश्चतुर्भिर्मृगशीर्षके ।
आर्द्रायां संशयः पञ्चदशाहश्च पुनर्वसौ ॥ ९ ॥
पुष्ये च पञ्चदिवसैर्मृत्युराश्लेषया ध्रुवम् ।
मघायां सप्तभिः पूर्वफाल्गुन्यामेकवासरम् ॥ १० ॥
सप्ताह उत्तरफाल्गुन्यां हस्तायां पञ्चभिर्दिनैः ।
चित्रायां प्राणसन्देहः स्वात्यां चैव न जीवति ॥ ११ ॥
विशाखायां सप्तदिनैर्मित्रे च दशभिर्दिनैः ।
ज्येष्ठायाञ्च ध्रुवं मृत्युर्मूले कल्यं चतुर्दिनम् ॥ १२ ॥
पूर्वाषाढासु सन्देहो विश्वे पञ्चदिनै पटुः ।
श्रवणे पंचभिः कल्यो धनिष्ठे प्राणसंशयः ॥ १३ ॥
शताख्ये प्राणसन्देहः पूर्वाभाद्रपदे तथा ।
संशयश्चोत्तराभाद्रे रेवत्यां पंचवासरैः ॥ १४ ॥

इति ज्योतिःसारे माण्डव्यः ।

अर्थ–अब नक्षत्रोंमें रोगकी आयु कहते हैं–अश्विनी नक्षत्रमें ज्वर होनेसे दशरात्रितक पीडा भोगनी पडती है, इसी प्रकार भरणीमें मृत्यु होती है, कृत्तिकामें दशदिनतक पीडा भोगनी होती है, रोहिणीमें पांचदिन, मृगशिरमें चारदिन, आर्द्रामें मृत्यु, पुनर्वसुमें पन्द्रहदिन, पुष्यमें पांचदिन, आश्लेषामें जीवनतक रोग रहताहै, मघामें सातदिन, पूर्वाफाल्गुनीमें एकरात्रि, उत्तराफाल्गुनीमें सात दिन, हस्तमें पांच दिन, चित्रामें प्राणशेषपर्यन्त, स्वातिमें मृत्यु, विशाखामें सात दिन, अनुराधामें दश दिन, ज्येष्ठामें मृत्यु, मूलमें चार दिन, पूर्वाषाढामें मृत्यु, उत्तराषाढामें पांच दिन, श्रवणमें पांच दिन, धनिष्ठा, शतभिषा, पूर्वाभाद्रपदा और उत्तराभाद्रपदामें मृत्यु और रेवतीनक्षत्रमें जिस मनुष्यको ज्वर होय उसको पांचदिनतक पीडा भोगनी होती है ॥८॥९॥१०॥११॥१२॥१३॥१४॥

आपिच।

कृत्तिकायां यदा कश्चिद्व्याधिरुत्पद्यते ध्रुवम्।
नवरात्रं भवेत्पीडा रोहिण्याञ्च त्रिरात्रकम् ॥ १५ ॥
पञ्चरात्रं मृगशिरसि चार्द्रायां सप्तरात्रकम्।
पुनर्वसौ पञ्चरात्रं पुष्यायाञ्च तथैव च ॥ १६ ॥
आश्लेषायां नवरात्रं मासमेकं मघासु च।
द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम् ॥ १७ ॥
हस्तायां सप्तमे मोक्षश्चित्रायामर्द्धमासकम्।
मासद्वयं तथा स्वात्यां विशाखायाञ्च विंशतिः ॥ १८ ॥
मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम्।
मूलेन जायते मोक्षः पूर्वाषाढे त्रिपंचकम् ॥ १९ ॥
उत्तराषाढे विंशत्या द्वौ मासौ श्रवणासु च।
धनिष्ठायामर्द्धमासो वारुण्यां च दशाहकम् ॥ २० ॥
न च भाद्रपदे मोक्ष उत्तरायां त्रिपञ्चकम्।
रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनी ॥ २१ ॥
प्राणैर्विमुच्यते नित्य भरण्यां नात्र संशयः।
कौशिकेन समादिष्टा नक्षत्रव्याधिसम्भवाः ॥
नक्षत्रं प्रतिकर्त्तव्यं नक्षत्रमथ जानता ॥ २२ ॥ (क)

अर्थ-ज्योतिःसारसंग्रहमें लिखा है कि, कृत्तिकानक्षत्रमें रोग उत्पन्न होनेसे

---

(क) "कृत्तिकासु यदा व्याधिर्नृणां सम्प्रतिपादितः। नवरात्रं भवेत्पीडा त्रिरात्रं रोहिणीषु च। मृगशीर्षे पञ्चरात्रमार्द्रायां मुच्यतेऽसुभिः। पुनर्वसौ तथा पुष्ये सप्तरात्रं विधीयते। दशरात्रं तथाश्लेषे मासमेकं मघासु च। द्वौ मासौ पूर्वफाल्गुन्यामुत्तरासु त्रिपञ्चकम्। हस्ते च सप्तमे मोक्षश्चित्रायामर्द्धमासकम्। मासद्वयं तथा स्वात्यां विशाखे दिनविंशतिः। मैत्रे चैव दशाहानि ज्येष्ठायामर्द्धमासकम्। मूलेन जायते मोक्षः पूर्वाषाढे त्रिपञ्चकम्। उत्तरे विंशतिर्ज्ञेया द्वौ मासौ श्रवणे तथा। धनिष्ठायामर्द्धमासं वारुण्याञ्च दशाहकम्। न च भाद्रपदे मोक्ष उत्तरासु त्रिपञ्चकम्। रेवत्यां दिनविंशत्या चाहोरात्रं तथाश्विनी। प्राणैर्विमुच्यते नित्य भरण्यां नात्र संशयः। कौशिकेन समादिष्टा नक्षत्रव्याधिसम्भवाः। नक्षत्रं प्रतिकर्त्तव्यं नक्षत्रमथ जानता" ॥

इति ज्योतिस्तत्त्वधृतकौशिकवचनम्।

नौ रात्रितक पीडा होवी है, इसी प्रकार रोहिणीमें तीन रात्रितक, मृगशिरमें पांचरात्रि, आर्द्रामें सात रात्रि पुनर्वसु और पुष्यमें पांचरात्रि, आश्लेषामें नौ रात्रि, मघामें एकमास, पूर्वाफाल्गुनीमें दो मास, उत्तराफाल्गुनीमें पन्द्रहदिन, हस्तमें सातदिन, चित्रामें अर्द्ध मास, स्वातिमें दो मास, विशाखामें वीसरात्रि, अनुराधामें दशदिन, ज्येष्ठामें अर्द्धमास, मूलमें मृत्यु, पूर्वाषाढामें पन्द्रह दिन, उत्तराषाढामें वीस दिन श्रवणमें दो महिने, धनिष्ठामें अर्द्धमास, शतभिषामें दशदिन, रेवतीमें वीसदिन, अश्विनीमें एक दिन, और भरणी नक्षत्रमें रोग उत्पन्न होनेसे मृत्यु होती है इसमें कुछ संशय नहीं है इस प्रकार कौशिकने कहा है. नक्षत्रके जाननेवाले मनुष्यको इसके प्रति विधान करना चाहिये ॥ १९-२२ ॥

अथ प्रतीकारा भीमपराक्रमे ।

कृत्तिकायां पिष्टकच्छागमुखे दध्युदकञ्च देयम् । रोहिण्यां पिष्टकगोमुखे शाकम् । मृगशिरसि पिष्टकमृगमुखे माषो देयः । आर्द्रायां पिष्टकगोमुखे रक्तम् । पुनर्वसौ पिष्टकवराहमुखे पटोलम् । पुष्ये पिष्टकच्छागमुखे पायसम् । आश्लेषायां पिष्टकवराहमुखे घृतम् । मघायां पिष्टकवानरमुखे तिलाः । पूर्वाफाल्गुन्यां पिष्टकवानरमुखे मुद्गपूपिका । उत्तराफाल्गुन्यां पिष्टकबलीवर्दमुखे शाकम् । हस्तायां पिष्टकमहिषमुखे पुष्करमूलम् । चित्रायां पिष्टकव्याघ्रमुखे तगरपुष्पम् । स्वात्यां पिष्टकमार्जारमुखे तिलाः । विशाखायां पिष्टकव्याघ्रमुखे गुडभक्तम् । अनुराधायां पिष्टकमृगमुखे कुलत्थम् । ज्येष्ठायां पिष्टकमूषिकमुखे धान्याकम् । मूले पिष्टकमार्जारमुखे तिलाः । पूर्वाषाढायां पिष्टककुम्भीरमुखे वचा । उत्तराषाढायां पिष्टकवृषमुखे शाकभक्तम् । श्रवणायां पिष्टकमहिषीमुखे रक्तम् । धनिष्ठायां पिष्टकनरमुखे शाकभक्तम् । शतभिषायांपिष्टकवानरमुखे पिप्पली । पूर्वाभाद्रपदायां पिष्टकनरमुखेसिततण्डुलाः।उत्तराभाद्रपदायामप्येवं रेवत्यां

**पिष्टकवानरमुखे गुडभक्तम् । अश्विनीभरण्योरप्येवम् । एवं नक्षत्रदोहदे कृते ज्वरा विनश्यंति । एतद्विधानन्तु प्रथमं गन्धपुष्पधूपदीपनैवेद्यैः सदीपमाल्यपताकाभिः प्रपूज्य कार्यम् ॥ २३ ॥**

अर्थ-अब नक्षत्रमें ज्वरकी पीडा भोगनेका प्रतीकार। कहते हैं-भीमपराक्रममें लिखा है कि, कृत्तिका नक्षत्रमें ज्वर होनेसे आटेकी एक बकरी बनाकर गन्धपुष्पादिसे उसकी पूजा करनी चाहिये फिर मुखमें दही और पानीको डाले इस प्रकार करनेसे ज्वर दूर हो जाता है, इसी प्रकार रोहिण्यादिनक्षत्रमें ज्वर होनेसे आटेकी गौ और मृगादिको बनाकर पूजन करके उसके मुखमें शाक और माषादिको देनेसे ज्वर दूर होता है, संस्कृत अतिसरल है अतएव सबका अनुवाद नहीं करते हैं ॥ २३ ॥

अथ विरुद्धनक्षत्रादौ रोगकथनम् ।

**उरगशतभिषार्द्राज्येष्ठयाम्यत्रिपूर्वा- ( × )**
**स्वपि च रविजभौमे चार्कवारेण योगे ।**
**यदि भवति चतुर्थी द्वादशी भूतषष्ठी**
**निगदित इह जन्तोर्नाशकालः प्रविष्टः ॥ २४ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-विरुद्धनक्षत्रादिमें रोग उत्पन्न होनेसे उसका फल कहते हैं-ज्योतिषतत्त्वमें लिखा है कि, आश्लेषा, शतभिषा, आर्द्रा, ज्येष्ठा ( मतान्तरसे स्वाति और मूल ) भरणी, पूर्वाफाल्गुनी, पूर्वाषाढा और पूर्वाभाद्रपदा इन सब नक्षत्रके अन्यतम नक्षत्र शनि, मंगल वा रविवारमें होनेसे यदि चतुर्थी, द्वादशी, चतुर्दशी, वा षष्ठी तिथि होय और उसमें जो रोग उत्पन्न होय तो उक्त रोगीकी निश्चयही मृत्यु होती है ॥ २४ ॥

अन्यच्च ।

**आर्द्राश्लेषास्वातिशाक्रे यस्य रोगो भवेद्ध्रुवम् ।**
**धन्वन्तरेरप्यसाध्यो सद्यः प्राणैर्वियुज्यते ॥२५॥(क)**

इति दीपिकायाम् ।

अर्थ-दीपिकामें लिखा है कि, आर्द्रा, आश्लेषा स्वाति और ज्येष्ठा नक्षत्रके

( × ) स्वातिमूलात्रिपूर्वा इति जातकचन्द्रिकायां पाठः ।

( क ) आर्द्रादिषु योगे सति मृत्युमाह-आर्द्रेति । आर्द्रादिषु यस्य रोगः भवेत्स सद्यो म्रियत इत्यर्थः ।

अन्यतम नक्षत्रमें जिस मनुष्यको रोग होय उसको धन्वन्तरिभी चिकित्सा करके नहीं जिला सकते हैं ॥ २५ ॥

अपरञ्च ।

शिवशतभिषधातृस्वातिमूलेन्द्रनागे ( ख )
रविशनिकुजवारे भूतषष्ठीनवम्याम् ।
इह हि मरणयोगे यो ज्वरेणाभिभूतः
पशुपतिसदृशश्चेत्सोऽपि मृत्युं प्रयाति ॥ २६ ॥ ( ग )

इति दीपिकाटीकायाम् ।

अर्थ—दीपिकाके टीकामें लिखा है कि आर्द्रा, शतभिषा, रोहिणी, स्वाति, मूल, ज्येष्ठा और आश्लेषा नक्षत्रके अन्यतम नक्षत्र, रवि, शनि वा मङ्गलवारके अन्यतम वार और चतुर्दशी, षष्ठी वा नवमीके अन्यतम तिथि यदि एक समयमें होय और उसमें जिस मनुष्यको रोग उत्पन्न होय तो रोगी शिवके समान होनेसेभी मृत्युको प्राप्त होता है ॥ २६ ॥

अपिच ।

सप्ताहं वारदोषे स्याद्द्विगुणं तिथिवारयोः ।
तिथिनक्षत्रयोर्मासं त्रिभिर्युक्तो न जीवति ॥ २७ ॥

इति जातकचन्द्रिकायाम् ।

अर्थ—जातकचन्द्रिकामें लिखा है कि, वारदोषमें रोग सात दिन रहता है, तिथि और वार दुष्ट होनेसे चौथे दिनतक रोगकी पीडा भोगनी पडती है, तिथि और नक्षत्र दूषित होनेसे व्याधि एक मासतक रहती है और वार, तिथि और नक्षत्र दूषित होनेसे रोगीकी मृत्यु होती है ॥ २७ ॥

अन्यच्च ।

आधाने जन्मनक्षत्रे निधने प्रत्यरौ तथा ।
व्याधिरुत्पद्यते यस्य क्लेशस्तस्य भवेद्ध्रुवम् ॥ २८ ॥

इति जातकचन्द्रिकायाम् ।

अर्थ—जातकचन्द्रिकामें लिखाहै कि, आधाननक्षत्रमें, जन्मनक्षत्रमें और जन्मनक्ष-

( ख ) स्वातिमूलाग्निपूर्वा इति ज्योतिःसारे पाठः ।
( ग ) पशुपतिसमयोगी इति जातकचन्द्रिकायां पाठः ।
सम मघने प्रथमचरणे उरगशतभिषार्द्रा । इति पाठः ।

त्रसे गिनकर सातवें वा पांचवें नक्षत्रमें जिस मनुष्यको रोग उत्पन्न होय तो उसको अत्यन्त क्लेश भोगना पडता है ॥ २८ ॥

अपरञ्च ।

जन्मभे निधनर्क्षे वा प्रत्यरौ च विपत्करे ।
यदि व्याधिर्भवेदब्दं क्लेशो वा मरणं भवेत् ॥ २९ ॥

इति ज्योतिःसारे ।

अर्थ-ज्योतिःसारमें लिखा है कि, जिस मनुष्यके जन्मतारामें, निधनतारामें प्रत्यरितारामें और विपत्तारामें व्याधि उत्पन्न होय तो उस मनुष्यको एक वर्ष-तक क्लेश भोगना पडता है वा मृत्यु होती है ॥ २९ ॥

प्रकारान्तरञ्च ।

जन्माधाने निधनभे प्रत्यरौ च विपत्करे ।
यदि व्याधिः समुत्पन्नः क्लेशाय मरणाय च ॥३०॥

इति हारीतः ।

अर्थ-हारीतने कहाहै कि, जन्म, आधान, निधन ( सप्तमतारा ) प्रत्यरि ( पञ्चमतारा ) और विपत् ( तीसरे ) तारामें रोग उत्पन्न होनेसे अत्यन्त क्लेश होता है और मृत्युभी होजाती है ॥ ३० ॥

अथ सर्पदंशे नक्षत्रवशेन मरणम् ।

मूलमघार्द्राश्लेषाभरणीविशाग्निदैवतेषु नरः ।
गरुडप्रियोऽपि दष्टो न प्राणिति दन्दशूकेन ॥३१॥

इति ज्योतिस्तत्त्वे ।

अर्थ-अब सर्पके काटेहुए मनुष्यकी नक्षत्रसे मृत्यु कहते हैं-ज्योतिषतत्त्वमें लिखा है कि, मूल, मघा, आर्द्रा, आश्लेषा, भरणी, विशाखा और कृत्तिका नक्ष-त्रमें यदि किसी मनुष्यको सर्प काटै तब वह गरुडके प्रिय होनेसेभी यमा-लयको पाता है ॥ ३१ ॥

अपिच ।

मूलमघार्द्राश्लेषाभरणीवसुदेवभेषु नरः ।
गरुडप्रियोऽपि दष्टो न प्राणिति दन्दशूकेन ॥ ३२ ॥

इति दीपिकायाम् ।

अर्थ-दीपिकामें लिखा है; कि, मूल, मघा, आर्द्रा, आश्लेषा, भरणी, वा धनिष्ठा नक्षत्रमें यदि किसी मनुष्यको सर्प काटै तो वह गरुडके प्रिय होनेसेभी मृत्युको प्राप्त होता है ॥ ३२ ॥

अथ मरणप्रदरोगकथनम् ।

**यद्यत्र चन्द्रमास्तस्य गोचरे चाशुभप्रदः ।**
**तदा नूनं भवेन्मृत्युः सुधासंसिक्तदेहिनः ॥ ३३ ॥(×)**

अर्थ—अब मृत्युप्रद रोग कहते हैं—जिस मनुष्यके रोग उत्पन्न होनेके समयमें चन्द्रमा गोचरमें अशुभ होय तो उसकी अमृतकी देह होनेसेभी मृत्युको प्राप्त होती है ॥ ३३ ॥

अपिच ।

**यदा ताराः शुभाः पुंसां नक्षत्रस्याशुभं फलम् ।**
**तत्र नात्यन्तिकं ज्ञेयमेवमन्यत्र पण्डितैः ॥ ३४ ॥**

इति ज्योतिःसारे ।

अर्थ—ज्योतिःसारमें लिखा है कि, रोग उत्पन्न होनेके समय अशुभ नक्षत्र होनेसेभी यदि मनुष्यका तारा शुद्ध होय तो उस मनुष्यकी मृत्यु नहीं होती है ॥ ३४ ॥

अथ रोगस्य शुभाशुभप्रश्नः ।

**चरराशौ विलग्नस्थे द्विदेहार्द्धे च पश्चिमे ।**
**रोगस्योपशमः प्रश्ने विपर्यासे विपर्ययः ॥ ३५ ॥ (क)**

इति ज्योतिःसारसंग्रहे ।

अर्थ—अब रोगी मनुष्यका शुभाशुभ लक्षण प्रश्नद्वारा कहते हैं—ज्योतिःसारसंग्रहमें लिखा है कि, यदि चरराशि और द्व्यात्मक राशिका शेषार्द्ध प्रश्नलग्न होय तो रोगीको शीघ्र आरोग्य होता है और यदि स्थिरराशि और द्व्यात्मक राशिका पूर्वार्द्ध प्रश्नकी लग्न होय तो वह मनुष्य चिररोगी होता है ॥ ३५ ॥

(×) पूर्वोक्तार्द्राश्लेषास्वातीत्यादीनां मूलमघार्द्राश्लेषेत्यादीनां चापवादमाह—यद्यत्र चन्द्रेति । स्पष्टार्थः । यदि चन्द्रे गोचरशुभदे रोगः स्यात्तदा न मृत्युः किन्तु सशम इत्यर्थः । अत्र चान्यत्र विशेष उक्तः । शिवशतभिषपादुस्वातीत्यादि "सप्ताह वारदोषेण द्विगुण तिथिदोषतः । तिथिनक्षत्रयोर्मासस्त्रिभिः कालो न संशयः" तथा सर्पदष्टस्यान्यत्र विशेष उक्तः । "मूलेशयाम्यशक्राग्निमघाश्लेषाश्च कृत्तिका । एषु दष्टो दन्दशूकैस्तस्य मृत्युर्न संशयः । मूलेशमघाश्लेषाबहुलभरणीविशाखासु नरः । गरुडप्रियोऽपि दष्टो न प्राणिति दन्दशूकेन" इति ।

(क) प्रश्नलग्नाद्रोगिशुभाशुभमाह—चरेति । चरराशौ लग्नगते द्व्यात्मकस्य शेषार्द्धभागे च प्रश्ने सति रोगस्योपशमः स्यात् । विपर्यासे स्थिरराशौ लग्न गते द्व्यात्मकस्य पूर्वभागे ■ विपर्ययश्चिररोगित्वं स्यात् ॥ इति ।

अथ रोगोपशमनयोगकथनम्।

**शुभग्रहाः सौम्यनिरीक्षिताश्च विलग्नसप्ताष्टमपञ्चमस्थाः।**
**त्रिषड्दशायेषु निशाकरः स्याच्छुभं वदेद्रोगनिपीडितानाम्॥३६॥ (ख)**

इति ज्योतिषसारसंग्रहे

अर्थ-अब रोगोपशमयोग कहते हैं-ज्योतिःसारसंग्रहमें लिखाहै कि, प्रश्नलग्नमें वा प्रश्नलग्नके सातवें, आठवें वा पांचवें स्थानमें शुभग्रह होय और उनको अन्य शुभ ग्रह देखते हों तब रोगी मनुष्यकी कुशल जाननी चाहिये और यदि प्रश्नलग्नके तीसरे छठे, दशवें वा ग्यारहवें स्थानमें चन्द्रमा स्थित होय तोभी रोगी मनुष्यको शुभ होताहै॥ ३६॥

अथ प्रश्ने मरणसूचकयोगौ।

**पापर्क्षे प्रश्नलग्ने तु पापसंयुतवीक्षिते।**
**तथैव चाष्टमे स्थाने रोगिणां मरणं वदेत्॥ ३७॥ (ग)**

इति ज्योतिःसारसंग्रहे।

अर्थ-अब प्रश्नलग्नसे रोगी मनुष्यकी आयु कहते हैं-ज्योतिःसारसंग्रहमें लिखा है कि, यदि प्रश्नलग्न पापग्रहोंकी होय और उसमें पापग्रह स्थित होय वा प्रश्नलग्नको पाप ग्रह देखतेहों तो रोगी मनुष्यकी मृत्यु होती है। प्रश्नलग्नका आठवां स्थान पापग्रहोंका घर होय वा पाप ग्रह उसमें होय अथवा पापग्रह उसको देखते हों तो रोगी मनुष्यकी मृत्यु होतीहै॥ ३७॥

अथ परदेशस्थरोगादिज्ञानम्।

**मन्दः पापसमेतो लग्नान्नवमः शुभैरयुतदृष्टः।**
**रोगार्त्तः परदेशे चाष्टमगो मृत्युकर एव॥ ३८॥ (घ)**

इति ज्योतिःसारसंग्रहे।

अर्थ-अब परदेशमें गयेहुए मनुष्यके रोग और मृत्युका ज्ञान कहते हैं-ज्योतिःसारसंग्रहमें लिखाहै कि, यदि पापग्रहोंके साथ शनिग्रह जन्मलग्नके नववें

(ख) प्रश्ने रोगोपशममाह-शुभेति। लग्नस्य सप्तमाष्टमपञ्चमेषु मध्ये यत्र कुत्रापि स्थिताः शुभाः शुभदृष्टा यदि स्युस्तदारोगिणां कुशलं शुभं वदेत्। तथा त्रिषड्दशायेषु स्थिते चन्द्रे शुभं कुशलं वदेदित्यर्थः। इति।

(ग) प्रश्ने मृत्युयोगमाह-पापर्क्ष इति। पापग्रहलग्ने पापयुक्ते पापदृष्टे च रोगिणां मरणं स्यात्। तथैवाष्टमस्थाने पापग्रहे पापयुक्ते पापदृष्टे च मरणम्। दैवज्ञवल्लभायामप्युक्तम् "लग्नस्थितो वाष्टमसंस्थितो वा पापग्रहो यस्य ■ जन्मराशिम्। निरीक्षते तस्य गदार्दितस्य निःसंशयं मृत्युमुदाहरन्ति। पृष्ठोदये विलग्ने क्रूराः केन्द्राष्टगः शशी यस्य। रोगार्त्तस्य विनाशो दृष्टे वा बल्युतैः पापैः" इति।

(घ) प्रश्नलग्नाद्देशान्तरस्थस्य रोगज्ञानमाह-मन्द इति। मन्दः शनिः पापयुक्तः

स्थानमें शुभग्रह युक्त वा शुभग्रहोंकी दृष्टि न होय तब परदेशमें मनुष्य रोगी होताहै और पापग्रहोंके साथ शनैश्चर यदि प्रश्नलग्नके आठवें होय और शुभयुक्त वा शुभग्रहोंकी दृष्टि उसपर न होय तो विदेशमें मनुष्य रोगी होकर मरताहै॥३८॥

अथ मनुष्यादीनां परमायुः प्रमाणम् ।

पञ्चाहानखभूसमा नृकरिणां व्याघ्राद्यजादेर्नृपा
गोकाल्योर्हिजिनास्तथोष्ट्रखरयोस्तत्त्वानि सूर्याः शुनः ।
अश्वायुः परमं रदा नृवदिहानीयायुरेषा परा-
युर्निघ्नं नृपवायुषा च विहृतं तेषां स्फुटायुर्भवेत् ॥ ३९ ॥

इति ग्रन्थान्तरे।

अर्थ—अब मनुष्यादिकी परमायुका प्रमाण कहते हैं-ग्रन्थान्तरमें लिखाहै कि, मनुष्य और हाथीकी आयु एकसौ वीस वर्ष पांच दिनकी होती है, इसी प्रकार व्याघ्र और छागादिकी आयु सोलह वर्षकी, गाय और भैंसकी आयु चौबीस वर्षकी ऊंठ और गधेकी आयु पचीसवर्षकी, कुत्तेकी आयु बारह वर्षकी और घोडेकी आयु बत्तीस वर्षकी होतीहै उक्त सब जीवोंकी जन्मसमयकी लग्न तथा ग्रहस्थापन करके आयु गिननेकी रीतिसे वत्सरादिनिर्णय करके हाथीआदिके पूर्वोक्त अपनी २ आयुद्वारा गुणन करै तदनन्तर गुणनफलको १२० से भागलेके भागफलद्वारा तिन हाथी आदिकी परमायु होतीहै ॥ ३९ ॥

अन्यच्च ।

समाः षष्टिर्द्विघ्ना मनुजकरिणां पञ्च च निशा
हयानां द्वात्रिंशत्खरकरभयोः पञ्चककृतिः ।
विरूपासत्वायुर्वृगमहिषयोर्द्वादश शुनः
स्मृतं छागादीनां दशकसहिताःषट् च परमम् ॥ ४० ॥(×)

इति दीपिकायाम् ।

अर्थ—अब दीपिकाके अनुसार मनुष्यादिकी परमायु कहते हैं—मनुष्य और

---

—प्रश्नलग्नादष्टमस्थः शुभैरयुतोऽदृष्टश्च यदि स्यात्तदा परदेशे रोगार्त्तो नरः स्यात्। यदि लग्नादष्टमे पापेन युक्तः शुभेनायुतोऽदृष्टश्च शनिः स्यात्तदा विदेशे रोगी भूत्वा मृत इत्यर्थः । देशान्तररोगोपशमनमाह दैवज्ञवल्लभायाम्–"उपचयगृहेषु चन्द्रे शुभेषु केन्द्रत्रिकोणनिधनेषु । शुभदृष्टे वा लग्ने रोगी देशान्तरे नीरुक्॥ " इति ।

(×) मानुषादीनां परमायुःप्रमाणमाह–समा इति । षष्टिर्द्विघ्ना विंशत्यधिकशतं पञ्च च निशाः पञ्च दिनानि च मानुषाणां गजानाञ्च परमायुःप्रमाणम् । अश्वानां द्वात्रिंशत् गर्दभोष्ट्रयोः पञ्चककृतिः पञ्चानां कृतिः पञ्चविंशतिः । स्वयं संगुणनं नाम कृतिरित्यभिधीयते । सा पञ्चकृतिर्विरूपा एकवर्जिता चतुर्विंशतिरित्यर्थः । गोमहिषयोः । वृक-

हाथीकी आयु एकसौ बीस वर्ष पांच दिनकी होती है,इसी प्रकार घोडेकी आयु बत्तीस वर्षकी ऊँट और गधेकी आयु पचीस वर्षकी, गाय और भैंसकी आयु चौवीस वर्षकी कुत्तेकी आयु बारह वर्षकी और छाग, मेष और मृगादिकी आयु सोलह वर्षकी होती है ॥ ४० ॥

अपरञ्च ।

**पथ्याशिनां शीलवतां नराणां सद्वृत्तिभाजां विजितेन्द्रियाणाम् ।**
**एवंविधानामिदमायुरत्र चिन्त्यं सदा वृद्धमुनिप्रवादः ॥ ४१ ॥**

इति सारावल्याम् ।

अर्थ-सारावली ग्रन्थमें लिखा है कि, जो पथ्याशी, सुन्दर स्वभाववाला, अच्छे प्रकारसे आजीविकाका निर्वाह करनेवाला और जितेन्द्रिय मनुष्योंकी उक्त एकसौ बीस वर्षकी परमायु होती है वृद्धऋषि मुनिने इस प्रकार कहा है॥४१॥

प्रकारान्तरञ्च ।

**वर्त्याधारस्नेहयोगाद्यथा दीपस्य संस्थितिः ।**
**विक्रियापि च दृष्टैवमकाले प्राणसंशयः ॥ ४२ ॥ (क)**

इति याज्ञवल्क्यः ।

अर्थ-भगवान् याज्ञवल्क्यजीने कहा है कि, तेल, शराव और बत्तीके होनेसेभी वायु आदिविक्रियासे जिस प्रकार दीपक बुझजाता है, उसी प्रकार अशुभकर्मके फल भोगनेसे आयु होनेसेभी नाकापर चढनेसे अमार्गमें जानेसे, युद्धमें प्रवृत्त होनेसे और अपथ्यादिके आहार करनेसे मृत्यु होजाती है ॥ ४२ ॥

अथ गतायुःपरीक्षा ।

**न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः ।**
**दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम् ॥ ४३ ॥**

इति ज्योतिस्तत्त्वे ।

अर्थ-जिस मनुष्यकी आयु गत होती है उसके लक्षण कहते हैं-ज्योतिष तत्त्वमें लिखा है कि, जिस मनुष्यकी मृत्यु निकट आजाती है उस मनुष्यको

---

-रस्य तु द्वादश । छागमेषमृगाणां दशसहिताः षट् च परमं षोडश वर्षाणि परमायुः स्मृतम् । अश्वादीनां पुरुषवदायुर्दाय कृत्वा विंशत्याधिकशतेन भागमपहृत्य यल्लब्धं तदश्वादीनां स्वकीयद्वात्रिंशद्वर्षादिभिः पूरितं तेषामायुर्दायः स्यादिति ॥

(क) यथा अविकलवर्त्यादिसत्त्वे प्रचण्डवातादिना दीपनाशस्तथा सत्यप्यायुषि अशुभकर्मवशान्नौकादुर्गमवर्त्मयुद्धापथ्याशित्वादिना प्राणनाशः ।

इति ज्योतिस्तत्त्वे मलमासतत्त्वे च स्मार्तैरभिहितम् ।

दीपक गुल होनेकी गन्ध नहीं जान पडती है, इसी प्रकार अपने मनुष्योंकी बातभी बुरी लगती है और आकाशमण्डलमें उस मनुष्यको अरुन्धतीका ताराभी नहीं दीख पडता है ॥ ४३ ॥

अथौषधकरणम् ।

द्व्यङ्गोदये गुरुबुधेन्दुसितेषु सत्सु (१)
वारे परे च सुविधौ सुतिथौ सुयोगे ।
भेपूग्रपन्नगविशाखशिवेतरेषु
जन्मर्क्षविष्टिरहितेष्वगदः शुभाय ॥ ४४ ॥ (२)

इति ज्योतिःसारसंग्रहे ।

अर्थ–अब औषध ( दवाई ) बनानेका मुहूर्त कहते हैं–ज्योतिःसारसंग्रहमें लिखाहै कि, द्व्यात्मक ( मिथुन, कन्या, धन और मीन ) लग्नमें बृहस्पति, बुध, चन्द्रमा और शुक्र स्थित होनेसे और इन सब ग्रहोंके वारमें और रविवारमें, शुभ-चन्द्रमा, शुभ तिथि और शुभयोगमें, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, मघा, भरणी, आश्लेषा, विशाखा और आर्द्रामिन्न नक्षत्रोंमें जन्मनक्षत्र और विष्टिकरणको छोडकर अन्यसमयमें औषध बनाना चाहिये ॥ ४४ ॥

अथौषधभक्षणम् ।

हस्तस्वातिमघामूलमृगभं पुष्य एव च ।
ज्येष्ठा शतभिषा चित्रा रेवती च तथाश्विनी ॥ ४५ ॥
श्रवणा चानुराधा च लग्ने मिथुनकन्यके ।
शुक्रेन्दुगुरुवारेषु भेषज्यपानमुत्तमम् ॥ ४६ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–अब औषध सेवन करनेका ( दवा खानेका ) मुहूर्त कहते हैं–ज्योतिःसारसंग्रहमें लिखाहै कि, हस्त, स्वाति, मघा, मूल, मृगशिर, पुष्य, ज्येष्ठा, शत-भिषा, चित्रा, रेवती, अश्विनी, श्रवण और अनुराधा नक्षत्रमें, मिथुन और कन्यालग्नमें शुक्र, सोम और बृहस्पतिवारमें औषधका सेवन करे ॥ ४५ ॥ ४६ ॥

---

( १ ) तेषामिति क्वचित्पाठः ।

( २ ) औषधकरणमाह–द्व्यङ्गोदय इति । द्व्यात्मकलग्ने तत्र च बुधगुरुचन्द्रशुक्रेषु सत्सु तेषां गुरुबुधेन्दुसितानां रवेश्च वारे सुतिथौ शुभचन्द्रे शुभयोगे उग्रगणे ११ । २० । २५ । १० । २ । आश्लेषा ९ विशाखा १६ आर्द्रा ६ एतदन्येषु नक्षत्रेषु जन्मनक्षत्रयोर्गतेषु विष्टिरहितेषु अगदमौषधं शुभाय स्यात् ।

अन्यच्च ।

दहनविधिधनिष्ठारेवतीस्वातिपुष्य-
हरिभमदितिचित्रामूलशाक्रोत्तरं च ।
दिनकरमनुराधा चाश्विनी सौम्यवारो
हरति सकलरोगान्भक्षणाच्चौषधस्य ॥ ४७ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ-ज्योतिःसारसंग्रहमें लिखाहै कि, कृत्तिका, रोहिणी, धनिष्ठा, रेवती, स्वाति, पुष्य, श्रवण, पुनर्वसु, चित्रा, मूल, ज्येष्ठा, उत्तराफाल्गुनी, उत्तराषाढा, उत्तराभाद्रपदा हस्त, अनुराधा और अश्विनीनक्षत्रमें और शुभ ग्रहोंके वारमें औषध खानेसे सभी रोगोंका नाश होजाताहै ॥ ४७ ॥

अपरञ्च ।

पौष्णाश्विनीहरिभशक्रसमीरपुष्य
हस्तादितीन्दुवसुमूलविशाखमित्रे । (क)
चित्रान्विते भृगुबुधेन्दुरवीज्यवारे
भैषज्यपानमचिरादपि हन्ति रोगान् ॥ ४८ ॥ ( ख )

इति ज्योतिस्तत्त्वे ।

अर्थ-ज्योतिषतत्त्वमें लिखाहै कि, रेवती, अश्विनी, श्रवण, ज्येष्ठा, स्वाति, पुष्य, हस्त, पुनर्वसु, मृगशिर, धनिष्ठा, मूल, विशाखा, ( मतान्तरमें कृत्तिका ) अनुराधा और चित्रा नक्षत्रमें, शुक्र, बुध, सोम, रवि और बृहस्पतिवारमें रोगी मनुष्य प्रथम औषध सेवन करनेसे शीघ्रही आरोग्य होताहै ॥ ४८ ॥

प्रकारान्तरञ्च ।

भैषज्यपानं गुरुसोमशुक्राः शुभे विलग्ने दिवसे रवेश्च ।
तिथावरिक्ते करणे च शस्ते योगे च लग्ने द्विशरीरसंज्ञे॥४९॥

इति भीमपराक्रमे ।

अर्थ-भीमपराक्रममें लिखाहै कि, बृहस्पति, सोम, शुक्र और रविवारमें, शुभ

( क ) हुताश इति पाठान्तरम् ।

( ख) औषधभक्षणमाह-पौष्णेति । पौष्णादिनक्षत्रेषु २७ । १ । २२ । १८ । १९ । ८ । १३ । ७ । ५ । १३ । १९ । १६ । १७ । १४ । शुक्रचन्द्रबुधरविगुरुवारेषु औषधभक्षणं रोगमचिरेण हन्ति ।

लग्नमें, रिक्ताभिन्न तिथियोंमें,शुभकरण और शुभयोगमें,द्व्यात्मकलग्नमें दवाईको खाना चाहिये ॥ ४९ ॥

अपिच ।

**रोहिण्यां चानुराधायां शस्तमौषधभक्षणम् ॥ ५० ॥**

इति ग्रन्थान्तरे ।

अर्थ-ग्रन्थान्तरमें लिखाहै कि, रोहिणी और अनुराधा नक्षत्रमें दवाई खाना प्रशस्तहै ॥ ५० ॥

अथ बस्तिविरेचनवेधः ।

**चित्रायुगे विधियुगे मित्रयुगे लघुषु वारुणे विष्णौ ।**
**बस्तिविरेचनवेधाः शुभदिनतिथिचन्द्रलग्नेषु ॥ ५१ ॥(ग)॥**

अर्थ-चित्रा, स्वाति, रोहिणी, मृगशिर, अनुराधा, ज्येष्ठा, पुष्य, अश्विनी, हस्त, शतभिषा और श्रवण नक्षत्रमें, शुभदिनमें, शुभतिथिमें चन्द्रमा शुद्ध होनेसे शुभ लग्नमें बस्तिविरेचन अर्थात् नाभिके अधोदेशमें व्यथा होनेसे दवा लगाना चाहिये ॥ ५१ ॥

अथारोग्यस्नानम् ।

**व्यादित्येषु चरेषु शक्रदिनकृत्पुष्योग्रचन्द्रेषु च**
**क्रूराहव्यतिपातविष्टिदिवसेष्विन्दावशस्ते तथा ।**
**केन्द्रस्थेष्वशुभेष्वकामतिथिषु स्नानं गदोन्मुक्तितः**
**स्नातं तत्र न शोभनो विधिभुजङ्गर्क्षेन्दुसद्धातराः ॥५२॥ (घ)**

अर्थ-अब आरोग्य होनेके बाद स्नान करनेका मुहूर्त्त कहते हैं-पुनर्वसुको

---

(ग) बस्तिविशोधनविरेचनव्रणादिवेधानां विधिमाह-चित्रेति । चित्रायुगे १४ । १५ । रोहिणी युगे ४ । ५ अनुराधायुगे १७ । १८ । लघुगणे ८ । १ । १३ । शतभिषायां २४ श्रवणायाञ्च २२ शोभनेषु वारतिथिचन्द्रलग्नेषु बस्तिविरेचनवेधाः कार्याः लिङ्गादूर्ध्वं नाभेरधोभागो बस्तिः । "बस्तिर्नाभेरधो द्वयोः" इत्यमरः । अत्र च बस्तिदेशे व्यथादौ जाते मण्डाद्यौषधदानेन बस्तिशोधनं क्रियत इति वैद्यकशास्त्रे प्रसिद्धेः । बस्तिशोधनकर्म विरेचनकर्म चान्तर्नाडीशोधनं विरेचनं वेधा व्रणादिवेधनञ्चकार्यमित्यर्थः। राजमार्त्तण्डे-"पुष्यो हस्तस्तथा ज्येष्ठा श्रवणा चोत्तराश्विनी । शुभान्येतानि धिष्ण्यानि वेधे बस्तौ विरेचने ॥" इति ।

(घ) आरोग्यस्नानमाह-व्यादित्य इति । पुनर्वसुवर्जितेषु चरगणेषु १५ । २२।२३। २४ । ज्येष्ठाहस्तपुष्योग्रगणे मृगशिरसि च क्रूराहे शनिरविमंगलवारे व्यतीपातयोगे विष्टौ गोचरशुद्धे चन्द्रे लग्नात्केन्द्रेषु अशुभेषु ग्रहेषु सत्स्वकामतिथिषु न विद्यते कामो यत्र अकामा रिक्ता तत्र गदोन्मुक्तितः रोगत्यागात्स्नानं प्रशस्तम् । राजमार्त्तण्डे-

छोडकर चरगणमें ( स्वाति, श्रवण, धनिष्ठा और शतभिषा नक्षत्रमें ) वा ज्येष्ठा नक्षत्रमें अथवा हस्त, पुष्य, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, मघा, भरणी और मृगशिर नक्षत्रमें क्रूर ग्रहोंके वारमें ( रवि, मङ्गल और शनिवारमें ) व्यतीपात योगमें विष्टिकरणमें गोचरमें चन्द्रमा अशुद्ध होनेसे, और लग्नके केन्द्रस्थानमें शुभग्रह स्थित होनेसे रिक्तातिथिमें आरोग्य होकर स्नान करना चाहिये, किन्तु रोहिणी और आश्लेषा नक्षत्रमें और शुभग्रहोंके वारमें कभी आरोग्य होनेके बाद स्नान न करे ॥ ९२ ॥

अन्यच्च ।

चन्द्राशुद्धौ व्यतीपाते भौमार्कशनिवासरे ।
व्रणमुक्तो व्याधिमुक्तः कृच्छ्रस्नानं समाचरेत् ॥ ९३ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ--ज्योतिःसारसंग्रहमें लिखा है कि, गोचरमें अशुद्ध चन्द्रमा होनेसे, व्यतीपात योगमें, मंगल रवि और शनिवारमें व्रणमुक्त और व्याधिसे मुक्त हुए मनुष्यको स्नान करना चाहिये ॥ ९३ ॥

अपरश्च ।

पूर्वात्रयं मघाश्लेषाभरणीकृत्तिकासु च ।
भद्रायां च तिथौ रिक्ते आरोग्यस्नानमाचरेत् ॥ ९४ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ--ज्योतिःसारसंग्रहमें लिखा है कि, पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, मघा, आश्लेषा, भरणी और कृत्तिका नक्षत्रमें, भद्रा ( द्वितीया, द्वादशी, सप्तमी ) और रिक्ता ( चतुर्थी, नवमी, चतुर्दशी ) तिथिमें आरोग्य होकर स्नान करना चाहिये ॥ ९४ ॥

आरोग्यस्नाननिषेधः ।

दशमी नवमी चैव प्रतिपच्च त्रयोदशी ।
तृतीया च विशेषेण स्नाने चैतान्विवर्जयेत् ॥ ९५ ॥

इति ज्योतिःसारसंग्रहे ।

---

--'जीवे शुक्रे बुधे चन्द्रे दिनेऽरिक्ते हिते तिथौ यः शुभैः कुरुते स्नानं रोगी रोगान्न मुच्यते' अत्र च रोहिणी आश्लेषा इन्दोश्चन्द्रस्य सद्ग्रहाणाश्च वाराः न शोभनाः प्रयत्नेन वर्ज्जनीया इत्यर्थः । सद्ग्रहाणामित्यनेन सिद्धे इन्दोः पृथगुपादानं क्षीणत्वेऽपि तस्य वारस्य वर्ज्जनार्थम् । प्रतिपदादितिथिनिषेधं विशेषेणाह--राजमार्त्तण्डे--"प्रतिपद्वा द्वितीया वा दशमी च त्रयोदशी । कृच्छ्रस्नानं न कुर्वीत यदीच्छेदात्मनो हितम् " इति ।

अर्थ–ज्योतिःसारसंग्रहमें लिखा है कि–सप्तमी, नवमी, प्रतिपदा, त्रयोदशी और तृतीया तिथिमें आरोग्य होकर स्नान न करना चाहिये ॥ ९५ ॥

अथ तैलाभ्यङ्गनिषेधः ।

अर्के नूनं हरति हृदयं कीर्त्तिलाभश्च सोमे
भौमे मृत्युर्भवति नियतं चन्द्रजे पुत्रलाभः ।
अर्थे हानिर्भवति हि गुरौ भार्गवे शोकयुक्तः
तैलाभ्यङ्गात्तनयमरणं सूर्यजे दीर्घमायुः ॥ ९६ ॥

इति ज्योतिःसारसंग्रहे ।

अर्थ–अब तेल लगानेके निषिद्ध वार कहते हैं–ज्योतिःसारसंग्रहमें लिखा है कि, रविवारमें तेल लगानेसे कष्ट होता है, इसी प्रकार सोमवारमें कीर्त्तिलाभ, मङ्गलवारमें मृत्यु, बुधवारमें पुत्रलाभ बृहस्पतिवारमें अर्थहानि, शुक्रवारमें पुत्र-शोक और शनिवारमें तेल लगानेसे दीर्घायु होती है ॥ ९६ ॥

प्रतिप्रसवो यथा ।

रवौ पुष्पं गुरौ दूर्वा भूमिं भूमिजवासरे ।
भार्गवे गोमयं दद्यात्तैलदोषोपशान्तये ॥ ९७ ॥ ( × )

इति ज्योतिःसारसंग्रहे ।

अर्थ–रविवारमें पुष्प ( फूल ) डालकर तेल लगाना चाहिये, इसी प्रकार बृहस्पति वारमें दूर्वा डालकर, मंगलवारमें मृत्तिका डालकर और शुक्रवारमें गोबर डालकर तेल लगाना चाहिये पुष्पादिवासित तेल लगानेसे दोष नहीं होता है इस प्रकार जोतिःसारसंग्रहमें लिखा है ॥ ९७ ॥

अन्यच्च ।

अतैलं सार्षपं तैलं यत्तैलं पुष्पवासितम् ।
अदुष्टं पक्वतैलंच स्नानाभ्यङ्गेषु नित्यशः ॥ ९८ ॥

इतिज्योतिःसारसंग्रहे ।

अर्थ–ज्योतिःसारसंग्रहमें लिखाहै कि, सरसोंके तेलको तेलसंज्ञा नहीं है, पुष्प-वासित तेल पक्वतेलको ( पकेहुए तेलको ) शरीरमें नित्य प्रति मालिसकरनी चाहिये, उसमें कुछ दोष नहीं है ॥ ९८ ॥

---

( + ) तैलपदं तिलतैलपरमिति हृदयानन्दः ।

अथ साधारणकार्ये वारादिव्यवस्था ।

**शुक्रेन्दुबुधजीवानां वाराः सर्वत्र शोभनाः ।**
**भानुभूसुतमन्दानां शुभकर्मसु केष्वपि ॥ ५९ ॥**

अर्थ-शुक्र, सोम, बुध और बृहस्पतिवार सभी कर्ममें शुभफलप्रदान करते हैं, रवि, मंगल और शनिवारमें कोई २ शुभकर्म प्रशस्त हैं ॥ ५९ ॥

अपिच ।

**सर्वत्र कार्ये बुधजीवशुक्राः केन्द्रत्रिकोणोपगताः प्रशस्ताः ।**
**तृतीयलाभारिगताश्च पापास्तिथीर्विरिक्ताशुभदस्य चाहः॥६०॥(×)**

अर्थ-कर्म करनेके समय लग्नमें वा लग्नके चौथे, सातवें वा दशवें स्थानमें बुध बृहस्पति और शुक्रके होनेसे, तीसरे, ग्यारहवें और छठे स्थानमें पापग्रह होनेसे रिक्ताभिन्न तिथिमें और शुभग्रहोंके वारमें प्रायः सभी कर्म करना चाहिये ॥ ६० ॥

अन्यच ।

**निरंशं दिवसं विष्टिं व्यतीपातश्च वैधृतिम् ।**
**केन्द्रश्चापि शुभैः शून्यं पापाहमपि वर्जयेत् ॥ ६१ ॥ (१)**

अर्थ-निरंश अर्थात् रविसंक्रान्तिदिन, विष्टिभद्रा, व्यतीपात और वैधृतियोग ( केन्द्रमें शुभग्रह न होनेसे उस लग्नमें ) और पापग्रहोंके वारमें कोई कार्य न करना चाहिये ॥ ६१ ॥

अपरश्च ।

**इन्दुष्टमगान्पापान्वर्जयेन्नैधनं विलग्नश्च ।**
**चन्द्रश्च निधनसंस्थं सर्वारम्भप्रयोगेषु ॥ ६२ ॥**

अर्थ-सभी कार्यमें चन्द्रगत पाप ग्रह और लग्नगत पापग्रहको परित्यागकरै और चन्द्रमाके वा लग्नके आठवें पापग्रहोंकोभी परित्याग करना चाहिये॥६२॥

---

× साधारणसर्वकर्मसु ग्रहाणा शुद्धिमाह-सर्वत्रेति । शुभदस्य शुभग्रहस्याहः वारः शस्त इत्यर्थः । अत्र शुभदस्येत्यनेन गोचरे दशायां वा शुभफलदायकस्य पापस्यापि वारः शुभ इत्यर्थः ।

( १ ) सर्वकर्मस्वन्यानपि वर्जनीयानाह-निरंशमिति । निरंश रविणांशं शून्यीकृत दिनं रवेः सञ्चारदिन नान्यस्येत्यर्थः । तथाच राजमार्तण्डे-" अस्त प्रयाते च भृगौ गुरौ वा सूर्ये निरंशे हिमगौ प्रणष्टे । न कूपवाप्यादिकमन्दिराद्यं शुभं प्रदिष्ट धनकीर्त्तिनाशात् " इति । शुभैरिति बहुवचनमविवक्षितं यत्किञ्चिदपि केन्द्रं शुभमात्रेण युत चत्तदा न दोष इत्यर्थः । पापाहं पापवारम् एतेन पापयोश्चन्द्रबुधयोर्दिनमपि वर्जयेदित्यर्थः । इति ।

अथ रविसंक्रान्तिकथनम् ।

विषुवन्मेषतुलयोरयनं मकरे रवौ कुलीरे च ।
षडशीतिर्द्विशरीरे विष्णुपदी च स्थिरे राशौ ॥ ६३ ॥ (अ)

अर्थ—अब संक्रान्तिकी संज्ञा कही जाती है-मेष और तुलाकी संक्रान्तिको विषुवसंक्रान्ति कहते हैं, मकर और कर्कको संक्रान्तिको अयनसंक्रान्ति कहते हैं, मिथुन, कन्या, धन और मीन संक्रान्तिको षडशीतिसंक्रान्ति कहते हैं और वृष, सिंह, वृश्चिक और कुम्भ संक्रान्तिको विष्णुपदी संक्रान्ति कहते हैं ॥६३॥

अन्यच्च ।

मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने । (आ)
विषुवती तुला मेषे गोलमध्ये तथापराः ॥ ६४ ॥
धनुर्मिथुनकन्यासु मीने च षडशीतयः ।
वृषवृश्चिकसिंहेषु कुम्भे विष्णुपदी स्मृता ॥ ६५ ॥

इति भविष्यमात्स्ययोः ।

अर्थ—भविष्यपुराणमें और मत्स्यपुराणमें लिखाहै कि, मकर संक्रान्तिको उत्तरायणकी संक्रान्ति कहते हैं, इसीप्रकार कर्क संक्रान्तिको दक्षिणायन तुला संक्रान्तिको जलविषुव, मेष संक्रान्किो महाविषुवसंक्रान्ति कहते हैं, राशिचक्रके मध्यमें अन्यान्यसंक्रान्ति अर्थात् धन, मिथुन, कन्या और मीन संक्रान्तिको षडशीतिसंक्रान्ति कहते हैं और वृष, वृश्चिक, सिंह और कुम्भ संक्रान्तिको विष्णुपदी संक्रान्ति कहते हैं ॥ ६४ ॥ ६५ ॥

अपरञ्च ।

अयने द्वे विषुवे द्वे चत्वारि षडशीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥ ६६ ॥

इति ज्योतिःसारे ज्योतिःसारसंग्रहे च ।

अर्थ—ज्योतिःसारमें और ज्योतिःसारसंग्रहमें लिखाहै कि, दो अयन संक्रान्ति दो विषुवसंक्रान्ति, चार षडशीतिसंक्रान्ति और चार विष्णुपदीसंक्रान्ति सब बारह संक्रान्ति होती हैं ६६ ॥

(अ) रविसंक्रान्तीनां संज्ञामाह-विषुवदिति । मेषतुलास्थे मेषप्रवेशे तुलाप्रवेशे चेत्यर्थः । एवमन्यत्रापि ।

(आ) "महाविषुवमाख्यात मेषराशौ रवेर्गतौ । जलविषुवन्तुलायां कर्कटे दक्षिणायनम् । उत्तरायणमप्युक्तं मकरस्थे रवौ तथा " इति ज्योतिःसारे ।

अथ संक्रान्तिक्रमः ।

**विषुवविष्णुपदीषडशीतयोऽयनविष्णुपदीषडशीतयः ।**
**विषुवविष्णुपदीषडशीतयोऽयनविष्णुपदीषडशीतयः ॥ ६७ ॥**

इति जातकचन्द्रिकायाम् ।

अर्थ-जातकचन्द्रिकामें लिखाहै कि, महाविषुव, विष्णुपदी, षडशीति, दक्षिणायन विष्णुपदी, षडशीति, जलविषुव, विष्णुपदी, षडशीति, उत्तरायण, विष्णुपदी और षडशीति यह बारह संक्रान्ति क्रमानुसार बारह राशिमें होती हैं ॥ ६७ ॥

अथ संक्रान्तीनां नक्षत्रघटितमन्दादिसंज्ञाः ।

**मन्दा मन्दाकिनी ध्वांक्षी घोरा चैव महोदरी ।**
**राक्षसी मिश्रिता प्रोक्ता संक्रान्तिः सप्तधा नृप ॥ ६८ ॥**

इति तिथितत्त्वे ।

अर्थ-अब संक्रान्तिकी विशेषसंज्ञा कहते हैं-तिथितत्त्वमें लिखा है कि, मन्दा, मन्दाकिनी, ध्वांक्षी, घोरा, महोदरी, राक्षसी और मिश्रिता यह सब संज्ञा विषुवादिसंक्रान्तिकी नक्षत्रविशेषमें होती हैं, उनको नीचे लिखा है ॥ ६८ ॥

**मन्दा ध्रुवे सुविज्ञेया मृदौ मन्दाकिनी तथा ।**
**क्षिप्रे ध्वांक्षी विजानीयादुग्रे घोरा प्रकीर्त्तिता ॥ ६९ ॥**
**चरेमहोदरी ज्ञेया क्रूरैर्क्षैश्च राक्षसी ।**
**मिश्रिता चैव विज्ञेया मिश्रितर्क्षैश्च संक्रमे ॥ ७० ॥**

इति तिथितत्त्वे ।

अर्थ-अब तिथितत्त्वके अनुसार मन्दादिसंक्रान्ति कही जाती हैं-उत्तराफाल्गुनी उत्तराषाढा, उत्तराभाद्रपदा और रोहिणीनक्षत्रमें संक्रान्ति लगनेसे उसको मन्दा संक्रान्ति कहते हैं, इसी प्रकार चित्रा, अनुराधा, मृगशिर और रेवती नक्षत्रमें संक्रान्तिके लगनेसे उसको मन्दाकिनी संक्रान्ति, पुष्य, अश्विनी और हस्तनक्षत्रमें संक्रान्तिके लगनेसे उसको ध्वांक्षी संक्रान्ति; पूर्वाफाल्गुनी, पूर्वाषाढा, पूर्वाभाद्रपदा, मघा और भरणीनक्षत्रमें संक्रान्तिके लगनेसे उसको घोरा-संक्रान्ति, स्वाति, पुनर्वसु, श्रवण, धनिष्ठा और शतभिषानक्षत्रमें संक्रान्तिके लगनेसे उसको महोदरी संक्रान्ति, आश्लेषा, आर्द्रा, ज्येष्ठा और मूलनक्षत्रमें संक्रान्तिके लगनेसे उसको राक्षसी संक्रान्ति और कृत्तिका तथा विशाखानक्षत्रमें संक्रान्तिके लगनेसे उसको मिश्रिता संक्रान्ति कहते हैं ॥ ६९ ॥ ७० ॥

अथ संक्रान्तीनां पुण्यकालः ।

**षडशीतिमुखेऽतीते वृत्ते च विषुवद्द्वये ।**
**भविष्यत्ययने पुण्यमतीते चोत्तरायणे ॥ ७१ ॥**

इति तिथितत्त्वे ।

अर्थ--अब तिथितत्त्वके अनुसार संक्रान्तिका पुण्यकाल कहते हैं-षडशीति-संक्रान्ति और विषुवसंक्रान्तिमें संक्रान्ति लगनेके उपरान्त पुण्यकाल होता है; इसी प्रकार दक्षिणायनसंक्रान्तिमें संक्रान्ति लगनेके पूर्वमें और उत्तरायणसंक्रा-न्तिमें संक्रान्ति लगनेके बाद पुण्यकाल होता है ॥ ७१ ॥

**यावद्विंशकलाभुक्ता तत्पुण्यं चोत्तरायणे ।**
**निरंशे ( १ ) भास्करे दृष्टे दिनान्तं दक्षिणायने ॥ ७२ ॥**

इति देवीपुराणे ।

अर्थ-देवीपुराणमें लिखा है कि, उत्तरायणसंक्रान्तिमें संक्रांतिके लगनेसे बीसदण्डतक पुण्यकाल होता है, और दक्षिणायनसंक्रान्तिमें संक्रान्ति लगनेके पूर्वमें तीस दण्ड पुण्यकाल होता है ॥ ७२ ॥

**त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः ॥७३॥ (क)**

इति वृद्धवसिष्ठः ।

अर्थ-वृद्धवशिष्ठने कहा है कि, दक्षिणायन ( कर्कको ) संक्रान्तिमें तीस दण्ड ( घडी ) पुण्यकाल होता है और मकर अर्थात् उत्तरायणकी संक्रान्तिमें बीस दण्ड पुण्यकाल होता है ॥ ७३ ॥

**अर्वाक्षोडश विज्ञेया नाड्यः पश्चाच्च षोडश ।**
**कालः पुण्योऽर्कसंक्रान्तेर्विद्वद्भिः परिकीर्त्तितः ॥ ७४ ॥**

इति शातातपः ।

अर्थ-शातातपने कहा है कि, रविसंक्रान्तिमें संक्रान्ति लगनेके पूर्वमें सोलह दण्ड और उपरान्त सोलहदण्डतक पुण्यकाल होता है, इस प्रकार विद्वानोंका अभिप्राय है ॥ ७४ ॥

---

( १ ) निरंशोंऽशशून्ये संक्रान्तिकाले हि भास्करोंऽशरहितो भवति तस्मिन् दृष्टे दिनेति यावत्दिनञ्च दिनकरसंस्कृतास्त्रिंशन्नाडिका इति ज्योतिर्विदः । इति तिथितत्त्वे स्मार्त्ताः ।

( क ) नाडी दण्डः तथाच सूर्यसिद्धान्तः "उत्पलाद्विपल षष्ट्या विपलात्तु पल नयेत् । पलात्षष्ट्या नयेन्नाडीं तत्षष्ट्या [illegible] स्यैर्दिनम् " इति तिथितत्त्वे ।

